THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 315.

# आर्यासप्तशती

पर्वतीयश्रीविश्वेश्वरपण्डितविरचिता
तत्कृतयैव टीकयोपेता ।

नेपालदेशीय-
विष्णुप्रसादभण्डारिणा
संशोधिता ।

# ARYÂSAPTÂSATI

By

PARVATIYA SRI VISVESVARA PANDIT.

With a commentary by the author,

*Edited by* Vishnu Prasada Bhandari,
*of Nepal.*

FASCICULUS 1-२.

*PUBLISHED & SOLD BY THE SECRETARY*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG: GERMANY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1924.

श्रीविश्वेश्वरपण्डितकृता

# आर्यासप्तशती ।

॥ श्रीगणेशाय नमः ॥

गौरीकुचानुबिम्बितमात्मीयविषाणमुपवर्ण्य ।
कर्षन्बालमृणालभ्रान्त्या द्वैमातुरः पातु ॥ १ ॥

शब्दार्थरूपकमशेषमिमं प्रपञ्चं
यस्यावदच्छ्रुतिशिरो विबुधा ! विवर्तम् ॥
तत्किञ्चिदक्षरमनन्यपरप्रकाशं
संवित्प्रमोदमयमाकलयामहेऽन्तः ॥ १ ॥

अज्ञानगाढतिमिरक्षतिभास्करेषु
विद्यावलीवितरणात्रिदशद्रुमेषु ॥
लक्ष्मीधरस्य विदुषश्चरणारविन्दा-
दुत्तस्थिषत्सु नतयो रजसां कणेषु ॥ २ ॥

विद्वज्जनविनोदाय बालधीवृद्धिसिद्धये ॥
व्याख्यात्यार्यासप्तशतीं सम्यग्विश्वेश्वरो निजाम् ॥ ३ ॥

तत्र—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥"

इत्यालङ्कारिकवचनादनेकविधस्वपरनिष्ठफलजनकतयार्यासप्तशतीमारिप्सुः प्रारिप्सितप्रतिबन्धकदुरितवितानोपशमसमर्थतया सर्वसिद्धानुभावस्य भगवतो हेरम्बस्यानुसन्धानरूपं कृतं

मङ्गलं शिष्याशिक्षार्थमुपनिबध्नाति—गौरीति। अत्र "कः खो गो घश्च लक्ष्मीं वितरति" इति भामहवचनादादौ गकारः शुभफलः। तगणस्य तूदासीनत्वेऽपि—

"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः।
ते सर्वे नैव निन्द्याः स्युर्गणतो लिपितोऽपि च॥"

इति वचनाद्गौरीपदस्यादौ प्रयोगान्न दोषः। प्रतिबिम्बितविषाणे मृणालभ्रान्तिसत्त्वेऽपि तदनर्थिनस्तत्र प्रवृत्त्यनुत्पत्तेस्तदाकर्षणं गजमुखत्वेनोपपद्यते। अत्र बाल्यावच्छिन्नस्य तस्य वर्णनीयतया भ्रान्तिकथनं नापकर्षमावहति। तत्स्वभाववर्णनपर्यवसानात्। अत एव प्राचीना अप्यवर्णयन्—

"दर्पाद्दन्तविदारितेश्वरगिरिप्रान्तावनीरन्ध्रतः
पत्युः कुण्डलिनो फणामणिमहस्तोमे समुत्तस्थुषि।
रत्नस्तम्भ इति भ्रमेण करटं कण्डूयितुं वाञ्छतो
हेरम्बस्य जयन्ति कूणितदृशो मूर्ध्नो मुधाधूतयः॥"

किंचानेन तस्य ब्रह्मरूपतयाऽविद्यासम्बन्धेन जगदाकारतया विवर्तोऽपि सूच्यते। "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादौ तस्या ब्रह्मसम्बन्धश्रवणात्। अनुबिम्बितमित्यनेन पार्वत्याः स्तनयोर्निर्मलत्वसूचनम्। स्वमुखस्थ एव दन्ते विशेषदर्शनसत्त्वेन मृणालभ्रमो न सम्भवतीत्यतो गौरीत्यादि। बालकतया तत्सन्निधानस्य सार्वदिकत्वात्। अनेन कुचयोः कमलमुकुलाकारत्वमप्याक्षिप्यते। तत्सन्निधिना विषाणे तत्सहचरमृणालभ्रमोपपत्तेः। अत्र देवताविषयकभावध्वनिः। तत्र भ्रान्तिमतोऽनुगुणत्वम्। जगन्मातृक्रोडक्रोडनादिना तदुत्कर्षाक्षेपात्। तत्स्वरूपं चास्मत्कृतालङ्कारकौस्तुभे यथा—

"तदभाववति मतिस्तत्प्रकारिका भ्रान्तिमान् भवति"॥१॥

इदानीं "शब्दस्वरूपमखिलं धत्ते शर्वस्य वल्लभा ।

अर्थस्वरूपमखिलं धत्ते बालेन्दुशेखरः ॥" इतिवायुपुराणात् "अर्थः शम्भुः शिवा वाणी" इतिलिङ्गपुराणाच्च शब्दार्थोभयरूपे काव्ये तदुभयोपपत्तये तावेवानुसन्दधाति ।

**लङ्कापतिभुजवल्लीवेष्टितमवलोक्य कैलासम् ।**
**स्मृतकालीबाहुलतावलम्बितनिजविग्रहः शिवो जयति**

लङ्केति । अत्र वेष्टनं कैलासोद्धरणकालीनं बोध्यम् । राक्षसानां श्यामवर्णतया औत्सर्गिकतायास्तल्लाभः तेन कालीभुजसाम्यम् । कैलासशिवयोः श्वैत्यात्साम्यम् । अत्र स्मरणकालीनो विप्रलम्भः तद्विषयभूतश्च सम्भोगो द्योत्यते । तयोरत्र वर्णनीयत्वात् । निजपदेन शिवग्रहणम् । तद्विशेषणघटकपदान्तर्गतत्वात् । अन्यस्य तदुद्धरणसामर्थ्याभावात् लङ्कापतीति । कुबेरात्तदादानादिव्यञ्जनेन तदुत्कर्षाक्षेपः । तादृशेनाप्याक्रमात्रयोन्मूलनारम्भेऽनाकुलत्वादनुभावातिशयः । यस्य यः स्वभावः स सर्वावस्थासु तमेवाश्रयत इति शिवपदसहकारेण सुखाधीनत्वोक्त्या व्यज्यते । एतेन महतां सर्वमपीष्टावहमेव भवतीति द्योतितम् । शिवस्यापि तादृशावस्थास्मरणेनैव सर्वोत्कर्षवर्णनेन शृङ्गारस्यात्यातिशयो व्यङ्ग्यः ॥ २ ॥

शिवयोः सम्बन्धवत्तया नित्यसम्बन्धत्वस्याभिप्रायेण सहजतः सम्बन्धमुक्त्वा शक्तिग्रहाद्यभावादंशेन तदवान्तरसम्बन्धग्रहं सूचयन्स्तौति द्वाभ्याम् ।

**वृषकेतनस्य हृदये चरणस्रग्जयति गिरिभुवा निहिता ।**
**कुण्डलनेवानङ्गप्रतिकूलाशेषवृत्तीनाम् ॥ ३ ॥**

हृदयपदेन चित्तवक्षसोरैक्यारोपः । चरणं तस्य भर्तृत्वा-

भ्युपगमसूचकव्यापारः । स्वयंवरे तद्वरणमितिकथा लिङ्गपुराणे । कुण्डलना प्रत्याख्यानसूचनरेखाविशेषः । तस्य पूर्वं कामप्रतिकूलत्वलाभाय—अनङ्गेति । तद्देहनाशस्य भगवता कृतत्वात् । एतेन तदुत्तरं तस्य कामपारवश्यसूचनम् । अशेषपदेन तस्य कादाचित्कत्वनिरासः । अत्र वृषकेतनपदेन कुत्रचित् ग्रामीणे कस्याश्चिदुत्तमनायिकाया अनुरागवृत्तान्तप्रतीतेः समासोक्तिः । तयाच प्रेम्णो बाह्यानपेक्षत्वरूपवस्तुव्यञ्जनमित्यलङ्कारेण वस्तुध्वनिः । वृषपदस्य धर्मवाचकतया तत्प्रधानस्य वरणीयत्वप्रतीत्या च पुण्यवतस्त्वेव नायिका अनुरज्यन्तीति व्यज्यते ॥ ३ ॥

हैमवतीकरशाखामिलितकरो नीललोहितो जयति ॥
स्थाणुरपि भासमानः पल्लवितुं कृतसमारम्भः ॥ ४ ॥

"अङ्गुल्यः करशाखाः स्युः" इत्यमरः । पाणिग्रहणकालीनमेतत् । तत्र द्वयोः पाणियोगविधानेऽपि गौर्या भयेन हस्तसङ्कोचादङ्गुलीमात्रमेव संयुज्यत इति व्यञ्जयितुं करशाखेति । स्थाणुः शाखादिरहितो वृक्षस्कन्धः । एकपदोपादानमूलकाभेदाध्यवसायेन अङ्गुलीकरसंयोगजन्याशिवतत्संयोगेन पल्लवितत्वोत्प्रेक्षा । अथ च स्थाणुः सर्वविकाररहितोऽपि नायिकाकरग्रहणेन पल्लवितुं कामुकीभवितुमारब्ध इत्यर्थः । एतेन कामस्य सर्वविक्षोभकत्वसूचनम् । यदाह—

"अन्येषु जन्तुषु रजस्तमसावृतेषु
विश्वस्य धातरि समः परमेश्वरेऽपि ।
सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथञ्चिदपन्हुतिर्भूत्" ॥ ४ ॥

"आदौ वाच्यः स्त्रिया रागः पश्चात्पुंसस्तदिङ्गितैः"। इति साम्प्रदायिकोक्त्या नायिकारागस्य प्रथमं वर्णनीयतया तथैव परामृशति—

**चुम्बितमन्मथशासनललाटनयना गिरीन्द्रजा जयति ।**
**रतिरिव वैरावेशात्तदभिगलितुमभिमुखीभूता ॥ ५ ॥**

मन्मथशासनः(कामनाशनः) । पाकशासनादौ शास्तेर्हिंसार्थदर्शनात् । एतेन तस्य कामनाशनत्वोक्त्या तत्साधनीभूतनयनस्य रत्या सह वैरबीजमुक्तम् । ललाटनयनेनैव कामस्य दाहात्तद्भिगरणप्रवृत्तरतितादात्म्योत्प्रेक्षा । तदिति ललाटनयनमित्यर्थः । अत्र शिवस्यैव गौर्यनुरागविषयतया रतिवैरस्य च नेत्रमात्रविषयकतया विवक्षितत्वात् भिन्नविषयतया विरोधाभावात् तस्यां रतितादात्म्यारोपो नानुपपन्न इति मन्तव्यम् ॥ ५ ॥

इदानीं शिवस्य तमाह—

**शर्वाधरमालिन्यान्मालिन्या विजयते हसितम् ।**
**शर्वाणीवदनाम्बुजविनिगूहनचन्द्रिकायमाणं तत् ॥६॥**

हासहेतुभूतगौरीनयनचुम्बनानुमापकतया मालिन्यादिति पञ्चमी । "खारीशतम्"इत्यादिभाष्यप्रयोगबलेन गुणेन सह षष्ठीसमासनिषेधस्यानित्यत्वावगमादधरस्य मालिन्यमिति समासः । मालिन्याः पार्वतीसख्या इत्यर्थः । तदीयहसितेन मालिन्यहेतुकस्वनयनचुम्बनज्ञानमनुमाय लज्जया मुखगोपनमित्यर्थकमुत्तरार्द्धम् । वदनाम्बुजेत्युपमामूलिका हासस्य चन्द्रिकोपमेति परम्परितोपमा ॥ ६ ॥

तयोः परिरम्भं सूचयन्नाह—

**अनुभूतमन्दराचलपरिणाहो यज्ञसूत्रमीशस्य ॥**
**वासुकिरुमाकुचद्वयपरिमण्डलविस्मितः पातु ॥ ७ ॥**

यदपेक्षया कुचोत्कर्षस्तदनभिज्ञस्योत्कर्षज्ञानासम्भवादाह-अनुभूतेत्यादि। साक्षात्कारपरमनुभवपदम्। अमृतमथनप्रकरणे-"मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्" इतिपुराणोक्तेः। तथाप्युत्कर्षोऽत्रज्ञानरहितस्य तन्न स्यादित्यत आह—यज्ञेत्यादि। तथाच कुचपरिमाणज्ञानमनुपपन्नमिति भावः। परिमण्डलं परिणाहः। एतादृशस्य रक्षायां सामर्थ्यादितिभावः ॥ ७ ॥

तयोः सुरतान्तावस्थां द्योतयन्स्तौति—

**देवासुरकृतमन्दरकर्षणशिथिलीकृताखिलावयवः ॥**
**वासुकिरचलेन्द्रसुतानिःश्वासास्वादतुन्दिलो जयति॥८॥**

पूर्वार्द्धेन श्रमहेतुकथनम्। आकर्षणाल्पत्ववारणाय देवासुरेति। तत्प्रयुक्तेन मनुष्यादिना कर्षणे कृते तथा घर्षणाभावात् कृतेति। कर्षणीयद्रव्यस्य मृदुत्वे पीडाविशेषाभावात् मन्दरेति। संयोगमात्रवारणाय कर्षणेति। पूर्ववदेवात्र निःश्वासास्वादनोपपत्तिः। सर्पाणामनिलाशनतया तदीयनिःश्वासरसनेन तस्य श्रमनाश उचित इतिभावः। एतेन महदाश्रयस्यानर्थोपशामकत्वव्यञ्जनम्। अत्रायमर्थः। वासुकिपदेन कश्चिद्योगी बोध्यते। विशेषणसामर्थ्यात्स जयति। आत्मतत्त्वसाक्षात्कारेण सर्वातिशयितत्वात्। स प्रथमं कीदृशः। देवासुरपदेन नानाविधयोनिसूचनम्। कृतशब्देन कर्मग्रहणं तदेव मन्दरोऽद्रिरतिगुरुत्वात्। नानायोनिषु कर्महेतुकं यत्कर्षणं संसरणम्।

"आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः" इतिश्रुतेः। तेन शिथिलीकृतचित्तः निर्विण्ण इतियावत् । तदाह श्रुतिः—"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्"। इति । अचल एकरूपो विकाररहित इन्द्र आत्मा तं सौति ज्ञानविषयं जनयतीति सुत् । षु प्रसवैश्वर्ययोरित्यस्य क्विपि रूपम् । अचलेन्द्रस्य सुदिति कर्मषष्ठ्या समासः । तादृशेन ब्रह्मज्ञेन गुरुणेत्यर्थः । हेतौ तृतीया । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इतिश्रुतेः । निःश्वास आत्मा । "अप्राणो ह्यमनाः शुभ्र" इतिश्रुतेः । तस्यास्वादेन ज्ञानेन वृत इति दिक् ॥ ८ ॥

द्वाभ्यां मन्दरविहारोद्भावनेन स्तौति ।

**धूर्जटिकलेवररुचिज्योत्स्नाविशदप्रदेशगतम् ।**
**मन्दरमालोक्य पयोनिधिमथनस्मरणमद्रिपतेः पातु ॥९॥**

भगवदङ्गप्रभाप्रवाहेण मन्दरगिरेः सर्वतो व्याप्तत्वात्क्षीरोदधिमध्यगतमिव मन्दरमुत्प्रेक्ष्य समुद्रमन्थनं स्मृतमित्यर्थः । स्मरणालङ्कारः । तदुक्तमलङ्कारकौस्तुभे—

"सदृशज्ञानोद्बोधितसंस्कारभवा मतिः स्मरणम्" । इति ।

रुचौ ज्योत्स्नारूपकेण श्वैत्यसूचनम् ॥ ९ ॥

**मन्दरविहारिणि हरे गौरीलावण्यरूपणरतानाम् ॥**
**दृष्टश्रीरूपाणां वनदेवीनां जयन्ति दृग्भङ्गाः ॥ १० ॥**

तस्याः केवलाया गमनानौचित्यात् मन्दरेत्यादि । दर्शनमात्रार्थगमने एकाकिनोऽपि गमनसम्भवात्तद्वारणाय विहारिणीति । रूपणं तारतम्यपरिच्छेदः । उत्कर्षावधिज्ञानाय दृष्टेत्यादि । मन्दरेण मथितादब्धेः श्रीसमुत्पत्तेस्तासां तद्दर्शनोप-

पत्तिः। वनदेवीनां वनाधिष्ठातृदेवतानामित्यर्थः॥ १० ॥

सम्भावितविजातीयविघ्ननिरासाय स्कन्दमनुसन्दधाति।

**ग्रैवेयकनखरिकरजभ्रमविषयो हरकिरीटखण्डेन्दुः॥**
**तारकराजमतेरिव तारकारिपुणा हृतो जयति॥ ११ ॥**

बालानां ग्रीवाभूषायां सिंहनखा अपि ग्रथ्यन्ते। स्वकीयकण्ठाभरणस्थसिंहनखभ्रान्त्या भगवता स्कन्देन हरशिरश्चन्द्रकला समाकृष्टा। तत्र हेतुरुत्तरार्द्धेनोत्प्रेक्ष्यते। इन्दुर्हि तारकराजो नक्षत्रपतित्वात् स्कन्दस्तु तारकारिपुस्तद्धन्तृत्वात्। अतस्तारकराजोऽयमिति ज्ञानादिव हृत इत्यर्थः। तारकराजेति-कर्मधारयः षष्ठीसमासो वा द्वितीयार्थे कार्यः। आद्ये वैरिसम्बन्धित्वादन्त्ये वैरिस्वरूपत्वाच्च हरणोपपत्तिः। अत्र विशेषणतया स्कन्दसङ्कीर्तनं विशेष्यतया तु चन्द्रस्य। तत्र भरतः—

"चन्द्रसङ्कीर्त्तनं यत्र तदधीनो रसो मतः॥
स्फीते चन्द्रमसि स्फीता रसश्रीरिति भालुकिः॥"

अनेन महात्मनां यो विरोधविषयस्तत्सम्नाम्नामपि भयं भवतीति व्यञ्जितम्॥ ११ ॥

शिवसम्बन्धेनैवाह—

**भालविलोचनदहनज्वालाभिर्मन्मथे समालीढे॥**
**कुसुमितकिंशुककाननगत इति सुरभेर्भ्रमो जयति॥ १२॥**

भालस्य विलोचनमिति समासे भाले शिवसम्बन्धित्वज्ञानमौचित्यादेव। बहुव्रीहौ तु दहनस्य भालसम्बन्धित्वम्। तस्माद्दृश्यते दहनार्चिषां पुष्पितपलाशसादृश्याद्वसन्तस्य तथाविधा भ्रान्तिः। अन्यदा तस्य तत्रावस्थानसहचारस्य गृहीतत्वात्। कामस्य दाहेऽपि सामर्थ्यानपायात्तस्य तत्कथनं नानुचितमिति ज्ञेयम्। तदु-

क्तम्—

"कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने॥
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥" इति।

एतेन रागगृहीताः कार्यनाशेऽपि तदाशां न त्यजन्तीति सूचितम्॥ १२॥

वसन्तस्यान्यापेक्षयोद्दीपकत्वविशेषं सूचयन्नाह—

**तुहिनमहीधरदुहितरि महिततमग्रहिलभावसहितायाम्**
**अतिसौरभस्य कुसुमामोदिन्या सुमनसः प्रकाश्यन्ते १३**

महिततमः= दीर्घतमसमयमभिव्याप्य कर्तुमिष्यमाणः। ग्रहिलभावः=मानः। वसन्तबुद्ध्या समुद्दीपितमदना अनुनयोत्तरमेव मानं त्यजत्वित्यभिप्रायेणोक्तम्। असमय एव रसालकुसुमानि प्रकाश्यन्ते स्वप्रभावादितिभावः कुसुमामोदिनीति हिमाद्रेरधिष्ठात्र्या देवतायाः संज्ञा। तथाच मत्स्यपुराणे देवीं प्रति तदुक्तिः—

"कुसुमामोदिनीं नाम वनस्याप्यधिदेवताम्।" इति।

अतिसौरभस्य सम्बन्धिनः सुमनस एव भवन्तीति सौन्दर्यातिशयवतां मानदैर्घ्यमयुक्तमिति व्यज्यते। एतेन सखीनां मानत्याग एव प्रवृत्तिर्युक्ता न तु तन्निर्बन्धे सखीकार्यप्रतिकूलत्वादिति सूचितम्॥ १३॥

इदानीं प्रकृतकाव्यस्य शृङ्गारपरतया "शृङ्गारो विष्णुदैवतः" इति भरतवचनादौचित्येन नारायणकीर्तनमयं मङ्गलमारभते।

"नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी।"

इतिविष्णुपुराणात्तत्सहचरितत्वेन कीर्तयितुं क्रमेणाह—

**मन्दरकोटिविमर्दोत्तेजितकेयूरमणिकृतविन्यातः॥**
**श्रीपरिरम्भोपनतेर्हरिभुजयोर्जयति हास इव॥१४॥**

अमृतमन्थनार्थं मन्दरस्योत्तोलनसमये तच्छिखरसङ्घट्टनेन उत्तेजिता अधिकतेजस्काः कृता ये केयूरसम्बन्धिमणयः तत्प्रभासमूहः सन्निहितलक्ष्मीपरिष्वङ्गसम्भावनाजन्यसुखहेतुकहासतादात्म्येनोत्प्रेक्ष्यते । परिरम्भस्य बाहुसाध्यत्वाद्धासादि तन्निष्ठपेन निर्दिष्टम् । एतेनेष्टप्राप्तिपूर्वमेव मनःसमुल्लासो भवतीति सूचितम् ॥ १४ ॥

तत्प्रसङ्गादाह—

**सम्पश्यतां प्रतिकृतिं लक्ष्म्याः पयसि द्वितीयतद्धुदयस्य**
**भ्रान्त्या तस्यामतथाभिनिवेशो जयति दैत्यानाम्॥१५॥**

जले लक्ष्मीप्रतिबिम्बं दृष्ट्वा तस्य सर्वसाम्येन द्वितीयलक्ष्मीरप्युद्भवतीतिभ्रमेण तामेव वयं ग्रहीष्याम इत्यभिप्रायेण परमार्थलक्ष्म्यां तादृगभिनिवेशो न कृत इत्यर्थः । तस्योत्कर्षश्च तत्सङ्गप्रकारणत्वेनेति ध्येयम् । तदुदयस्य भ्रान्त्येत्यन्वयः । एतेन दैत्यानां तत्प्रतिबन्धकरणानभिमुखत्वेन तदनुसन्धानस्य विघ्ननिवर्तकत्वसूचनम् । यदुक्तम्—

"तथा न ते माधव ! तावकाः क्वचिद्
भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः ।
त्वयाभिगुप्ता विचरन्ति निर्भया
विनायकानीकपमूर्द्धसु प्रभो ! ॥ इति। (भागवते स्कं० १० अ० २ श्लो० ३३ ) ॥ १५

तदनुरागं कीर्त्तयन्नाह—

**भूयोविसारिदीधितिकन्दलितः कौस्तुभो हृदि मुरारेः ।**
**दक्षिणविलोचनातपवारणमिव जयति पद्मायाः ॥१६॥**

भूयस्त्वं विसारित्वं च दीधितिविशेषणम् । कन्दलित इति प्रभामण्डलेन तस्य महत्त्वसूचनम् । विलोचने दाक्षिणेतिविशेषणेन

तस्य सूर्यमयत्वं व्यज्यते । लक्ष्म्याः परमसुकुमारतया सूर्यनिदाघसहनसामर्थ्यविरहेण तद्वारणाय छत्रमिव भाति । तस्या अपि हृदयस्थितत्वादित्यर्थः ॥ १६ ॥

पुनरपि कौस्तुभमनुसन्दधाति—

जयति हृदये मधुभिदः कौस्तुभमणिरविरतं लग्नः ॥
योषिद्रूपे मग्नं दक्षिणमिव धूर्जटेश्चक्षुः ॥ १७ ॥

योषिद्रूपे=वैदर्भीशरीरे । दक्षिणेतिसूर्यात्मकत्वसूचनम् । तत्र किल शिवस्यात्यन्तमनुरागो वृत्त इति पुराणविदः । एवं च तदानीं यद्दक्षिणं चक्षुस्तदीयहृदये लग्नं तत्सर्वदा तत्रैव स्थितमिति सम्भाव्यते । एतेन मायास्त्रियोऽपि शिवमोहनक्षमतायां वास्तवीनां तासां जनान्तरविक्षोभणे का वार्तेति द्योतितम् ॥१७॥

सम्भोगं ध्वनयन्नाह—

व्रीडितया प्रियनयने वामेऽपि तिरोहिते लक्ष्म्या ॥
कौस्तुभमिषेण नाभीपद्मविमुद्रोद्यतो विधुर्जयति ॥१८॥

अनावृतस्वाङ्गदर्शननिबाधनया(१) लज्जया भगवतो वामे नयने तिरोहिते सति चन्द्रस्यान्तर्धाने जाते नाभिकमलस्य सङ्कोचाभावेन विकासापत्तौ तदन्तर्गतहिरण्यगर्भदर्शनशङ्कया कौस्तुभव्याजं कृत्वा तन्निमीलनार्थं चन्द्रः प्रवृत्त इत्युत्प्रेक्षा । अपिशब्दो दक्षिणनयनपिधानसमुच्चयार्थः । तस्य प्रकृतानुपयोगान्न साक्षादुक्तिः । कौस्तुभस्य श्वेतवर्णत्वे प्रमाणं च नैषधभावप्रदीपे "हित्वा दैत्यरिपोहरः स्वभवनम्" इत्यादिश्लोकव्याख्यानावसरे प्रदर्शितमस्माभिः ॥ १८ ॥

---

(१) निद्रानया इति पाठो भवेत् ।

प्राधान्येन रमां स्तौति—

**कौस्तुभदीधितिधारापटलान्तरगा हरेर्हृदि गतापि ॥**
**अनुभूयमानदुग्धोदधिवाससुखा रमा जयति ॥१९॥**

धारा सर्वतोमुखत्वादविच्छेदाच्च । समुद्र एव गमने तत्सौलभ्यादाह—हरेरिति । तत्रस्थयापि तत्स्मरणसम्भवादाह—अनुभूयमानेति । साक्षात्क्रियमाणेत्यर्थः । अत्र हरिहृदयावस्थानेनैव पयोनिधिवाससिद्धेरेककरणेन कार्यान्तरसिद्धिरिति विशेषालङ्कारः । एवमेकस्या एव पद्मायाः युगपदुभयवृत्त्युक्तिरूपोऽपि विशेषभेदः । तदुक्तमलङ्कारकौस्तुभे—

"स्थितिराधाराभावे वृत्तिरनेकत्र युगपदेकस्य ।
एककरणेन दुष्करकार्यान्तरसिद्धिरिति विशेषः" इति । ॥१९॥

कूर्मावतारं स्तौति—

**आसादितकमलालनुसंयोगकमन्दरान्वयेनेव ॥**
**सुखमामीलितनयनो जयति हरिः कच्छपाकारः ॥२०॥**

प्राप्तः कमलातनुसंयोगो येनेति मन्दरविशेषणम् । समासान्तः कप् । अन्वयोऽप्यत्र संयोगरूपः । कूर्मोपरि मन्दरं निधाय समुद्रो मथित इति पुराणवार्ता । तत्र मन्दरघर्षणसुखं तन्निमीलने हेतुः । तस्य श्रीसंयुक्तमन्दरसंयोगजसुखेन सम्भावनमिति हेतूत्प्रेक्षा । तया कविप्रौढोक्तिसिद्धालङ्कारेण प्रियजनस्य परम्परासंयोगोऽपि सुखं जनयतीति वस्तुध्वनिः ॥ २० ॥

परशुराममेकेन स्तौति—

**अमलेऽनुबिम्बितोऽङ्के परस्वधो जयति जामदग्न्यस्य ॥**
**स्वस्मिन्निव सम्प्राप्तिः क्रोधेन क्षत्रियासृक्तस्य सुधा ॥२१॥**

प्रतिबिम्बोपपत्तये 'अमले' इत्यङ्कविशेषणम् । स्वपदं जामद-

न्यपरम् । क्षत्रत्वजातेः क्षत्रियायां दृष्टोत्पन्नव्यक्तावेव वृत्तेर्मुख्य-क्षत्रियत्वाभावेऽपि क्षत्रियासुतत्वांशमादाय तत्सम्भावनया त-दवच्छेदेनैव क्रोधबलात्स्वतनावपि परशुः प्रयुक्त इत्युत्प्रेक्षा। एतेन महात्मनां यो यादृशतया परिगृहीतस्तदवच्छिन्ने स्वकी-येऽपि तदुचितव्यापारो भवतीति सूचितम् ॥ २१ ॥

एकेन श्रीराममनुसन्धत्ते—

**सीतासीमन्तमणिं कौस्तुभमिव वक्षसा बिभ्रत् ॥**
**प्राग्जन्मस्मरणादिव रामोऽन्तर्मनसो जयति ॥ २२ ॥**

"दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः ।" इत्यमरः। हनुमता प्रत्यभिज्ञानत्वेन लङ्कायाः समानीतं सीताप्रहितं र-त्नं हृदि निधाय तेन तस्य बाह्यविषयनिवृत्तिर्जाता। तत्र कौ-स्तुभसदृशमणिदर्शनजन्यप्राग्भवीयावस्थास्मरणं हेतुत्वेनोत्प्रे-क्ष्यते । एतेन विप्रलम्भः शृङ्गारः सूचितः ॥ २२ ॥

श्रीकृष्णं स्मरति—

**उपनीताधरपल्लवमाधुर्य इवाधरेण गोपीभिः ॥**
**निभृतं विभाव्यमानो वेणुनिनादो हरेर्जयति ॥२३॥**

अधरः कृष्णस्यैव ग्राह्यः । हरेरित्यस्य वेणुना सहान्वयः । विभाव्यमानः=विषयान्तरात्पराङ्मुखीभूयास्वाद्यमानः । तस्या-स्वाद्यताप्रयोजकमुत्प्रेक्ष्यते उपनीतेत्यादिना । अधरदलसंयुक्त-निःश्वासाभिघातेन वंशावच्छिन्नाकाशसम्भवतया वेणुशब्दस्य परम्परया तत्राधरसम्बन्धिमाधुर्ययोग उपपन्न इति भावः । प्रथमतः स्वीयाविषयकः शृङ्गारः समसूचि । अत्र तु परकीया-विषयको द्योत्यत इति बोध्यम् ॥ २३ ॥

**राधाया वक्षोरुहमिलिता नाभी मुरद्विषो जयति ॥**
**प्रादुर्भूतपितामहनिवासराजीवकालिकेव ॥२४॥**

राधा महालक्ष्म्या अवतारविशेषः ।

"राधानाम महाभागा वल्लभस्य निवेशने ।"

इति पञ्चरात्रोक्तेः । आलिङ्गनविशेषेण तत्स्तनस्य भगवन्नाभिसमायोगः तत्रोत्प्रेक्षा प्रादुर्भूतेत्यादि । तदीयनाभौ ब्रह्मोत्पत्तिपुण्डरीकस्य योग्यत्वात्तथैव सम्भावनम् । वक्षोरुहशब्दस्य सापेक्षतया राधाया इति तत्रान्वेति ।

"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ॥

वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते" इति ॥ २४ ॥

सम्प्रतीन्द्रादिदेवानामपीश्वररूपतया तत्सम्बन्धेनाह—

**रतिरभसेन दुकूलेऽपहृतेऽपि सहस्रनयनेन ॥**

**अविभावितदृग्मुद्रोपाया वः पातु पौलोमी ॥२५॥**

नयनाच्छादनेच्छाहेतुमाह—अपहृतेऽपीत्यन्तेन । आच्छादनस्यासाध्यत्वं सूचयन्नाह—सहस्रेति । करद्वयेन तावतामावरणासम्भवादिति भावः । वस्तुतस्तद्दर्शनस्यैव सम्मतत्वात् नयनपिधानोपायविरहेण निस्त्रपत्वानाक्षेपाच्च सिद्धोभयार्थतया परमानन्दसम्पूर्णेत्यर्थः । तथा च कामशास्त्रम्—

"प्रौढा वा तरुणी वापि लज्जितापि न लज्जते ।

किन्तु तं नाटयित्वाङ्गं निरीक्षयितुमीहते" इति ॥ २५ ॥

इदानीं "सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः ।" (म० भा० १ । १ । २ ) इति भाष्यकारवचनाद्वाङ्मयं प्रकृतं कीर्तयति ।

**उन्मूलितान्धकारः प्रकाशितानेकवस्तुसमुदायः ॥**

**अतिदुर्विबोधवर्त्मा जयतितरां वाङ्मयविवस्वान् ॥२६॥**

वाङ्मयम् इत्यत्र एकाच इति मयट् । तदेव विवस्वान् सूर्यः ।

रूपकस्यापि साधर्म्यमूलकत्वादाह—उन्मूलितेत्यादि । विनाशितमन्धकारमज्ञानं येन । तत्त्वज्ञानहेतुत्वात् । "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्युक्तेः । प्रकाशिताः प्रतीतिविषयीकृताः पदार्थसमूहा येनेति स्पष्टम् । यद्वा वैयाकरणमते सर्वज्ञानेषु शब्दभानस्वीकारात् । यद्वा प्रकाशपदमुत्पत्तिपरम् ।

तथा च स्मृतिः—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥
नाम रूपं च भूतानां कर्मणां च प्रवर्त्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे परमेश्वरः ॥" ( मनु० १।२१ )

इदं चोत्तरमीमांसायां प्रथमाध्यायतृतीयचरणे(१) विभावितम् । अतिदुर्विबोधेति । तथा च भाष्यम्—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदपाठितानां शब्दानां पारायणं प्रोवाच न चान्तं जगाम" इति ।(१। १। २) सूर्वपक्षे स्पष्टम् ॥ २६ ॥

तत्प्रशंसामाह—

**मिथ्याभावविहीना वह्न्त्यनिर्वाच्यतामनिशम् ॥**
**अज्ञानानुपधेया महाकवीनां जयति सा सृष्टिः॥२७॥**

ब्रह्मसृष्ट्यपेक्षया कविसृष्टेर्व्यतिरेको वर्ण्यते । सा हि सदसद्विलक्षणत्वरूपमनिर्वाच्यत्वं वहति अत एव मिथ्याभावविशिष्टा अज्ञानोपादेया चेति वेदान्तिनः । इयं तु विशिष्टचमत्कारजनकत्वेनानिर्वाच्यत्वं दधानापि मिथ्याभावं निष्फलभावं न दधाति चमत्कारस्यैव काव्यमुख्यफलत्वात् ।

"शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् ॥

[१] देवताधिकरणे इति शेषः ।

काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥" (काव्यप्र० १ उ०)

इति रीत्या विज्ञानातिशयसापेक्षत्वादज्ञानजन्या न भवतीत्यर्थः । अनिर्वाच्यस्यापि मिथ्यात्वं नेति विरोधालङ्कारो व्यतिरेकस्याङ्गम् ॥ २७ ॥

काव्यप्रसङ्गेन कवीन् कीर्तयिष्यन्नादिकविं भगवन्तं वाल्मीकिं द्वाभ्यां नमस्करोति ।

ज्ञानागोचरपारं निर्मग्नक्रौञ्चसवितृकं वन्दे ॥
प्राचेतसं पयोनिधिमसूत यः काव्यकल्पतरुम् ॥ २८ ॥

"प्राचेतसस्त्वादिकविः स्यान्मैत्रावरुणश्च सः ।"

इति वाल्मीकिपर्यायः । अन्यज्ञानापरिच्छेद्यविज्ञानशालिनमित्यर्थः । समुद्रपक्षे पारस्यास्मदादिप्रत्यक्षाविषयत्वात् । निर्मग्नः क्रौञ्चस्य पक्षिविशेषस्य तापकत्वेन सविता सूर्य इव निषादविशेषो यत्र ।

"मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥"

इति तस्य शप्तत्वान्मग्नसादृश्यम् । अयमेवाद्यः श्लोक इति कथा बालकाण्डे । समुद्रपक्षे निर्मग्नः क्रौञ्चाद्रेः सविता जनको मैनाकाचलो यस्मिन् । तथा च मैनाकादीन् प्रक्रम्य मात्स्यम्—
"इत्येते पर्वता विष्टाश्चत्वारो लवणोदधिम् ।
छिद्यमानेषु पक्षेषु पुरा इन्द्रस्य वै भयात्" इति ।

काव्यमेव कल्पतरुरनेककामप्रदमित्यर्थः ॥ २८ ॥

क्रौञ्चस्य पक्षपाती तारकरूपप्रकाशनैकरतः ॥
जयति गुहाननुकूलो वाल्मीकिः कविकुलाचार्यः ॥२९॥

गुहा=मिथ्याज्ञानम् "गुहाहितं गह्वरेष्ठं पुराणम्" इत्यादौ तथा निर्णीतत्वात् । तस्याननुकूलो विरोधी तत्त्वोपदेशक-

त्वात् । अथ च गुहस्य स्कन्दस्य विरुद्धधर्मेत्यर्थः । पक्षपातित्वं तन्मारकशापदानात् । गुहस्तु क्रौञ्चाद्रिभेदीति तद्वैपरीत्यम् । तारकस्य ब्रह्मणो यद्रूपं शुद्धबुद्धत्वादि तत्प्रकाशनमात्रसक्तः । स-तु तारकासुरस्य तिरस्कार एवासक्त इति तद्विरोधः ॥ २९ ॥

एकेन वेदव्यासं स्तौति—

**सुकलितवेदव्यसनो रचितमहाभारतोविमुक्तिधरः ॥**
**वाण्याधिष्ठितकण्ठः स जयति कृष्णो मुनिर्जगति ॥३०॥**

कृष्णपदेन नारायणव्यासयोरुपस्थापनात्तदभेदसूचनम् । द्वयोः साधर्म्यमाह—सुकलितेत्यादि । कलयतेर्नानार्थत्वात् विनाशितं वेदानां व्यसनं मधुकैटभादिहरणनिबन्धनाविपत्तिर्येन सः । पक्षे सम्यक्कृतं वेदानां व्यसनं विभागो येन । वेदानां शाखाविभागस्य व्यासेन कृतत्वात् । रचितो महाभारतो दैत्यादिकृतभाराद्विमुक्तिर्यस्यास्तादृशी धरा यस्मात् । भारत इत्यस्य तसिलन्तत्वेनाव्ययत्वम् । पक्षे कृतं महाभारतमितिहासो येनेतिपृथक्पदम् । विमुक्तिधरो जीवन्मुक्तत्वात् । वाणीपदमाद्येऽधिष्ठातृदेवतापरम्, द्वितीयेऽधिष्ठेयशब्दपरम् ॥ ३० ॥

एकेन बृहत्कथाकारं श्लाघते—

**नरवाहनचरितमयी सर्वोत्तरादिग्गता बहुपदार्था ॥**
**सुखहेतुः स्वगतानामलकेव बृहत्कथा भाति ॥ ३१ ॥**

"अलका नगरी ज्ञेया" इति कुबेरप्रकरणे हलायुधः । नरवाहनः= विद्याधरविशेषः कुबेरश्च । सर्वोत्तरा= सकलश्रेष्ठा, दिक्= सीमा । पक्षे उत्तरदिक् । बहवः पदार्था निध्यादयो यस्याम् । पक्षे बहूनि पदानि तदर्थाश्च यत्र । स्वगतानां= स्वप्रवृत्तीनां स्वज्ञातृणां चेत्यर्थः ॥ ३१ ॥

आर्यया कालिदासं स्तौति—

नेत्रीकृताग्निमित्रा कुमारसूर्जनितमेघरघुभावा ॥
कवितामिषेण काली वशं गता कालिदासस्य ॥ ३२ ॥

कालीशब्दस्य "ङ्यापोः संज्ञाछन्दसोः" ( ६ । ३ । ६३ ) इति ह्रस्वः । स्वभक्तवशीभवनं परमकारुणिकस्वभावः । तत्कवितैव कालीरूपेण प्रतिपाद्यते । नेता नायकरूपः कृतोऽग्निमित्रनामको राजा यया । मालविकाग्निमित्रनाटके तस्य नायकतया कालिदासेन निबद्धत्वात् । नेतृशब्दात् च्विप्रत्यये "रीङ् ऋतः" ( ७ । ४ । २७ ) इति रीङ् । अथच नयनीकृतावग्निर्वह्निः मित्रो रविश्च यया । कुमारस्तत्सम्भवः काव्यं गुहश्च । मेघशब्देनैकदेशानुकरणेन मेघदूतकाव्यम् । रघुस्तद्वंशः । पक्षे जनितो मेघलघुभावो यया, श्यामवर्णत्वात् , रलयोरैक्यात् ॥ ३२ ॥

कृतिद्वारापि तं प्रशंसति—

मालिन्याश्रयरहिता नगाधिजाताश्रयप्रसूता या ॥
या नप्रभूतभरता शकुन्तला सेति नाश्चित्रम् ॥ ३३ ॥

अत्र शकुन्तलानाटकस्य वर्णनीयनायिकापेक्षया वैलक्षण्यं प्रतिपाद्यते । शकुन्तला हि मालिनीसंज्ञकनद्याश्रिता । तत्कथायां तत्र कण्वाश्रमोक्तेः । नाटकरूपा तु निर्दोषतया मालिन्यहीना । सा च गाधिजातो विश्वामित्रस्तदाश्रयेण प्रसूता । मेनकायां तस्मादुत्पत्तेः । इयं तु नगाधिजाताया देव्या अनुग्रहेण जाता । सा भरतजननीति प्रसिद्धम् । इयं तु न प्रभूता भरता भारसाहस्यं यत्र तथा । भारवदनुपादेया नास्ति । तथाच तद्विरुद्धधर्मवत्यास्तद्भेदादाश्चर्यमित्यर्थः ॥ ३३ ॥

सेतुकाव्यकृतं स्तौति—

**उल्लसदहार्यरचनं सदुदितरत्नाकरं व्यधित सेतुम् ॥**
**काव्यार्णवं तरीतुं राम इव प्रवरसेननृपः ॥ ३४ ॥**

अहार्या अदूषणीया रचना शब्दसन्दर्भो यत्र । पक्षे अहार्यैः पर्वतैः रचना घटनं यस्य । "अहार्यधरपर्वताः" इत्यमरः । सदुदितानां= रम्यवचनानामेव रत्नानामाकरभूतं तन्मयत्वात् । अथच सद्भिरुक्तो रत्नाकरः समुद्रो यस्य तदाश्रयत्वात् । तरीतुमिति तस्य सर्वकाव्यादाधिक्यसूचनम् । श्लेषमूलिकोपमा॥३४॥

सुबन्धुकविं कीर्तयति—

**वासवदत्ता सौरभधारेव नवासवेन दत्तेयम् ॥**
**उदयति सहृदयहृदये सुबन्धुरप्येवमसुबन्धुः ॥ ३५ ॥**

वासवदत्ता आख्यायिकाविशेषः नवेन आसवेन सीधुना दत्ता परिमलधारेव सहृदयानां प्रतिभाति आनन्दविशेषहेतुत्वात् । एवं सुबन्धुः तत्कर्ता कविरपि, तेषाममूनां प्राणानां बन्धुः । तादृशनिबन्धकर्तृत्वेन तत्रोत्कर्षवत्ताज्ञानोदयात् । अथच वासवदत्ता न वासवदत्ता सुबन्धुरसुबन्धुरिति विरोधाभासः ॥ ३५ ॥

माघमनुसन्दधाति—

**धृतफाल्गुनाग्रजन्मा पुरुषोत्तमवल्लभो जयति ॥**
**वाच्यः परेण तपसा पावनपरिशीलनो माघः ॥ ३६ ॥**

माघकाव्यस्य माघमाससाम्यं प्रतिपाद्यते । धृतः फाल्गुनस्याग्रजन्मा युधिष्ठिरो यत्र । राजसूयकर्तृत्वेन तन्निर्देशात् । पक्षे धृतं फाल्गुनमासात्पूर्वं जन्म येन । पुरुषोत्तमः= कृष्णः । तस्य तत्र नायकतयोपादानात् । पक्षे तत्प्रियत्वात् । महता तपसा

अदृष्टद्वारा वाच्यः अल्पपुण्येन कर्तुमशक्यत्वात् । पक्षे द्वितीयेन तपःशब्देन वाच्यः । तपःशब्दस्य माघवाचकत्वात् । परिशीलनमध्ययनादि स्नादि च । तथाच स्मृतिः—

"तुलामकरमेषेषु प्रातःस्नानं महाफलम् ॥
हविष्यं ब्रह्मचर्यं च महापातकनाशनम्" ॥ ३६ ॥

प्राकृतसप्तशतीद्वारेण तत्कृतं स्तौति—

हालाभ्युदितो गाथासमुदायो रसविशेषपूर इव ॥
अध्यक्षीकृतमात्रो नाधत्ते कस्य परितोषम् ॥ ३७ ॥

"हालः स्याच्छालवाहने" इतिकोषः । पक्षे हाला सुरा तत उत्पन्नः । रसविशेषस्य शृङ्गारस्य प्रवाह इव । तदाह—

"अमिअं पाउअकव्वं पठिउं सोउं अ जे ण जाणंदि ।
कामस्स तत्तितात्तिं कुणंति ते कहं ण लज्जंदि ।"
अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च ये न जानन्ति ।
कामस्य तत्त्वचिन्तां कुर्वन्ति ते कथं न लज्जन्ते ॥

पक्षे रसविशेषो माधुर्यम् । अध्यक्षीकरणं श्रवणविभावनादि । पक्षे रासनज्ञानविषयीकरणम् । एतेन सर्वरम्यत्वमुक्तम् ॥ ३६ ॥

प्राकृतमयं निबन्धं वितन्वता शालवाहननृपेण ।
काव्यानामितरेषां तद्विकृतित्वं कथितमर्थात् ॥ ३८ ॥

प्राकृतं= भाषाविशेषः । सङ्ग्रहकर्तृत्वात्तत्कृतत्वोक्तिः । तत्काव्यस्य प्राकृतत्वेन सर्वकाव्यप्रकृतिभूतत्वलाभादन्यकाव्यानां विकृतित्वं पर्यवस्यति । तदीयच्छायानुहारित्वादन्येषामिति भावः । अथ चोपादिष्टधर्मजातस्य दर्शादेः प्रकृतियागस्य धर्माः ( अनुपदिष्टधर्मजातैः ) "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम" इत्यादिर्भिविकृतियागैर्गृह्यन्त इति ध्वनिः ॥ ३८ ॥

द्वाभ्यां दण्डिनं स्तौति—

वाग्द्वारान्तर्गामिनमतिचिरमालोक्य दण्डिनं जगति ॥
अन्तः प्रवेष्टुकामा अप्यन्ये यान्ति बहिरेव ॥ ३९ ॥

वाचोऽनेकरूपायाः सिद्धान्तवेत्तारं दण्डिनं विभाव्य गुणवत्त्वेन ज्ञायमाना अप्यन्ये बहिरेव गच्छन्ति । तदपेक्षयाऽपकृष्टा एव भासन्ते इत्यर्थः । अन्यत्रापि राजादेर्द्वाराधिकृतं दण्डवन्तं दौवारिकं दृष्ट्वाऽभ्यन्तरगमनमिच्छन्तोऽपि गन्तुं न क्षमन्त इति भावः ॥ ३९ ॥

कृतिमुखेन तं स्तौति—

काव्यादर्शकृदीश्वर एव प्रतिभाति गरिमसम्बन्धात् ॥
स परमनलीकदृष्टिभृदनुग्र उद्धृतदशकुमारः ॥ ४० ॥

काव्यादर्शः काव्यगुणादिविचारग्रन्थः तत्कर्त्ता दण्डी ईश्वर एव प्रतिभासते विलक्षणकृतिहेतुत्वात् । गरिमशब्दार्थो गौरवं सिद्धिविशेषश्च । उत्तरार्द्धेन तद्व्यतिरेकमाह—स परमित्यादिना । शिवो हि अलीके ललाटे दृष्टिभृत्, "नीचाः सदैव सविलासमलीकलग्नाः" इत्यादिप्रयोगात् । उग्रः तन्नामकत्वात्, जनितैककुमारश्चेति प्रसिद्धम् । अयं तु अलीकदृष्टिर्मिथ्याज्ञानं तद्रहितः, अनुग्रः सौम्यत्वात्, उद्धृतदशकुमारः तद्ग्रन्थकारित्वादित्यर्थः ॥ ४० ॥

कृत्युत्कर्षेण कर्तुरुत्कर्षस्यार्थसिद्धत्वात् तद्द्वारेण भवभूतिप्रशंसामाह—

अणुदोषं समहिमगुणमर्थे गुरु लघुपदं वशितचेतः ।
प्राकाम्यप्राप्त्यैश्वर्यं भवभूतिविजृम्भितैश्चर्यम् ॥४१॥

भवभूतिकृतं काव्यम् अणिमादिकभूतिमयतया वर्ण्यते ।

"अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः ॥"

दोषनिष्ठमणुत्वं दोषसामान्याभावस्यासम्भवात् । गुणनिष्ठं महत्त्वम् । गुणाश्च भरतेनोक्ताः—

"श्लेषः प्रसादः समता समाधि—
र्माधुर्यमोजः सुकुमारता च ।
अर्थस्य च व्यक्तिरुदारता च
कान्तिश्च काव्यस्य गुणा दशैते" ॥ इति

अर्थगतं गुरुत्वं लोकोत्तरत्वात् । शब्दाश्रितं लघुत्वम् अल्पशब्देन बह्वर्थप्रतिपादनात् । तथा च नैषधम्—

"गरौ गिरः पल्लवितार्थलाघवे मितं च सारं च वचो हि वाग्मिता" इति । वशीकृतं चित्तं येन । अन्यथा तद्वैयर्थ्यात् । "आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्" ( अ० शा० अं० १ श्लो० २) इतिन्यायात् । प्राकाम्यं बाहुल्यं तस्याप्त्या ऐश्वर्यं यस्य । क्षुद्रकविभिरल्पस्यैव करणादनेन तु बहुगुणविशिष्टानेककाव्यनिर्माणादाधिक्यमित्यर्थः ॥ ४१ ॥

**वाचैव जगदितिश्रुतिरपि भवभूतिश्च वश्यवागिति या।**
**अर्थे समर्थिते सति तयैव वाचंयमत्वमुचितं नः ॥ ४२ ॥**

"वाचारम्भणं विकारो नामधेयम्" इत्यादिश्रुत्या जगतो मिथ्यात्वतात्पर्यवत्या तस्य वाचारूपत्वं, वश्यवाचः कवेः काव्यमितिप्रसिद्ध्या च वाचो भवभूतिवश्यत्वमुक्तं भवति । तथा च सर्ववाङ्मयस्य तदधीनत्वात् जगतश्च तत्काव्येन वशीकृतत्वात् अन्येषां वाचंयमत्वं मौनमेव युक्तम् । वाचामन्याधीनत्वे तत्प्रयोगस्य कर्तुमशक्यत्वात् प्रयोजनाभावाच्चेति भावः ॥ ४२ ॥

पुनरप्याह—

**भवभूतेर्विच्छित्तिव्यभिचारमुचां गिरां गुम्फाः॥**
**विधिनापि दुर्निवारं तेषां खलु भावभूतत्वम्॥ ४३॥**

विच्छित्तिश्चमत्कारविशेषः तद्व्यभिचारमुचोऽवच्छेदकावच्छेदेन चमत्कारजनकाः। अन्येषामपि किञ्चित्काव्यस्य चमत्कारजनकत्वात्। भवभूतेरिमे भावभूता इति तत्सम्बन्धिकाव्यत्वमात्रस्य भावभूतत्वस्य दुर्वारतया भावात्मकस्य च विच्छत्तिविशेषाधायकत्वरूपतया धर्मिग्राहकमानसिद्धमेव तेषां चमत्कारहेतुत्वमितिभावः॥ ४३॥

एकेन भारविं स्तौति—

**दाक्षायणीप्रियधनञ्जययोर्विवृणोति रुचिपरावृत्तिम्॥**
**यस्य गवां समुदायः स भारविः कीर्त्यते युक्तम्॥४४॥**

भा ज्ञानं कान्तिश्चेति ज्ञाने कान्त्यभेदाध्यवसायेन तद्वृत्तया तस्य रविसादृश्यं प्रतिपाद्यते। गवां=वाणीनां मयूखानां च। दाक्षायणीप्रियः=शिवः, धनञ्जयोऽर्जुनः, तयो रुचिः परस्परप्रीतिः तस्याः परामुत्कृष्टामावृत्तिं पौनः पुन्यं विवृणोति। किरातार्जुनीये तथा वर्णनात्। पक्षे दाक्षायणीप्रियश्चन्द्रः धनञ्जयोऽग्निः तयोः कान्तिपरावृत्तिं मन्दतेजस्त्वं करोति। स्पष्टमेतत्॥ ४४॥

एकेन मयूरमाह—

**रीतिर्भावनिबन्धे विदिता भुवने विलक्षणा यस्य॥**
**स जयति कविमयूरो विचित्रपदवर्णविन्यासः॥ ४५॥**

मयूरकवेर्बर्हिणः साम्यं वर्ण्यते। भावानां रसादीनां निबन्धे विलक्षणा अन्यकविभ्य उत्कृष्टेति यावत्। पक्षे भावनिब-

न्धे रतिसुखानुभवे विलक्षणा रीतिर्मयूरस्य प्रसिद्धा । स्त्रीसङ्गमं विनैव तस्य तदुत्पत्तेः । तथाच विमलबोधः“—मयूरस्य भार्या नृत्यन्तं मयूरं दृष्ट्वैव गर्भवती स्यादिति लोकवादः । अत एवाहुः--नैव ते सङ्गमोऽस्ति मनुष्येण नापि कामभोगचिन्हमन्यत् । गर्भिणीवदृश्यसे ह्यनार्ये किं मयूरसारिणी त्वमेवम्” इति । विचित्रोऽनुप्रासप्रचुरः पदानां सुप्तिङन्तानां शब्दानां च विन्यासः सन्दर्भो यस्य । सूर्यशतकेऽनुप्रासप्राधान्यदर्शनात् । पक्षे नानारूपो वर्णानां हरितादीनां विन्यासो यस्य, चित्रशरीरत्वात् ॥ ४५ ॥

पञ्चाभिर्बाणं स्तौति—

**अर्थपतितनयबन्धुर्निरुक्तगोसङ्ख्यहर्षचरितश्च ॥**
**अभिनन्दजननहेतुर्बाणः प्रतिभाति कृष्ण इव ॥ ४६ ॥**

अर्थपतिसंज्ञकस्य तनयश्चित्रभानुः तस्य बन्धुः सुतत्वात् । पक्षे कुबेरतनययोर्नलकूबरमणिग्रीवयोर्नारदशापेन यमलार्जुनतामापन्नयोर्मोक्षणाद्बन्धुः । निरुक्तं वेदाङ्गविशेषं गच्छति जानातीति निरुक्तगः । असङ्ख्यं सर्वोत्तमं हर्षचरितमाख्यायिकाविशेषो यस्य । तस्य बाणकृतत्वात् । यद्वा निरुक्ता गवां वाचां सङ्ख्या येन तादृशं हर्षचरितं यस्य सर्ववाङ्मयसारत्वात्तस्येति प्रशंसा । पक्षे निरुक्तो विहितः गोसङ्ख्यानां गोपालानां हर्षो येन तादृशं चरितं यस्य । अभिनन्दस्य कवेरुत्पत्तिहेतुः । तस्यबाणपुत्रत्वात् । पक्षे आभिमुख्येन पालनादिना नन्दगोपो जननहेतुर्यस्य । नन्दस्य तज्जनकत्वाभावेऽपि पालनादिकर्तृत्वेन तज्जनकत्वप्रसिद्धेः । यद्वा अभि भीरहितं यथा स्यात्तथेति क्रियाविशेषणम् ॥ ४६ ॥

निबन्धान्तरमुखेन स्तौति—

**वर्णितविधानपार्थौ शुकवैशम्पायनार्च्यपदौ ॥**
**आकलयामस्तुल्यौ भारतकादम्बरीकारौ ॥ ४७ ॥**

भारतकारो व्यासः, कादम्बरीकारो बाणः। आद्ये वर्णितं विधानं चरितं येषां तादृशाः पार्था युधिष्ठिरादयो यस्य। द्वितीये वर्णितायां विधायां प्रकारेऽनपार्थोऽनुपादेयार्थरहितः। आरम्भणीयप्रकारेणैव वर्णनं कुर्वन्। शुको व्यासपुत्रः। "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि" इतिविश्वः। वैशम्पायनस्तच्छिष्य ऋषिविशेषः। व्युत्पत्तिस्तु पुराणे—

"शम्पां शतह्रदामाहुरयनं पतनं ततः॥
विगतं शब्दतो यस्माद्वैशम्पायन इत्यतः॥" इति।

तन्नामग्रहणस्य वज्रनिवारकत्वात्। विगतं शम्पाया अयनं यस्माद्विशम्पायनस्ततः स्वार्थे तद्धित इति विमलबोधादयः।

"अगस्त्यश्च पुलस्त्यश्च वैशम्पायन एव च।
जैमिनिश्च सुमन्तुश्च पञ्चैते वज्रवारकाः॥"

इतिस्मरणात्। ताभ्यामर्च्यौ चरणौ पादौ यस्य। द्वितीये शुकभूतो यो वैशम्पायनः शुकनासाख्यमन्त्रिपुत्रस्तेनार्च्यानि पदानि शब्दा यस्य। वैशम्पायनस्य महाश्वेताशापेन जन्मान्तरे शुकत्वं जातं तेन चन्द्रापीडावतारशूद्रकसमीपे प्राग्भवकथोक्तेति कादम्बर्यां दर्शनात्॥ ४७॥

प्रकारान्तरेण स्तौति—

**कविकुलगुरुर्य एको बहुभासुरराजपूर्वदेव्युदितः॥**
**अथ चित्रभानुलालितपुरः स सर्वज्ञवल्लभो बाणः॥४८॥**

बाणासुरः श्लेषेणात्र वर्ण्यते । कवीनां कुलगुरुः मुख्यत्वा-त् । पक्षे कविः शुक्रः कुलगुरुर्यस्य । बहुभासुरा अतिदीप्तिमती राजशब्दपूर्वा देवी राजदेवी तत उदितः । पक्षे बहुर्भा दीप्तिर्य-स्य तादृशोऽसुरराजो बलिः, पूर्वदेवी दैत्यस्त्री बिन्ध्यावलीति । "पूर्वदेवाः सुरद्विष" इत्यमरः । पुंयोगे ङीप् । ताभ्यामुदितः । चित्रभानुः बाणपिता तेन स्नेहेन लालितं पुरं शरीरं य-स्य । पक्षे चित्रभानुना वन्हिना रक्षितं पुरं नगरं यस्य सः । शोणितपुरस्य वन्हिनावृतत्वात् । राजदेवी बाणस्य माता, चि-त्रभानुः पिता । स्पष्टं हर्षचरिते । सर्वज्ञानां वल्लभः तत्समशील-त्वात् । पक्षे शिवप्रियः तेन पुत्रीकृतत्वात् ॥ ४८ ॥

अन्यकविव्यतिरेकमुखेन वर्णयति—

**परिशीलितैव सरसं कविराजैर्बहुभिरत्र वाग्देवी ॥**
**बाणेन तु वैजात्यात्कथयति नामैव वाणीति ॥ ४९ ॥**

वैजात्यात्=अन्यकविपरिशीलनवैलक्षण्यात् । परिशीलिता= सन्दर्भविशेषविषयीकृता । अत्र मानमाह–कथयतीति । बाण-स्येयं वाणी । बाणसम्बन्धं प्रवृत्तिनिमित्तीकृत्य वाणीशब्दः प्रयु-क्तो न त्वन्यकविसम्बन्धं प्रवृत्तिनिमित्तीकृत्य । अतो वाणीपद-प्रवृत्तिनिमित्तसम्बन्धसिद्ध्यर्थमन्यकविकृतपरिशीलनाद्बाणकृतस-रस्वतीपरिशीलने वैलक्षण्यमवश्यमाश्रयणीयमिति भावः ॥ ४९ ॥

कादम्बरीं पृथगेव पुनर्वर्णयति—

**चन्द्रापीडैकरता स्फुरति हि मेनाहृदयजाता ॥**
**कादम्बरी कवीनामुपजीव्या सर्वमङ्गलेवेयम् ॥ ५० ॥**

"शर्वाणी सर्वमङ्गला" इत्यमरः । चन्द्रापीडस्तारापीडस्य पु-त्रः तदेकरता, तस्य नायकत्वेन वर्णनात् । पक्षे चन्द्र आपीडो

भूषणं यस्य तत्र शिवेऽनुरक्ता। आद्ये मे मम मनसि अहृदयजाता अरसज्ञकृता न भाति किंतु सहृदयकृतैव। पक्षे मेना हिमवद्भार्या तस्या हृदयजाता तत्कन्यात्वात्। उपजीव्या ततः सम्प्रदायग्रहणात्।

"शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे॥" (का० प्र० उ० १)

इतिप्रकाशोक्तेः। पक्षे काव्यजनकप्रसादाश्रयत्वात्॥५०॥

एकेनाभिनन्दं स्तौति—

**सहजेनाद्भुतजनकः स जयति कादम्बरीकृदभिनन्दः॥**
**यस्य जनकोऽपि बाणस्तां प्रति नैवान्यथासिद्धः॥५१॥**

अद्भुतजनकत्वं लोकोत्तरवर्णनोपहितत्वात्। कादम्बरीकृत् उत्तरार्द्धपूरकत्वात्। यस्य पितापि बाणः कादम्बरीं प्रति नान्यथासिद्धः। तस्य कादम्बरीपूर्वार्द्धकारितया कादम्बरीहेतुत्वात्। अथच कादम्बरीजनकजनकत्वेनोपस्थितस्य बाणस्य तां प्रत्यन्यथासिद्धत्वं युक्तं कुलालपितुरिव घटे तदभावाच्चमत्कार इति व्यङ्ग्यम्। यद्यपि तत्र धर्म एवान्यथासिद्धो नतु धर्मी कुलालत्वेन तस्य तद्योग्यत्वात्। तथाप्यत्रोक्तधर्मेणापि बाणस्य हेतुत्वमित्यभिप्रायः॥ ५१॥

त्रिभिः श्रीहर्षं स्तौति—

**बहुविषयकविज्ञानं ब्रह्मैव न केवलं स्वमपि येन।**
**अद्वैतमेव नीतं स श्रीहर्षो नमस्कार्यः॥ ५२॥**

आत्मवाचकः स्वशब्दः क्लीबोऽप्यस्ति। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।" इत्यमरः। खण्डनाख्यग्रन्थे

द्वैतनिराकरणेन यथा ब्रह्मणोऽद्वैतं प्रतिपादितं तथान्यविलक्षणताद्दशज्ञानवत्तया स्वस्यापीत्यर्थः । तथा च खण्डने उक्तम्--

"ईश्वरानुग्रहादेषा पुंसामद्वैतवासना ॥
महाभयकृतत्राणा द्वित्राणां यदि जायते ॥" इति ॥ ५२ ॥

प्रकृते काव्यप्रसङ्गात्तन्मुखेन प्रशंसामाह--

**अनलमुखानास्वादितमतमोगममन्दरसजनकम् ॥**
**पतदधिपानपहार्यं नैषधमवयाम्यपूर्वपीयूषम् ॥ ५३ ॥**

माधुर्यादिगुणवत्तया सिद्धसुधासाम्यस्य नैषधस्य तस्माद्व्यतिरेको वर्ण्यते। तद्धि अनलमुखैर्देवैरास्वादितम् इदं तु नलो येषां मुखे नास्ति तैरनास्वादितम् । एतदास्वादकानां नलोच्चारणानियमात् । एवं तत् तमोगं तमसा राहुणा देवरूपं कृत्वा पीतत्वात् । इदं तु मिथ्याबुद्धिं स्वकारणतया यद्गच्छति तथा न भवति, सम्यगवबोधमूलकत्वात् । तादृशकाव्यस्यैव कीर्त्यादिहेतुत्वात् । यदुक्तम्--

"गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥"

एवं पीयूषं मन्दरेण सजनकं भवति। तस्य समुद्रमन्थनहेतुत्वात् । इदं तु अमन्दस्य भूयसो रसस्य जनकम् । तच्च पततां पक्षिणामधिपेनापहार्यं गरुडेन तदपहारात् । इदं तु पततां पतिततुल्यानां ज्ञानहीनानां मुख्यैरनपहार्यं दूषयितुमशक्यत्वात् । एतेन तेषां दूषणप्रवृत्तिरेव मोहाद्भवति न तु निर्वहतीति द्योत्यते । अत्र पीयूषान्वितार्थाभावस्य नैषधान्वितार्थप्रतिपादकपदश्लेषमर्यादाबोध्यस्य तेन सहाभेदमभिधाय व्यतिरेको बोध्यः ॥५३॥

पुनरपि तद्वर्णयति—

नलघटितं प्रोच्छ्वासितविदेहजन्मान्तरं सदनुरागम् ॥
अत्यन्तमेकरूपं जानीमो नैषधं च सेतुं च ॥ ५४ ॥

अत्र सेतु–तत्काव्य–नैषधानां साम्यं वर्ण्यते। आद्ये नलेन वानरविशेषेण निबद्धम्। द्वितीये तेनैव घटितं तत्कथानिबन्धात्। तृतीये नलेन राज्ञा घटितं तच्चरितवर्णनात्। प्रकर्षेण उल्लासितं विदेहजन्मनः सीताया अन्तरं मनो येन। पक्षे प्रकृष्टा रमणीयवर्णनमया उच्छ्वासाः सर्गाः सञ्जाता अस्येति तारकादेराकृतिगणत्वादितच्। विदेहजन्मा सीता अन्तरे यस्य वर्णनीयत्वात्। उभयोः कर्मधारयः। पक्षे उच्छ्वासितमानन्दितं विदेहजन्मनां पण्डितानामन्तरं येन। मैथिलानां पाण्डित्यातिशयात्तदानन्दजननेनातिशयसूचनम्। यद्वा विदायां ज्ञाने ईहा इच्छा यत्र तादृशं जन्म येषां, सर्वजन्मनि ज्ञानमात्रार्जनरतानामिति यावत्। रं वाडवरूपमग्निम् अनुगतोऽनुरः समुद्रः। “रः पावके च तीक्ष्णे च” इति विश्वः। अगाः पर्वताः। आश्रयतया स्वरूपघटकतया सन्तो विद्यमाना अनुरागाः समुद्राः पर्वता यत्र। पक्षे सन् सर्गान्ते नियमेन विद्यमानोऽनुरागशब्दो यत्र। सेतुकाव्यस्यानुरागाङ्कत्वात्। उक्तं च तत्रैव—

(१)“एत्थ समप्पइ एअं सीआलम्भेण जणिअहिअआणन्दम् ॥
रावणवहत्ति कव्वं अणुराअंकं सकस्स सुहणिव्वेसम् ॥

पक्षे सतामनुरागो यत्र। मन्दैरर्थानवबोधेनानादरणात्।

(१) अत्र समाप्यत एतं सीतालम्भेन जनितहृदयानन्दम्।
रावणवधेति काव्यमनुरागाङ्कं शकस्य सुखनिर्वेशम् ॥

तथाच नैषधकारः--

"मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥
यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ॥" इति ॥ ५४ ॥

एकेन भासं स्तौति--

शब्दान्तरादितोऽपि व्यतिरेको भाति कवितायाः ॥
ओत्रैकग्राह्यापि यदुल्लासं प्राप भासमासाद्य ॥ ५५ ॥

घटमानयेत्यादिलौकिकशब्दात्काव्यस्य चमत्कारजनकत्वादिना भेदस्तावत्सर्वसिद्धः । तत्रान्योऽपि हेतुरुत्प्रेक्ष्यते । शब्दान्तरसाक्षात्कारे आलोकस्य नापेक्षा चाक्षुष एव तस्य सहकारित्वात् । काव्यस्य भासं प्राप्यैवोल्लास इति शब्दान्तरव्यावृत्तधर्मादितरशब्दाद्वैलक्षण्यम् । पक्षे भासमिति भाःशब्दस्य द्वितीयान्तम् । "भाभासौ धातुभेदात्" इतिवामनोक्तेः । उल्लासः= काव्यान्तरादुत्कर्षः साक्षात्कारश्च । उभयत्राप्यभेदारोपः ॥५५॥

द्वाभ्यां मुरारिं स्तौति--

अतिवर्द्धमानजन्मा कृतशङ्खसपक्षभावो यः ॥
वाचामाश्रय एकः स मुरारिरितीदमर्हत्तमम् ॥ ५६ ॥

मुरारिकवेर्नारायणाभेदो वर्ण्यते । अतिशयिताद्वर्द्धमानसंज्ञात् जन्म यस्य । "भट्टश्रीवर्द्धमानतनुजन्मन" इति प्रस्तावनायां तदुक्तेः । पक्षे--अत्यन्तमेधमानानि जन्मानि यस्य नानावतारकरणात् । कृतो वर्णितः शङ्खस्य सपक्षभाव उपमेयनिष्ठो येन । तथाच तत्र नान्दी--

"निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ॥
याभ्यामर्द्धविबोधमुग्धमधुरश्रीरर्द्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥" (अनर्घराघवे)

पक्षे कृतशङ्खासुरवधः । स्पष्टमपरम् ॥ ५६ ॥

पुनर्वर्णयति--

**वल्मीकभवस्य मुनेर्महिमा मार्गं गिरामतिक्रान्तः ॥**
**सोऽपि मुरारिर्यस्मादालपितो बालवाल्मीकिः ॥ ५७ ॥**

तस्मादुत्कृष्टोऽपि मुरारिर्यद्बालवाल्मीकिरित्येव व्यपदिश्यते तत्तस्य महाभाग्यम् । अथ कवितादात्म्येन विवक्षितो नारायणोऽपि वाल्मीकिमपेक्ष्य बाल उक्त इदमपि तथा । अथ बालो वाल्मीकिर्यस्मादिति तदपेक्षकिञ्चिदपकर्षस्यान्यदुर्लभस्यापि वाल्मीकिनैव प्राप्तत्वात् तन्निरूपकत्वेन महत्त्वमित्यर्थः ॥ ५७ ॥

एकेन शूद्रकं वर्णयति--

**स्यन्तरसङ्गमरहितं प्रकरणकृष्टाखिलपुरान्तम् ॥**
**कादम्बरीप्रणयिनस्तनुमन्यां शूद्रकं जाने ॥ ५८ ॥**

कादम्बरीपदस्य सुरा-नायिकाविशेषवाचकत्वेन तत्प्रणयिपदेन बलदेव-चन्द्रापीडग्रहणम् । शूद्रकः=कविर्नृपविशेषश्च । स हि चन्द्रापीडे मृते तदवतार इति तत्र कथा । कवेर्धार्मिकतयाऽन्यस्त्रीसम्बन्धनिवृत्तिः । बलस्याप्येकपत्नीव्रतेन तथा । राज्ञस्तु प्राग्भवीयकादम्बर्यनुरागसंस्कारेण । प्रकरणं=मृच्छकटिकाख्यं नाटकं, तेन वशीकृतं सर्वेषां मनो येन । उपचाराच्छरीरवशीकारोक्तिः । पक्षे प्रकरणेन शाम्बरोधप्रसङ्गेनाकृष्टं हास्तिनाख्यं पुरं येन । नृपपक्षे प्रकृष्टैः करणैर्हस्ताद्यङ्गैरनुरञ्जितं सर्वनगराधिलं

येनेत्यर्थः ॥ ५८ ॥

एकेन गोवर्द्धनाचार्यं स्तौति—

**गिरिनायकभूतोऽयं कृतगोरक्षो जलौघपरिभावात् ॥**
**गोवर्द्धनो विजयते योग्यत्वापन्नयोगार्थः ॥ ५९ ॥**

योगार्थो गां वाचं वर्द्धयतीत्यवयवार्थो योग्यत्वमन्वयप्रतियोगित्वमापन्नः। "द्वितीया श्रिता" ( २ । १ । २४ ) इतिसमासः। 'गिरि' इतिसप्तम्येकवचनं गीःशब्दस्य, तत्र नायकस्तदभिज्ञत्वात्। पर्वतपक्षे गिरीणां नायकभूत इत्यर्थः। डलयोरैक्यात् जडसमूहकृतात्परिभावाद्विप्लवात् कृता गवां वाणीनां रक्षा सम्प्रदायानुच्छेदो येन। पक्षे इन्द्रमखनिषेधकुपितेन्द्रप्रयुक्तपुष्करावर्तकादिवृष्टिभयात्कृतधेनुरक्ष इत्यर्थः ॥ ५९ ॥

एकेन स्वगुरुं प्रणमति—

**पार्यन्तिकपर्याप्त्या कविपदशक्त्यैकविषयम् ॥**
**उत्तीर्णवाङ्मयाब्धिं वन्दे लक्ष्मीधरं तातम् ॥ ६० ॥**

"कविः काव्यकरे सूरौ" इति मेदिनी। एकशक्तिविषयत्वसमानाधिकरणापरशक्तिविषयत्ववन्तमित्यर्थः। प्रत्येकशक्तिविषयताया अन्यत्रापि सम्भवात् किञ्चित्कवित्वपाण्डित्ययोरेकत्रापि क्वचित्सम्भवादाह—पार्यन्तिकेति। पार्यन्तिकी पर्याप्तिर्यदुत्तरं तयोरुत्कर्षो न भवति तादृशतद्वत्त्वम्। तथाच काव्यान्तरपण्डितान्तरापेक्षयापकर्षसामान्याभाववन्तमिति फलितम्। अत्र हेतुमाह—उत्तीर्णेति। उत्कर्षेण तीर्णो वाङ्मयरूपः समुद्रो येन। अब्धिपदेन दुरवगाहत्वसूचनम्। सर्वविद्यापारगामिनमितियावत्। अथ च लक्ष्मीधरपदश्लेषोपस्थितनारायणाभेदसूचनम्। तत्र पारं संसारस्यास्त्येषामिति पारिणो योगिनस्ते-

षामन्तिकपर्यायत्या सामीप्यसम्बन्धेनोपलक्षितम् । तेषां सुज्ञेयतया सामीप्योपचारः । कं=सुखं, विपदां=दुःखानाम्, अशक्तिः=स्वसम्बन्धासामर्थ्यमभाव इतियावत् तद्रूपद्वयीसमाश्रयम् । त्रिषयपदस्याश्रयार्थत्वात् । उत्तीर्णेति "यतो वाचो निवर्तन्ते" इतिश्रुतेः वेदान्तजन्यवृत्तिविषयस्यापि ब्रह्मणः शुद्धत्वानभ्युपगमात् ॥६०॥

द्वाभ्यां रुद्रचन्द्रनृपं कीर्तयति—

**बद्धानुरागगर्भितसेतुः कवितासुधोदयोदन्वान् ॥**
**श्रीरुद्रचन्द्रनृपतिर्विभाति साक्षात्प्रवरसेनः ॥ ६१ ॥**

प्रवरा सर्वाङ्गसम्पन्ना सेना यस्य । अथच प्रवरसेनो राजा सेतुकाव्यकारः । अनुरागाङ्कत्वात्तस्य तद्गर्भत्वम् । अथच बद्धो जनानुरागपुरःसरः सेतुर्लोकमर्यादारूपो येन । एतेनोपमानस्य कवित्वमुक्त्वा उपमेयस्य तदाह—कवितेति । उपमानपक्षे पूर्वोपपादकत्वेनैतदन्वयः ॥ ६१ ॥

**अविकलकलाकुलमयः परिहीणभुजङ्गनिम्नगासङ्गः ॥**
**प्रवलयति रुद्रचन्द्रः कुतुकोदन्वन्तमुल्लसत्कवितः ॥६२॥**

रुद्रचन्द्रे राज्ञि रुद्रसम्बन्धिचन्द्रखण्डतादात्म्यमारोप्य तद्व्यतिरेकः प्रतिपाद्यते । चन्द्रान्वयिन्यर्थे स्ववाचकपदबोध्यान्यार्थाभेदाध्यवसायेन तस्य चन्द्राभेदाध्यवसितराजनिष्ठाभावप्रतियोगित्वं कथ्यते इति तन्निर्वाहः । हरचूडामणिचन्द्रो हि एककलारूपोऽयं तु पर्याप्तसर्वकलानिष्णातः तेन सर्वकलाविषयकसम्यग्बोधसूचनम् । एवं स सर्पाणां निम्नगाया गङ्गायाश्च सम्बन्धयुक्तः एकस्थानस्थितत्वात् । अयं तु भुजङ्गानां=सूचकानां, निम्नगानां=वेदविरुद्धाचारमसक्तानां च संसर्गहीनः । एवं स शुक्रवृत्तिकवित्वाख्यधर्मरहितः । तस्य चन्द्रावृत्तित्वात् । अयं तु उ-

ल्लसन्ती सर्वेषामुत्कृष्टत्वेन प्रतीयमाना कविता लोकोत्तरवर्णना यस्य तादृश इति । चन्द्रोऽपि समुद्रमुद्वेलयतीत्यर्थः ॥ ६२ ॥

सम्प्रति विनयप्रदर्शनपूर्वकं चिकीर्षितं प्रतिजानीते—

**प्राचीनैः सुचिरोच्चितपदार्थसारे सरस्वतीक्षेत्रे ॥**
**अर्थानां केषांचिच्चयतामहे कर्तुमुञ्छमिव ॥ ६३ ॥**

किञ्चिदुच्चयने बह्वर्थविशेषसम्भवात् सुचिरेति । एकेन चिरमप्युच्चयने तत्सम्भवात् प्राचीनैरिति बहुत्वम् । एतेन ततोऽर्वाचीनतया स्वस्य तदुच्चयनासामर्थ्यमपि सूचितम् । प्रकृते उच्चयनं=निबन्धः, पदार्थाः=धान्यादयः शब्दास्तदर्थाश्च । तैरपकृष्टतत्स्वीकारे उत्तमार्थशेषशङ्कावारणाय सारेति । सरस्वतीक्षेत्रे वाग्विषये इत्यर्थः । क्षेत्रत्वारोपेण (१)पावनसामर्थ्यद्योतनम् । अथच नदीतीरसम्बन्धिकेदारे । देवमातृकस्थले सर्वदाफलानुपपत्तेः । एतेन वाचः फलाव्यभिचारः सूच्यते । पतितवल्लरीग्रहणं शिलं तादृशबीजग्रहणमुञ्छ इति स्मृतिः । एनेनात्यल्पमेव तदवशिष्टं पदार्थजातमिति दर्शितम् ॥ ६३ ॥

अथ प्रेक्षावत्प्रवृत्तये अर्थानामानन्त्यमाह—

**विषया नैक विशेषाः पर्यवसायी न कल्पनाकोशः ॥**
**तस्मिन्मनोऽप्रतिहतं यदि तत्कैर्नाम किमुपात्तम् ॥ ६४ ॥**

सन्ति तावत्प्रतिपदार्थमनेके विशेषाः । कविभिश्च तत्तत्सामग्र्या प्रत्येकमुपस्थितानां पदार्थानां संसर्गं मानसमेव कल्पयित्वा तद्वर्णनं क्रियते । कल्पनस्य च पर्यवसानं नास्ति पदार्थभेदेन संसर्गभेदस्यानन्तत्वात् । स एव ह्यर्थो भङ्ग्यन्तरेण वर्ण्यमानो नूतन इव प्रतिभासते । अत एव ध्वनिकृदाह—

(१) वापनेति पाठान्तरम् ।

"ध्वनेर्योऽयं गुणीभूतव्यङ्ग्यस्यात्मा(१) निदर्शितः।
एतेनानन्त्यमायान्ति कवीनां प्रतिभागुणाः॥" (ध्वन्यालोके उ० ४ श्लो० १)

अत एव कल्पनाया आनन्त्येन कोशत्वोक्तिः। यदि तस्मिन् कल्पनाकोशे अप्रतिहतं=तत्तत्पदार्थसंसर्गज्ञानवैकल्यरहितं मनोऽस्ति तदा कैः किं गृहीतम्। अल्पमेव वर्णितमित्यर्थः ॥६४॥

सत्काव्यस्य सर्वोपादेयतामाह—

**तत्तच्छास्त्रसमुद्रावगाहलब्धानि बुद्धिरत्नानि॥
ग्रथितानि शक्तिमद्भिः शब्दगुणे भूषयन्त्यखिलकण्ठान्॥६५**

यथा समुद्रादुपात्तानि मौक्तिकादिरत्नानि ग्रथनकुशलैः सूत्रेषु गुम्फितानि कण्ठं परिष्कुर्वन्ति तथा बहुविधवाङ्मयपर्यालोचनोत्पन्ना बुद्धयः तद्विषयीभूता अर्थाः कवित्वबीजभूतसंस्कारविशेषरूपशक्तिशालिभिः सत्कविभिः शब्दे निबद्धाः सन्तः कण्ठं भूषयन्ति। तादृशकाव्यपाठकानामनभिज्ञापेक्षोत्कर्षवत्त्वमेव शोभा। 'शोभतेऽस्य मुखम्' इत्यादौ पूर्वमीमांसायां तथा निर्णयात्। एतेन सर्वविद्यानां काव्योपयोगदर्शनम्। तदुक्तम्—

"न तच्छिल्पं न तच्छास्त्रं न सा विद्या न सा कला॥
जायते यन्न काव्याङ्गमहो भावो गुरुः कवेः॥" इति ॥६५॥

यत एवोक्तविधं काव्यं सर्वैरुपादीयते अत एव सर्वदाध्ययनाविच्छेदात्तदुच्छेदो न भवतीत्यभिप्रायेणाह—

**सुखगम्यध्वनिशालिन उज्झितदोषाः प्रसन्नरसाः॥
काव्यविशेषा गङ्गापूरा इव नैव यान्ति विच्छेदम्॥६६॥**

गङ्गाप्रवाहपक्षे- स्पष्टम्। सुखगम्येति अगूढत्वास्फुटत्वनिरा-

(१) व्यङ्ग्यस्याध्वा इति पाठः काव्यमालामुद्रितध्वन्यालोके।

सः । असहृदयैरपि संवेद्यत्वं सहृदयैरपि कष्टवेद्यत्वं च तदुभयलक्षणम् । अत एवोक्तम्—

"नान्ध्रीपयोधर इवातितरां प्रकाशो
नो गुर्जरीस्तन इवातितरां निगूढः ॥
अर्थो गिरामपिहितः पिहितश्च कश्चि-
द्रम्यत्वमेति मरहट्टवधूकुचाभः ॥"

काव्यप्रकाशे—"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥" ( उ० १ ) दोषाणां व्याकरणच्छन्दोविरुद्धत्वादीनां त्यागः । प्रसन्नः स्वशब्दवाच्यत्वादिदोषरहितो रसो यत्र । आल्हादकत्वावच्छेदकरूपेण रसोपस्थापका इत्यर्थः । एतादृशवैलक्षण्यवैशिष्ट्यदर्शनाय विशेषा इति ॥ ६६ ॥

प्रसङ्गादसत्काव्यकर्तॄणां स्वरूपमाह—

**विषमदृशां विबुधानां जातुचिदिष्टावनुपयुक्तम् ॥**
**कुकवय उग्रनिसर्गा दुर्वर्णमुदीरयन्त्यपि रुदित्वा ॥६७॥**

विषमा विषयपरिच्छेदहीना दृक् ज्ञानं येषाम् । विबुधानां= सहृदयानाम्,इष्टौ=आनन्दे । अनुपयुक्तं तदजनकत्वात् । यदृच्छाया अविषयत्वात् । उग्रो रसहीनतया तीक्ष्णप्रायो निसर्गः स्वभावो येषामीदृशाः कुत्सिताः कवयो रुदित्वापि महता प्रयासेनेतियावत् । दुष्टं वर्णं काव्यरूपमुदीरयन्ति प्रकाशयन्ति । अथच विषमदृष्टिस्त्रिनेत्रत्वात् । उग्रो रुद्रस्तत्स्वरूपाः । रुद्रेणापि रुदित्वा दुर्वर्णं रजतं प्रकाशितम् । तदपि विबुधानां देवानामिष्टौ यज्ञकर्मण्यनुपयुक्तम् । तथाच श्रुतिः—"सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं तस्य यदश्रवशीर्यत तद्रजतमभवत्तस्माद्बर्हिषि रजतं न देय-

म्'' इति । बर्हिषि यज्ञ इत्यर्थः । अयं च ''हिरण्यं निधाय वेतव्यम्'' इति वपने विहितस्य हिरण्यस्य स्तुत्यर्थं रजतनिन्दार्थवादः ॥ ६७ ॥

इदानीमसत्काव्यस्य कर्त्तुरज्ञानसूचनद्वारा दुर्यशोहेतुतया तस्य च—(दुर्यशसः)

''कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ॥
अकीर्तिं तु नरा लोके नरकोद्देशदूतिकाम् ॥''

इत्यनर्थजनकत्वात्तस्य(असत्काव्यस्य)हेयत्वार्थं तन्निन्दां निबध्नाति

**सन्तोऽपि रसविशेषाः केचित्पृथिवीविकारसम्भूतैः ॥**
**कूपैरिव दुष्काव्यैः स्वगर्भिता नेतरोपकाराय ॥६८॥**

स्वतः समाल्हादहेतवोऽपि रसादयोऽर्थाः कुकाव्यनिबद्धाः सन्त इतरेषामाल्हादं न जनयन्ति । तदुपस्थापकसामग्रीवैकल्याच्चमत्कारापकर्षकहेतुमत्त्वाद्वा । यथा जलानि शैत्यादिगुणविशिष्टान्यपि कूपान्तर्गतानि तदुद्धरणसामग्रीराहितानां तृष्णाप्रतीकारं न कुर्वन्ति तद्वत् । पृथिवीशब्देन तद्वासिजनग्रहणम् । तेषां विकाराय वैमुख्यार्थम् उत्पन्नैरिति काव्यपक्षे । पृथिवीविकारा इष्टकादयः तज्जनितैरिति कूपपक्षे ॥ ६८ ॥

सम्प्रत्यापातरमणीयं काव्यं निन्दति—

**अन्तःसारविहीनाः प्रतिभानविशेषकृतपरिष्काराः ॥**
**दधतीह काव्यभेदाःकृत्रिममणिवत्प्रकर्षमापातात्॥६९॥**

सारः=रसादिरुज्ज्वलतादिश्च । परिष्कारः=शब्दाडम्बरादिः रूपाद्याधानं च । आपातात्=यावत्पर्यन्तं सम्यक् न विचारितास्तावदेव समीचीनतया भासन्ते । एतेनाज्ञमात्रोपादेयत्वं सूचितम् । सहृदयास्तु त्रिभाव्यैवोपाददतीति तदुपादानं

विना काव्यस्य वैफल्यात् अङ्गमात्रपरिग्रहेण न कृतकृत्यत्व-मित्यर्थः ॥ ६९ ॥

तदेवाह—

**इह परमोदनहीनास्त्यक्तरसव्यञ्जनास्तृणप्रायाः ॥**
**बिभ्रति काव्याभासा दुर्गतपाकस्य (१)सम्भोज्यम् ७०**

अथच पापपरिणामवत् सहृदयानामुद्वेगमेव जनयन्तीत्य-र्थः। परेषां सहृदयानां मोदनं चमत्काराधानं तदसमर्थाः। पर-मत्यन्तमोदनेन हीना असदन्नप्रायत्वात्। त्यक्तं रसानां शृङ्गारा-दीनां व्यञ्जनं विभावादिद्वारा ध्वनिर्यैः। विभावादिद्वारोपस्थिता एव हि ते चमत्कारकारकाः। तत्र(काव्याभासेषु)तु स्वशब्दादिभि-रुपस्थिता इति न चमत्कारहेतवः। पक्षे त्यक्तरसानि लवणादिर-हितानि व्यञ्जनानि शाका येषु। तृणप्रायाः विचारासहत्वात्। पक्षे शाकबाहुल्यात्। तदाह—

"आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ॥
शाकोत्तरं दरिद्राणां भोजनं भरतर्षभ ! ॥" इति ॥७०॥

एवं सप्रपञ्चमभिधाय चमत्कारजनकवाक्यमेव काव्यमिति सङ्क्षिप्य दर्शयति—

**शीलं पतिव्रतायां रूपं वेश्यासु संसृतौ विद्या ॥**
**संन्यासिषु वैराग्यं काव्ये सारं चमत्कारः ॥ ७१ ॥**

"आर्तार्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ॥
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" ॥ "शीलं स्वभावे सद्वृत्ते" इत्यमरः। सद्वृत्तहेतुतया तयोक्तिरिति व्रत-खण्डे हेमाद्रिः। रूपमिति। अन्यथा तदनादरणात्। विद्ये-

१ सम्भाज्यम् भोगम्।

ति। ऐहिकामुष्मिकफलापवर्गहेतुत्वात्। वैराग्यमिति। यदुक्तम्—

"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्॥
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥"(भ० गी० अ० ३ श्लो० ६)चमत्कार इति। चमत्कारत्वं सहृदयप्रतीतिसिद्धो जातिविशेष इति रसगङ्गाधरकृतः॥ ७१॥

सम्प्रति यस्य यावदेव ज्ञानं तद्विषयार्थेनाल्पज्ञबहुज्ञसाधारणचमत्कारजनकं मुख्यं काव्यमिति दर्शयति—

भावक्षोदविदग्धान्यथास्थितग्राहिणोऽपि सत्पुरुषान्॥
सत्कविता युवतिरिव प्रमोदयत्येव निर्विशेषेण॥७२॥

भावक्षोदः=पदार्थरसादिविचारः। पक्षे तदीयेङ्गितादिपरिच्छेदः। यथा युवतिः पामराणां कामशास्त्राद्यभिज्ञानां च समाल्हादमादधाति तथा सत्कवितापि। निर्विशेषस्तु चमत्कारोपजननमात्रेण न तूभयचमत्कारसाम्याभिप्रायेणेति बोध्यम्॥ ७२॥

इति ग्रन्थारम्भः॥

पाठक्रमं समवलम्ब्य समस्तवर्ण—
व्याश्रिस कादिषु परं तमपि स्वराणाम्॥
किञ्चिन्निपातमपहाय पुरःप्रयुक्त—
शब्दप्रयोगरहितः प्रथमं निबन्धः॥ १॥

एकापि चोक्तिरिह भूयसि सम्भवन्ती
योज्या स्वयं सहृदयैरुचितानुसारात्॥
उद्देशतस्तु विवरीतुमहं प्रवृत्त—
स्तां विभाव्य परिदर्शयितास्मि किञ्चित्॥ २

तत्र परिहासेन नायिकासङ्गममपलपन्तं नायकं सहचरो हेतुना निर्णीय तं दर्शयति—

**असहत्कलेवरवीरुधि सुहृदि विभाते शयानायाम् ॥**
**नयनानि कमलकुमुदावस्थां दधते सखीसपत्नीनाम् ७३॥**

असहत्वमपाटवम् । हेत्वन्तरबाधसहकृतप्रभातशयनेन सख्यां नायिकानुरागसूचकसम्भोगमनुमाय सखीनामानन्दोद्रेकान्नयनसमुल्लासेन प्रातर्विकसितपद्मावस्था । सपत्नीनां तु तत एव विषादसमुन्मेषान्नयनमीलनेन सङ्कुचत्कुमुदावस्था । अन्यावस्थायाः परेण प्राप्त्यनर्हत्वात्साम्यपर्यवसानेन पदार्थनिदर्शनालङ्कारो यथासङ्ख्यं च । तयोः स्वरूपमलङ्कारकौस्तुभे—

"उपमापर्यवसन्नो यत्रार्थोऽन्योन्यमन्वयानर्हः ॥
यच्च क्रियया कारणकार्यान्वयधीर्निदर्शना सोक्ता ॥"
"निर्देशक्रमतो यदि समन्वयस्तद्यथासङ्ख्यम् ॥"

वीरुदिति मृदुत्वसूचनम् । एतेन मौग्ध्यं द्योतितम् । "नात्यन्तं क्लेशसहा नारी नवयौवना ज्ञेया" इति भरतात् ॥७३॥

काञ्चिदुत्तमनायकमपहायान्यत्रासञ्जयितुकामा कुट्टनी नायिकामाह—

**अवरस्य चोत्तरस्य च सर्वादित्वं व्यवस्थया भवति ॥**
**समयविशेषनिबन्धनमादरणीयत्वमखिलस्य ॥ ७४ ॥**

अवरः=हीनः। उत्तरः=श्रेष्ठः । "उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तर" इत्यमरः । पक्षे उभयशब्दस्वरूपग्रहणम् । सर्वादित्वं=सामान्यं सर्वादिगणपाठप्रयुक्तकार्यवत्त्वं च । व्यवस्था=कदाचिदुत्तमस्योपादानं कदाचिच्चापकृष्टस्येति विभागः । पक्षे स्वाभिधेयस्य नियमेनावध्यपेक्षा । पूर्वापरादिशब्दानां हि अर्थो नि-

गमेनावाधितापेक्षः । पूर्व इत्युक्ते कस्मादित्याकाङ्क्षोदयात् । अत्र पाणिनिसूत्रम्-"पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्" इति । (१।१।३४) अत्र लौकिके शास्त्रीयव्यवहारारोपरूपा समासोक्तिः ॥ ७४ ॥

काञ्चित्कुलकामिनीमुपपतावुपोद्बलयितुं दूती श्लेषेणाह—

**अयि सत्तासामान्यं नास्ति न वा जातिसङ्करो दोषः ॥**
**भूयांसः समवाया मार्गोऽयं श्रूयतेऽभिनवः ॥ ७५ ॥**

अभिनवत्वं रसिकमात्रक्षुण्णत्वात् । सत्ता=साधुत्वं तत्सामान्यम् । नास्ति=तन्नाश्रयणीयम् । जातिसङ्करः=अन्यजातीयाया अन्यजातीयेन समागमः । समवायाः=सम्बन्धा बहवः कार्याः । न तु "नैकस्यै बहवः सह पतय" इति वचनादेकत्रैव सर्वदा स्थेयम् । पक्षे अभिनवः=नूतननैयायिकोन्नीतः । द्रव्यगुणकर्मवृत्तिसत्ताजातिं प्राचीनाः स्वीकुर्वन्ति । नतु नव्याः । प्रमाणाभावात् । तथा परस्परात्यन्ताभावसमानाधिकरणत्वे सत्येकाधिकरणवृत्तित्वरूपं साङ्कर्यं जातिबाधकं ते मन्यन्ते, न त्वेते । दूषकताबीजाभावात् । एवं सर्वगुणादीनां समवायमेकमेव ते आहुः । एते तु गन्धरससमवायाभेदे जलेऽपि गन्धवत्ताप्रतीतिः स्यादिति नानैवेत्यर्थः ॥७५॥

पूर्वमनुनयासक्तमपि नायकमवधीर्यानुतप्यमानां स्वलाघवशङ्कया नायकानुनयं कर्तुमनिच्छन्तीं नायिकां सखी सोपन्यासमाह—

**अवलोक्यते न सन्ध्यक्षरे सखि ! ह्रस्वता क्वापि ॥**
**विदुषिब्रुवे ! विधिवशात्तेन युता सुत्यजा किंवा ॥७६॥**

पूर्वार्द्धे सख्युक्तिः । सन्धिः=परस्परानुवर्तनं तत्प्रतिपादकाक्षरे ह्रस्वता अपकर्षो न भवति । तेन प्रेयान् प्रार्थ्यताम् । अथच स-

न्ध्यक्षरेति एकारादिवर्णचतुष्टयसंज्ञा शाब्दिकानाम्। तत्र ह्रस्वत्वं नास्ति दीर्घप्लुतानामेव तेषां सर्वत्र ग्रहणादिति द्वितीयोऽर्थः। उत्तरार्द्धे च नायिकोत्तरम्। कुत्सिता विदुषी विदुषिब्रुवा पण्डितम्मन्येत्यर्थः। घरूपेत्यादिना पुंवद्भावं बाधित्वा ह्रस्वः। तेन= नायकेन, भाग्यवशात् युता=मिलिता अन्या नायिका किं मदुक्त्या सुत्यजा किंतु नैव। तथाच वरं वैयर्थ्याद्वरं (१)मानमेव रक्षेयम्। अथच तेन सन्ध्यक्षरेण विधेः ह्रस्वविधानस्यानुरोधात् युता इकारोकाररूपत्वमवश्यं प्राप्यम्। इकारोकारयोर्द्वन्द्वे तल्प्रत्यये युतेतिरूपम्। तेषां ह्रस्वत्वाभावेऽपि यत्र तेषां ह्रस्वो विधीयते तत्रेकार उकारो वा भवत्येव यथा गोशब्दस्य ह्रस्वत्वे चित्रगुरित्यादाविति भावः॥ ७६॥

काचिद्विरहिणी कुसुमितकिंशुकमुपवनं द्रष्टुमशक्तेदमाह—

**अनरण्यं सखि! शृणुमो हतं पलाशेन पूर्ववाक्येभ्यः॥**
**अधुनारण्यमपीदं हतं पलाशेन पश्यामः॥ ७७॥**

पलाशो राक्षसः। पलं मांसमश्नातीति व्युत्पत्तेः। अनरण्यो नाम रघुवंशीयो राजा दिग्विजयप्रसङ्गे रावणेन हत इत्युत्तरकाण्डे। पलाशेन=किंशुकेन। अरण्यं= वनम् अनरण्यविरुद्धं च। हतं=दुर्दर्शीकृतं मारितं च। अनरण्यस्य पलाशहतत्वादरण्यस्यापि तद्दर्शनं चित्रमित्यर्थः। "पलाशः किंशुके सट्यां हरिते राक्षसेऽपि च।" इति विश्वः॥ ७७॥

काचित्कृतापराधे नायके मानबन्धाय प्रेरयन्तीं सखीमाह—

**अश्मत्वं स्पर्शमणाविक्षौ ग्रन्थिः सुधानिधावङ्कः॥**
**अपराधित्वं प्रणयिनि हेयत्वं न प्रयोजयति॥ ७८॥**

(१) वरं=श्रेष्ठं, मानविशेषणमेतत्।

यत्संयोगाद्धात्वन्तरस्य स्वर्णत्वं स स्पर्शमणिः । इक्षुपदेन प्रसिद्धतया माधुर्यलाभः । प्रणयिनीत्यत्र विषयतासम्बन्ध इति प्रत्ययार्थः । हेयत्वमुपेक्षणीयत्वम् । तथाच गुणविशेषसामानाधिकरण्याभावविशिष्टानामेवैषां हेयत्वप्रयोजकत्वं न तु तत्समानाधिकरणानामपीति मानानौचित्यमित्यर्थः ॥ ७८ ॥

कृत्रिमगुणां नायिकामापाततो बहुमन्यमाने नायके गुणगर्वेता काचिन्निगूढाभिप्रायमाह—

**अहह गुणैरिह कृतकैः परमाणून् पार्थिवानाह ॥**
**स्वाभाविकगुणयुक्तान्पुनर्जडाख्यान् हतो लोकः ॥७९॥**

अहहेत्यनुचितार्थानुभवविषादसूचनम् । नित्यपृथिवीगुणानामपि पाकजत्वमिति सिद्धान्तात् कृतकैरिति । गुणैर्गन्धरूपादिभिर्युक्तान् परमाणून् पृथिवीसम्बन्धिनो वदति । नित्यगुणयुक्तांस्तु परमाणुविशेषान् जलसंज्ञान् वदति । नित्यजलादिगतगुणानां नित्यत्वस्वीकारात् । अथच कृत्रिमगुणान् पार्थिवान् राजतुल्यान्, निसर्गसिद्धगुणांस्तु जडान् ब्रूते । हतः परमार्थानभिज्ञ इति ॥७९॥

काञ्चिदगुणज्ञेन नायकेनानाद्रियमाणां कुलवधूं कापि सदाचारा वृद्धा उपदिशति—

**अनिशं तिरस्कृता सखि ! तेन निकारोत्तरोपसर्गेण ॥**
**स्मरणार्हप्रकृते ! नय समयं साधुत्वमन्यथा न भवेत् ८०**

स्मरणीयप्रकृतित्वेन तस्या अनुपेक्षात्मकज्ञानविषयत्वाक्षेपादभ्यर्हितत्वद्योतनम् । निकारोत्तरेण= त्वत्तिरस्कारप्रधानेन, उपसर्गेण=कार्ये कारणोपचारादवश्यमुपद्रवजनकेन, तिरस्कृता= त्वदपकृष्टगुणनायिकान्तरप्रेमादिनाऽनादृतापि कालमतिवाहय । अन्यथा सतीत्वहानिः स्यात् । अथच स्मरणवाचिका प्रकृतिः 'स्मृ

स्मरणे' इतिधातुः निशब्दोत्तरम्–'अधि' इत्यस्य प्रादिषु पाठात् निकारोत्तरेणाध्युपसर्गेण नित्यमादौ प्रयुज्यमानेन पश्चात्कृतैव प्रयोगार्हा । "इङिकावध्युपसर्गतो न व्यभिचरत" इतिन्यायेन केवलयोः प्रयोगानर्हत्वादित्यर्थः ॥ ८० ॥

'कथं स्वीयप्रियमपहायान्यत्र रक्तासि' इतिवदन्तीं सखीं काचिदाह––

**अनुकूलेनैव समं प्रणयः साजात्यमनपेक्ष्यम् ॥**
**दहनस्य सखा पवनस्तेजस्त्वभिभावकं सौरम् ॥ ८१ ॥**

अनुकूलेन=स्वचित्तानुवर्तिना। पक्षे स्वकारणीभूतेन । साजात्यं= समानजातीयत्वम् । अनपेक्ष्यम्= अनादरणीयम् । परस्परविरुद्धतेजस्त्ववायुत्वावच्छिन्नयोरपि दहनमारुतयोः सख्यस्य तेजस्त्ववतोरपि वन्हितपनयोरभिभाव्याभिभावकत्वदर्शनाच्च । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८० ॥

एकस्मिन्नेवावधिदिने परिशिष्टे सति नायिकासमाश्वासनाय सख्या कृतं विशेषं सहचरः सश्लाघं नायकाय निवेदयति––

**अवधिदिवसोऽयमेकोऽवशिष्ट इति दत्त एकाङ्के ॥**
**पूर्वाङ्का अपि दत्ताः प्राच्यनयेनेति विवदते स्म सखी॥८२॥**

गतदिवसानां बहुत्वादवशिष्टैकदिनस्यैवाङ्को दत्तः। सख्या तु दिनान्तरसङ्ख्यार्था अप्यङ्काः प्राच्यलिप्यैव लिखिताःस्थिता इति प्रसवस्थानम् । तथाचायमप्यङ्को मैथिललिपिरीत्यैव दत्तः। ततश्च सप्तानामयमङ्को न त्वेकस्येति फलति । नागरिकलिपौ य एकाङ्कस्तस्य प्राच्यलिपौ सप्ताङ्कस्य लेखनात् । तेन किञ्चिच्चिरकालं नायकानागमनेऽप्यस्या आश्वासोऽस्त्वित्यभिप्रायः॥८२॥

नायकं स्वहस्तवर्तिनमभिज्ञाय सपत्न्यादीनवमन्यमानां ना-

यिकां हितैषिणी प्राह—

**अत्यन्तपदविदापि हि खलादरो जगति न त्याज्यः ॥**
**सुकरोऽथ दुष्करो वा किमन्यथा सिध्यति प्रणयः॥ ८३ ॥**

उन्नतपदारूढेनापि निश्चयेन खलानां दुष्टानामादरो न विधेयः। अन्यथा सुकरो दुष्करो वा प्रणयो न निर्वहति। तैस्तद्भङ्गोपायकरणादित्यर्थः। अथचात्यन्तशब्दज्ञेनापि खल्प्रत्ययस्यादरो न त्याज्यः। अन्यथा सुकरदुष्करशब्दौ न सिद्ध्यतः। "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ( ३ । ३ । १२६ । ) इतिसूत्रेण खल्प्रत्ययविधानादेव तत्सिद्धिरितिभावः ॥ ८३ ॥

कस्यचिदर्थे दूती नायिकामाह—

**अयि स गुणैकमयात्मा(१) मदनस्य शिलीमुखैर्निहतः ॥**
**नेत्रत्रिभागहरणात्कृतस्त्वया रूपमात्रपरिशेषः ॥ ८४ ॥**

अयीतिसानुनयसम्बुद्धौ। बहुगुणमयो मन्मथशरपीडितः स युवा नेत्रस्य तृतीयभागेन कटाक्षेण हरणात् वशीकारात् कृशशरीरतया रूपमात्रावशेषः कृतः। अथच गुणास्त्रय एकं चेति अङ्कदानात् त्रयोदशसङ्ख्या सम्पद्यते। तत्र मदनबाणैः पञ्चभिर्गुणने पञ्चषष्टिसङ्ख्या सिद्ध्यति। ततो द्वात्रिंशता तत्र भागहरणे चतुःषष्टेर्लोपादेकमेव परिशिष्यते। रूपेत्येकसङ्ख्योच्यते इति गणकाः।

"सन्देशो चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् ॥
तस्येयं संव्यवस्थेति कथयेद्विनयेन सा ॥" इतिभरतोक्तेः ॥८४॥

---

(१) एकं ( वस्तु ) प्रचुरं यस्मिन् स एकमयः "तत्प्रकृतवचने मयट् [ ५ । ४ । २१ ]। इत्यनेन प्राचुर्यार्थे मयट्। गुणेन एकमय इति तृतीयेति योगविभागात्समासः। धान्येन धनवान् इत्यादाविव 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इत्यनेन तृतीया। ततो बहुव्रीहिः।

काचित्प्रणयस्थैर्यार्थिनी नायकमाह—

**अभ्यासे सति भेदो भावस्याभ्युपगतो येन ॥**
**तेन गुणान्तरयोगात्तदुरीकारे किमाश्चर्यम् ॥ ८५ ॥**

चिरपरिचयोऽभ्यासः। भावोऽनुरागस्तस्य भेदो वैषम्यमपकर्ष इति यावत्। गुणान्तरं= प्रथमानुरागविषयनिष्ठगुणापेक्षयोत्कृष्टगुणः। तद्गुणत्वं चान्यस्या नास्त्येवेत्यभिप्रायात्सौन्दर्यगर्वितेयम्। अथच "समिधो यजति" "तनूनपातं यजति" इति पञ्चकृत्वो यजेरभ्यासाद्यागभेदः। "तप्ते पयसि दध्यानयति सा वैश्वदेव्याऽऽमिक्षा वाजिभ्यो वाजिनम्" इत्यत्र पूर्ववाक्यविहितदेवतावरुद्धे यागे वाक्यान्तरोपात्तवाजिनरूपगुणनिवेशायोगाद्वाजिनद्रव्यकं (वाजिदेवताकं) यागान्तरमेवेति मीमांसकमतध्वनिः॥८५॥

पूर्वं नायकाय दत्तलेखा मर्यादोल्लङ्घनसाहसभीता कुलकामिनी तत्सखी चेदमाहतुः—

**अभिजाततया च गुणादरेण च द्वापरो भवति भूयान् ॥**
**उल्लङ्घयितुं तत्र हि न शक्यते तन्वि! लिखितार्थः॥८६॥**

अभिजातता= कुलीनत्वम्। तेनाभिसारनिवृत्तिकोटिः। नायकस्योत्तमतया तद्ग्रहावश्यकत्वं गुणादरः। तेनाभिसरणकोटिः। "सन्देहद्वापरौ चाथ समौ" इत्यमरः। उत्तरार्द्धं सख्युक्तिः। तत्र सन्देहे सति लिखितः पूर्वं लिखित्वा नायकाय प्रेषितोऽर्थो न त्याज्यः प्रतिज्ञाभङ्गप्रसङ्गात्। अथच द्वापरयुगे लिखितस्य मुनेः स्मृत्यर्थो नोल्लङ्घ्यः।

"कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः ॥
द्वापरे शङ्खलिखितौ कलौ पाराशरः स्मृतः ॥"

इतिवचनात् ॥ ८६ ॥

पूर्वं कृतप्रणयभङ्गं पश्चात्तदनुबन्धकामं नायकं कापि सेर्ष्यमाह—

**अतिमात्रमकमनीयं चरितं पदमात्रनिष्ठानाम् ॥**
**प्रत्ययलक्षणमाह प्रत्ययलोपेऽपि पाणिनिर्यस्मात् ॥ ८७ ॥**

पदं=स्थानं साधुशब्दश्च । तत्रैव निष्ठा तात्पर्यं येषां तादृशानां चरितम् अत्यन्तमरम्यम् । पदप्राधान्येन प्रत्ययतिरस्कारात् । प्रत्ययः= प्रणयः स्वादिश्च । तस्य लोपेऽपि तत्कार्यं कुर्वन्ति नैतद्रसिकानां संमतम् । "स्थिरप्रेमा भग्नः सदासिरिव सन्धिं न भजते" इतिन्यायात् । पक्षे "प्रत्ययलोपे प्रत्ययलक्षणम्(१ । १ । ६२ ) इति सूत्रेण तदभावेऽपि तत्प्रयुक्तकार्यं कुर्वन्तीत्यर्थः ॥ ८७ ॥

कमपि चपलस्वभावं नायकं दृढानुरागं कर्तुं सखीदमाह—

**अत्यन्तदुरवगाहं हृदयसरस्वन्तमेतस्याः ॥**
**अन्तः प्रविशन्क्षोभं नयसितरां मन्दरागस्त्वम् ॥ ८८ ॥**

दुरवगाहम् अल्पगुणविषयकानुरागराहित्यात् । पक्षे दुस्तरम् । "सरस्वान् सागरोऽर्णवः" इत्यमरः । गाम्भीर्यादिना हृदयस्य समुद्रत्वम् । प्रविशन्=अनुरागविषयीभवन् । पक्षे प्रसिद्धम् । क्षोभं= निर्वेदादि उद्वेलत्वं च । मन्दो रागो यस्मिन् । अथच मन्दरनामकोऽगः शैलस्तद्रूपः । नयतेर्द्विकर्मकत्वात् उभयत्र द्वितीया । दुरवगाहेऽपि तत्र प्रयत्नविशेषेण प्रविश्य तत्प्रतिकूलाचरणमनर्हमित्यर्थः ॥ ८८ ॥

काचिद्ग्राम्यनायकासक्ता नगराङ्गना तद्नौचित्यमाशङ्कमानां सखीमाह—

**अग्रे निवेदये तव किं नाम प्राकृतीग्यवैदग्धीम् ॥**
**रेफस्य गमनमूर्ध्वं क्वचिदपि नाकर्ण्यते यत्र ८९ ॥**

"महाराष्ट्रोद्भवां भाषां प्रकृष्टं प्राकृतं विदुः"। इति दण्डी। "रेफो रवर्णे कथितः कुत्सिते वाच्यवत्पुनः"। इतिविश्वः। प्राकृतत्वं मुख्यार्थे तत्त्वेनाभिमतत्वमात्रत्वमतो न व्याघातः। रकारस्योपरिगमनं लिप्यभिप्रायेण। ऊर्ध्वगमनम् आदरविशेषश्च। प्राकृते हि जनार्दन इत्यादिस्थले कुत्रापि तस्योपरिलिखनं नास्ति। तथाच हलादिभूतरकारोच्चारणं नास्तीति फलितम्। एवं यत्र कुत्सितानामादरो नास्ति तेषां गुणज्ञतया लोकप्रवादमात्रेण न तत्परित्यागो युक्त इति भावः॥ ८९ ॥

शीघ्रगमनमभ्यर्थयन् कश्चिन्नायके नायिकावस्थामाह—

**अद्भुतमिदं यदिन्दुस्तपनः पवनश्च पावको जातः॥**
**तव विरहे किं चित्रं शरत्समा भवति यत्तस्याः॥ ९० ॥**

चन्द्रसूर्ययोरनिलानलयोश्च विरुद्धजात्यवच्छिन्नतया ऐक्यमनुपपन्नम्। दुःखदत्वतात्पर्याद्विरोधपरिहारः। आद्यो द्रव्यजात्योर्द्वितीयो जातेर्जात्या सह विरोधः। शरत्समय उद्दीपकत्वातिशयेन दुरतिवाहत्वात् समा वर्षप्रायो यद्भवति तद्युक्तम्। शरत्पदेन वर्षस्याप्यभिधानात्। स्वस्य स्वाभिन्नत्वादितिभावः। "हायनाब्दशरत्समाः" इत्यमरः॥ ९० ॥

कश्चिन्मनस्वी उन्नतपदमारोपयति स्वामिनि तद्भङ्गमभ्यर्थयन्नाह—

**अलमेवोदात्ततया तथाविधानामिह पदानाम्॥**
**आदावन्ते च भवेद्येषामावश्यकः खलु निपातः॥ ९१॥**

उदात्तता=महत्त्वम् "उच्चैरुदात्तः"( १।२।२९। ) इतिलक्षितः स्वरविशेषश्च। पदानाम्=अधिकाराणां शब्दानां च। निपातः=अपकर्षोऽनुदात्तत्वं च। पूर्वं स्वापकर्षमाधायैव प्राप्तं पश्चादपि

तदाधायकं च पदं न मानिनां हृदयमानन्दयति । एवं च-"अनुदात्तं पदमेकवर्जम्"(६।१।१५८)इतिसूत्रेण यत्र पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं विहाय तत्पदवर्तिनामन्येषामचामनुदात्तत्वविधानमिति लौकिके शास्त्रीयव्यवहारारोपरूपा समासोक्तिः । यद्वा प्रणयभङ्गभीता नायिका तत्स्थैर्यार्थमिदमाह।९१।

कश्चिल्लोकोत्तरगुणशाली अखिलग्राह्योऽल्पगुणेनैवानभिज्ञेषु लब्धादर आह--

**अतिमहतामपि लोके कृतकगुणेनैव विश्रुतिर्भवति ॥**
**परिमाणेन तथा नहि बोधेन यथा प्रकाशते जीवः ॥९२ ॥**

अतिमहताम्=उत्तमगुणवतां परममहत्परिमाणवतां च । कृतकेन=क्षुद्रेण जन्येन च । विश्रुतिः=प्रतिष्ठा प्रत्यक्षं च । विभोरपि जीवस्य जन्यगुणभूतज्ञानोपधानेनैव प्रत्यक्षं, नतु नित्यतत्परिमाणोपधानेन । बोधपदमिच्छादियोग्यात्मविशेषगुणोपलक्षणम् । तत्परिमाणस्याप्ययोग्यत्वमिति । पक्षे च परिमाणविशिष्टो जीवो न प्रत्यक्षः किंतु ज्ञानविशिष्ट एवेत्यपि व्याख्येयम् ॥ ९२ ॥

कश्चित्प्रियामाह—

**(१)अभ्रमुगतया कुन्तलभासा त्वं सुषमयानुपमया च ॥**
**लसदञ्जनया च दृशा वरवर्णिनि ! पद्मिनीत्युचितम् ९३**

पद्मिनी नायिकाविशेषः । तदुक्तम्—

"पद्मिनीं तदनुचित्रिणीं ततः शङ्खिनीं तदनु हस्तिनीं विदुः ।
उत्तमा प्रथमभाषिता ततो हीयते युवतिरुत्तरोत्तरम् ॥"

इति । ( रतिरहस्ये जात्यधिकारे श्लो०१०) अभ्रं मुञ्चति तया मेघनिष्ठात्यन्ताभावप्रतियोगिन्येतियावत् । अतया=प्रत्यक्षया ।

(१) अभ्रमुक् चासौ अता चेति कर्मधारयसमासः ।

तच्छब्दस्य परोक्षार्थवाचित्वात् । तेन स्वरूपासिद्धिनिरासः । अनुपमत्वमन्यानिरूपितसादृश्यानाश्रयत्वम् । अन्यनिष्ठसादृश्यप्रतियोगित्वमन्यप्रतियोगिकसादृश्याश्रयत्वं चेत्युभयस्यायं निषेधः । "सुषमा परमा शोभा" इत्यमरः । अथच पद्मिनी करिणी । "इभः स्तम्बेरमः पद्मी" इत्यमरः । "ऋन्नेभ्य" (४।१।५) इतिस्त्रियां ङीप् । अभ्रमुः अनुपमा अञ्जना चेति करिणीविशेषाः । भेदसम्बन्धावच्छिन्नाश्रयत्वे तादात्म्यावच्छिन्नत्वारोपादुक्तार्थसिद्धिः ॥ ९३ ॥

कश्चित्प्रियां मानयन्नाह—

**अवतंसनीलनलिनं कलयति मिलदुज्ज्वले कपोले ते ॥**
**मधुकमुकुलभ्रमाय तदात्मीयभ्रमरतादात्म्यम् ॥ ९४ ॥**

नीलोत्पलगतानां भ्रमराणां कपोले मधूककलिकाभ्रान्तिः । नीलोत्पले तु यथोक्तभ्रममूलककपोलसंयोगिभ्रमरतादात्म्यमिति रूपकम् । भ्रमरनीलोत्पलानां परस्परभेदज्ञानाभावरूपसामान्यालङ्कारस्तत्पर्यवसन्न इतिसङ्करः । कपोले मधूकसाम्यं कविसम्प्रदायः । "बन्धूकबन्धुरधरः सितकेतकाभं चक्षुर्मधूककलिकामधुरः कपोलः" इतिजयदेवादिप्रयोगदर्शनात् ॥ ९४ ॥

नायिकान्तरगुणप्रवादमाकर्ण्य शङ्कमानां नायिकां सखीदमाह—

**अहमहमिकया दूरात्प्रसरन्तु समस्तसुमनसां गन्धाः ॥**
**नतु मालतीमरिमलात्पुरतः केऽपि प्रयास्यन्ति ॥ ९५ ॥**

"अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः ।" इत्यमरः । सुमनसां=पुष्पाणां रसवत्तया सहृदयानां नायिकानां च । समस्तपदं मालत्यतिरिक्तपरम् । एतत्कक्षां केऽपि न धास्यन्तीति भावः । गन्धपदस्य साधारणार्थतया परिमलपदस्य विशेषार्थतया बहन्तरत्वं सूच्यते । पुरत इतिशब्दोऽसाधुरिति यद्यपि

बहवस्तथापि प्रामाणिकप्रयोगप्राचुर्यादखण्डनिपातान्तरमेवेत्य-भिप्रायेण प्रयोगः ॥ ९५ ॥

अतिरमणीयायामपि नायिकायां कस्यचिदनुरागे हेतुमु-त्प्रेक्षमाणं लोकमालोक्य कोऽप्याह—

**अतिसौरभानुरागे भृङ्गस्य गवेषयन्ति ये बीजम् ॥**
**ते सति सौरालोके वस्तुग्रहणाय दीपमनुसरन्ति ॥९६॥**

"सहकारोऽतिसौरभः" इत्यमरः । अतिशयितं सौरभं रा-मणीयकं यत्रेति च । "सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभि स्मृतम्" इतिविश्वः । यथा प्रकाशे सूर्यस्य सत्यपि चाक्षुषसाम-ग्रीसम्पादनाय दीपानुसारो विफलः तथा अतिसौरभहेतुमनादृत्य हेत्वन्तरान्वेषणमिति वाक्यार्थनिदर्शना । सौरभातिशयशालित्व-मेव तन्निदानमिति भावः ॥ ९६ ॥

कां चित्परपुरुषसङ्गमाशङ्कमानां कुलनायिकां दूतीदमाह—

**असमञ्जसमापातात्पद्मिनि ! मागणय भृङ्गसंसर्गम् ॥**
**मधुरिमवैलक्षण्यं जीर्यति परथा तवाविदितमेव ॥ ९७॥**

"समञ्जसं स्यादुचितम्" इतिशाश्वतः । "पद्मिनी स्त्रीवि-शेषेऽपि सरस्यामम्बुजेऽपि च ।" इतिविश्वः । यत्कामशास्त्रम्—

कमलमुकुलमृद्वी फुल्लराजीवगन्धः
सुरतपयसि यस्याः सौरभं दिव्यमङ्गे ॥
चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे
स्तनयुगलमनर्घ्यं श्रीफलश्रीविडम्बि ॥
तिलकुसुमसमानां बिभ्रती नासिकां च
द्विजगुरुसुरपूजां श्रद्दधाना सदैव ।
कुवलयदलकान्तिः कापि चाम्पेयगौरी

विकचकमलकोशाकारकामातपत्रा ॥(१)
व्रजति मृदुसलीलं राजहंसीव तन्वी
त्रिवलिललितमध्या हंसवाणी सुवेषा।
मृदु शुचि लघु भुङ्क्ते मानिनी गाढलज्जा
धवलकुसुमवासोवल्लभा पद्मिनी स्यात् ॥ (रति० प० १ श्लो० ११। १२। १३)

त्वदीयविजातीयमाधुर्यस्य तदन्येन विविच्य ज्ञातुमशक्यतया तत्संसर्गाभावे जन्यप्रत्यक्षविषयत्वमनापन्नस्यैव तस्य जीर्णत्वप्रसङ्गादित्यर्थः ॥ ९७ ॥

सखी युवानावाह—

**अन्योन्यमात्रविषयकरागे समवायिनोर्युवयोः ॥**
**अन्योन्यगुणोत्कर्षः प्रतियोगिपरोक्षमात्रविनिरूप्यः॥९८॥**

(२)स्वमात्रविषयकप्रेमसमवायिमात्रविषयकप्रेमसमवायित्वं विशेषणार्थः। उभयविषयकत्ववारणाय मात्रेति। प्रतियोगिनोऽत्र स्त्रीपुंसान्तरगुणाः। परोक्षज्ञानेनैव तदपेक्षयान्योन्यगुणोत्कर्षप्रत्यक्षम् अन्यगुणासाक्षात्कारादिति भावः ॥ ९८ ॥

दाक्षिण्येन बहिरादरोचिताचरणपरमन्यासक्तं नायकं काचिदेवमाह—

**अविशेषः प्रतिभात्यपि सुन्दर! कर्तव्ययोरुभयोः ॥**
**स्फुटति त्वविरहगम्योऽभियुक्तवेद्यः स्वरविभेदः॥९९॥**

उभयोः=अनुरागाननुरागपूर्वकयोः, कर्तव्ययोः=दर्शनभाषणादिरूपयोः, अविशेषः=साम्यं यद्यपि प्रतिभाति तथापि

---

(१) कामातपत्रं योनिः।

(२) स्वपदेन नायिका ग्राह्या। तन्मात्रविषयकं प्रेम नायकनिष्ठं, तत्समवायी नायकः, तन्मात्रविषयकप्रेमसमवायित्वं नायिकायाम्।

(अभियुक्तवेद्यः=) विदग्धजनबोध्यः, अविरहेण नायिकान्तर-निवृत्त्यादिना गम्यः । स्वरविभेदः=शब्दादिनिष्ठं वैलक्षण्यं तु स्फुटति=सहृदयानां भासते एव । तदाह —

"सुहअ सरिसक्खराणवि अत्थि विसेसो पअपिअव्वाण ।
राअमइआण अण्णोण्णउअरोअमइआण ॥"

सुभग ! सदृशाक्षराणामपि अस्ति विशेषः प्रजल्पितव्यानाम् ।
रागमयानामन्योन्यमुपरोधमयानाम् ॥

अथच उभयोः तव्यतव्यत्प्रत्ययान्तयोः कर्तव्यशब्दयो रू-पमविशिष्टमेव भाति । तथापि तकार इत्संज्ञो यत्र स तित् तस्य भावस्तित्त्वम् विरहस्तित्त्वाभावः तद्गम्यः,(अभियुक्तवेद्यः) शब्द-शास्त्राभिज्ञगम्यः स्वरभेदोऽस्ति । तकारान्तस्य "तित्स्वरितम् ।" ( ६ । १ । १८५ )
इति स्वरितत्वादन्यस्य च प्रत्ययस्वरेणाद्युदात्तत्वादित्यर्थः ॥९९॥

कृष्णाभिसारिका मार्गस्खलनभयेन गमनाभावमाशङ्कमानां दूतीमाह—

**अध्वा विषमतमोऽसौ रजनिस्तिमिराकुला तदपि यामः ।**
**प्रकृतिविशेषैर्योगाद्यान्ति निपाता अपि गतित्वम् १००**

विषमतमेऽपि (पथि) दिने गमनसम्भवादाह—रजनिरिति । तत्रापि प्रकाशे गन्तुं शक्यत्वात्—तिमिरेति । चन्द्रोदयप्रतीक्षा-वारणाय आकुलेति । प्रकृतिः=अभिसारेच्छाशीलं, तत्सम्ब-न्धात् निपाताः=स्खलनान्यपि गतय आश्रयणीया एव भवन्ति । पतनभयेन ततो निवृत्तिरयुक्ता । तद्दोषसहिष्णोस्तत्राधिकारात् । अथच धातुविशेषयोगे निपातनामुर्यादीनामुपसर्गाणां च गति-संज्ञा भवति "गतिश्च" (१।४।६०) इत्यादिवचनादितिभावः ॥१००॥

कश्चित्स्वानुरूपार्थमनाचरन्तं सत्पुरुषमवलोकयन्नाह—

**अनुमन्यते तमिस्त्रं नियमयति कृतौ धियं नहि विशिष्टाम्।**
**गुरुतां परमनुरुन्धे प्रभाकरः पारिभाषिकोऽयमतः॥१०१॥**

प्रभाकरस्याभेदारोपेण प्रसक्तसूर्यसाधर्म्याभावः कथ्यते। सहि अन्धकारं विनाशयति, अयं तु स्वरूपविचारेण संमन्यते। स च कार्येषु विशिष्टज्ञानं जनयति। आलोकेन चाक्षुषादिसम्पत्त्या लोकानां प्रवृत्तेः। अयं तु कृतौ प्रवृत्तौ विशिष्टां बुद्धिं न नियमति। संवादिप्रवृत्तिरेव विशिष्टज्ञानात् विसंवादिप्रवृत्तिस्तु ज्ञानद्वयात्। शुक्ताविदं रजतमिति ग्रहणस्मरणात्मकं ज्ञानद्वयमेवेति प्राभाकराः। एवं सूर्यस्तेजस्त्वेन गुरुत्वरहितः। अयं तु गुरुत्वं दधाति गुरुसंज्ञत्वात्। तस्मात्सङ्केतमात्रेण प्रभाकरत्वमिति भावः। यद्वा नायकान्तरार्थमर्थयन्तीं दूतीं तद्गुणानामलीकत्वज्ञापनेन नायिका प्रत्यादिशति॥१०१॥

कामिनीबिम्बाधरमाधुर्यं सूचयन् कश्चित्पुरावृत्तमनुवदति—

**अमृतमयदीर्घिकां वृषरूपेणाकर्ण्य मधुभिदा पीताम्॥**
**कमलालयाधरदलं किञ्चित्प्रोल्लासयामास॥१०२॥**

त्रिपुरवधे मयेन दैत्यजीवनार्थं मायया सुधावापी कृता सा वृषरूपेण भगवता पीतेति कथा मत्स्यपुराणे। तत्रामृतस्याधरापेक्षयाऽपकृष्टमाधुर्यवत्त्वात् सत्यमेव स वृषभोऽनभिज्ञत्वादित्यभिप्रायेण लक्ष्म्या हासः। अथवा रूपान्तरेण तत्पा(ना)नौचित्यादनभिज्ञरूपेण पानमिति प्रमोदादेव हासः। आद्ये मधुभिदेति माधुर्यतारतम्यभेदनेन तत्पानम्। द्वितीये मधुनो भिद्भेदो यत्रेति व्युत्पत्त्या तारतम्याभिज्ञतया तादृशरूपेण पानमिति सूचितम्। द्वितीयशतारम्भे उत्तमदेवताकीर्त्तनरूपं मङ्गलमपि निबद्धम्। एवमुत्तरत्रापि बोध्यम्॥१०२॥

भर्तृचित्तानुसारेणैव स्त्रीषु प्रेमातिशय इति काचित् कामपि शिक्षयति—

**अखिलदशानुगुणतया सौहृदमव्याहतं भवभवान्योः॥**
**स्थाणुः शिवः स उग्रः सेयमपर्णा शिवा चण्डी ॥१०३॥**

( येषां च विरोधः शाश्वतिक इति प्रयोगात् शाश्वतिकशब्दः साधुः । ) भवश्च भवानी चेत्यत्र आनुगागमकृतविशेषादेकशेषाभावः। "पुमान्स्त्रिया" (१।२।६७) इत्यत्र तल्लक्षणश्चेदेव विशेष इत्यनुवृत्त्या स्त्रीप्रत्ययमात्रकृतविशेषे तद्विधानात्। अत एव इन्द्राविन्द्राणी इत्यकशेषोऽन्वेष्य इति वामनः। शिवस्य निःशाखवृक्षाभेदाध्यवसायेन तस्या अपर्णा(न्त)पदश्लेषावगतपत्राभाववत्तया ऽनुगुणत्वम्। अन्यद्यथासङ्ख्येन स्पष्टम् ॥ १०३ ॥

दुःखस्थमपि कंचिदन्योपकारपरं महाशयं कोऽप्याह—

**अन्येषां तिमिरान्धितदृष्टीनामुपकृतिं तनुषे ॥**
**किं क्रियतां यदजस्रं मलिनैव तव प्रदीप ! दशा॥१०४॥**

स्वाभाविकान्धत्वे आलोकेनापि दर्शनासम्भवात् तिमिरेति। अन्धितत्वं चाक्षुषानुपहितत्वसाधर्म्यात्। उपकृतिं=प्रकाशमात्रव्यतिरेकप्रयुक्तचाक्षुषव्यतिरेकानिवृत्तिं प्रकाशसम्पत्त्या करोषि। अथ च रोगाद्युपहतानां पोषणाद्युपकारमित्यर्थः। प्रदीपत्वमुज्ज्वलत्वात्। मलिनत्वं=दारिद्र्याश्रयत्वं दाहेन श्यामरूपवत्त्वं च। यद्वा उत्तमपरिच्छदहीनं गुणमयं नायकमालोक्य सङ्गमवैमुख्यात् सङ्केत(म)स्य निवर्तयितुं दूत्या इयमुक्तिः॥१०४॥

नायकप्रेमोत्पत्त्यैव कृतार्था माभूः किं तु तस्याविच्छेदेऽपि यतस्वेत्याशयवती काचित्सखीमिदमाह—

**अभिमन्युरिव सुभद्रोदितस्तवायं प्रणयबन्धः ॥**
**परचक्रान्तरपतितः स्थास्यति सुचिरं कथङ्कारम्॥१०५॥**

अभिमन्युः=अर्जुनपुत्रः अभितो मन्युर्जनान्तरद्वेषश्च यत्र तथा । अनेन सम्भावितोच्छेदत्वव्यञ्जनम् ।(सुभद्रोदितः) सुभद्रायाः पुत्रः। पक्षे सुतरां कल्याणार्थमुत्पन्नः । एतेन रक्षणीयत्वसूचनम् । परचक्रं=सपत्न्यादिरूपवैरिसमूहः तस्यान्तरं मध्यं प्रविष्टः । पक्षे परेषां दुर्योधनादीनां चक्रव्यूहपतितः । चक्रव्यूहमध्ये कर्णादिभिर्मिलित्वाभिमन्युर्हत इतिभारते कथा ॥ १०५ ॥

लोकगर्हितेऽपि गुणमये नायकेऽनुरक्ता कापि सखीमाह—

**अनुभूयते सहृदयैरिन्दौ यदि कौतुकविशेषः ॥**
**अनिबन्धनं जनमतास्तर्हि कलङ्कादयो दोषाः ॥१०६॥**

यदीत्यसन्देहे सन्देहवचनम् । शास्त्राणि चेत्प्रमाणं स्युरित्यादिवत् । हृदयपदं लक्षणया विवेचकत्वपरम् । अत एव क्षीरस्वामी —

"हृदयं तद्विविङ्क्ते यद्भावमन्यद्बलं पल(र)म् ॥
शतकीयाः सहृदया गण्यन्ते कथमन्यथा ॥"

"हृदयालुः सहृदयः" इत्यमरः । अनिबन्धनमिति तदनुपादेयत्वप्रयोजका न भवन्तीतिभावः ॥ १०६ ॥

कश्चिन्मुग्धामाह —

**अलकावलोकने तव सारम्भा मम दगुत्सुकिता ॥**
**उपरुद्धा निकषाभवचेलेन बतान्तरा मिलता ॥ १०७ ॥**

चूर्णकुन्तलाविलोकनार्थं कृतोपक्रमा तद्विषयकेच्छाविशेषप्रयुक्ता च मम दृष्टिः निकषाभवेन उत्तरीयपदाप्रमतया कुन्तलसामीप्यभाजा अन्तरा विषयेन्द्रियमध्ये मिलता चेलेन वस्त्रेण उपरुद्धा प्रतिबद्धा । चक्षुःकुन्तलसंयोगस्य तदावरणेनानुपपन्नत्वात् । अथच अलकायाः कुबेरनगर्या दर्शने उत्सुकिता नल-

कूबरानुरक्तत्वात्, सा प्रसिद्धा रम्भा, मार्गमध्ये मिलता, निक-षाभवा राक्षसाः चेलशब्दः कुत्सितार्थः, राक्षसाधमेन रावणेन उपरुद्धेति स्पष्टमुत्तरकाण्डे । अममा ममत्वहीना दृग् यस्याः रावणविषयकानुरागविरहादिति रम्भाविशेषणान्तरं बो-ध्यम् ॥ १०७ ॥

बहुशो वारितमपि विप्रियनिवृत्तिं स्वीकृत्यापि तथैव पूर्ववदासक्तं नायकमुद्दीक्ष्य कापि सखीमाह—

**अपरः परश्च सहचरि ! समानमेवार्थमभिधत्तः ॥**
**सत्यसति वा निषेधे पुरुषविशेषा भवन्ति समशीलाः१०८**

निषेधः तदर्थकनञ्पदम् । पक्षे निवृत्तिः । अपर इत्यस्य नञ्स-मभिव्याहारे सत्यपि भिन्नार्थमादाय परशब्दसमानार्थत्ववत् केचित्पुरुषा एवं न करिष्यामीत्युक्त्वापि तथैव कुर्वन्तीत्यर्थः॥१०८॥

सादरमनुनयत्यपि मानमेव वर्द्धयन्तीं नायिकां प्रणय-भङ्गभीता हितैषिणी सखी सोपदेशमाह—

**अनुनयति प्रेयसि यन्मानातिशयस्त्वया कृतश्चण्डि ! ॥**
**इदमेव शान्तिकर्मणि वेतालाभ्युदयमनुहरति ॥ १०९ ॥**

प्रेयसीत्यनुरागविषयत्वम् । अनुनयतीति मानत्यागा-वश्यकत्वसूचनम् । यथा वेतालादिनिवृत्तिमुद्दिश्य शान्तिके क्रियमाण एव वेतालाभ्युदयश्चित्रः तथा मानत्यागार्थमनुनयारम्भे तदधिकमानारम्भः। प्रेमभङ्गाख्यानर्थावहत्वादित्यर्थः। तन्निवृत्त्य-र्थयत्नेन यत्र तदुत्पत्तिस्तत्रायं न्यायः प्रसिद्धः । "रोगकृत्याग्र-हादीनां निवृत्तिः शान्तिरीरिता ।" इति तान्त्रिकाः ॥१०९॥

अल्पदोषभयेन कश्चिन्नायकं परित्यज्य भ्रमेण ततोऽपि

दुष्टनायकमाश्रितां काचित्सखी अन्योक्त्येदमाह—

**अवमत्यैव मृगाङ्कं कपालिनं श्रितवती त्वमिन्दुकले !॥**
**आशीविषमुखपातो वृश्चिकभीत्या पलायितस्यायम् ११०**

मृगाङ्कपदेन मृग्यतेऽङ्को यस्येतिव्युत्पत्त्या दोषस्थानाभिव्यक्तत्वसूचनम् । कपालिनमिति "नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेत् ।" इत्यादिवचनेन दोषश्रवणात्कपालसम्बन्धेन गर्हितत्वप्रसिद्धिर्व्यञ्जनम् । कलेतिनिष्कलङ्कत्वसूचनम् । इन्दुपदेनाल्हादकत्वसूचनम् । प्रथममेव तत्प्राप्तिनिषेधाय अवमत्येति । एतेन नायककृतापराधाभावसूचनम् । अल्पानिष्टपरिहारप्रवृत्तस्य तदधिकानिष्टलाभविषये उत्तरार्द्धनिबद्धो न्यायः प्रसिद्धः ॥ ११० ॥

सर्वसम्मतमनादृत्य कथं स्वयमेवान्यत्रानुरक्तासीति उपालभमानां सखीं काचिदिदमाह—

**अर्थं स्वस्याभीप्सितमाद्रियते सकल एव जनः ॥**
**मधुसूदनो हि कमलामुपाददे शूलभृत्तु हैमवतीम् १११॥**

मधुसूदनो विष्णुर्भ्रमरश्च । कमलसम्बन्धिनो भृङ्गसम्बन्धौचित्यात् । "मधुसूदनसंज्ञा च भ्रमरे वनमालिनि ।" इति विश्वः । शूलभृत्=शिवः शूलरोगी च । हैमवती=देवी हरीतकी च । तस्याः शूलोपशामकत्वात् तद्योगः । "हैमवती पार्वती गौरी" इति हलायुधः "द्विष्टत्वमिष्टत्वमपव्यवस्थम्" इतिन्यायेन कस्यचिद्दिष्टोऽन्यस्यापि स्यादिति नियमो नास्तीत्यर्थः ॥ १११ ॥

अत्युदारः कोऽपि इदमाह—

**अथ कृपणे जीवत्यपि बुधैर्विधेया प्रमीतमतिरेव ॥**
**यद्व्यवहरन्ति निश्चितमनुदात्तं निहतशब्देन ॥ ११२ ॥**

"आत्मानं पुत्रदारांश्च धर्मकृत्यं च पीडयन् ।
लोभाद्यः प्रचिनोत्यर्थान् स कदर्य इति स्मृतः ॥" इति देवलः।"मृतप्रमीतौ त्रिष्वेते"इत्यमरः। परोपकारानुपयोगेन तस्य मृतत्वमेव ज्ञेयम् । उदात्तो दाता तद्भिन्नोऽनुदात्तः स्वरविशेषवांश्च । तस्य दातृभिन्नत्वाभेदादेव निहतेतिव्यवहारः। निहतपदस्य मृतार्थत्वात् । अनुदात्तस्य निहतसंज्ञेति स्वरविदां सम्प्रदायः । यद्वा काचिद्वेश्या नायकं दानेऽभिमुखीकर्तुमिदमाह । अथवा कश्चिदात्मतत्त्वज्ञ आह। कृपणे=ब्रह्मानभिज्ञजने । तथाच श्रुतिः "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः ।" इति । तत्र मृतबुद्धिर्वारंवारं जननमरणादिसंसारकटाहे परिवर्त्तमानत्वात् । जीवतीति। यज्ञादिकर्म्म कुर्वन्नपीत्यर्थः । तदाह श्रुतिः—"अदृढप्लवा ह्येते यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरां मृत्युं ते पुनरेवापियन्ति" । तत्र उदात्तं ब्रह्म महत्त्वात् । "अतोऽन्यदार्त्तम्" इति श्रवणात् । तद्यस्य ज्ञानसम्बन्धेन नास्ति सोऽनुदात्त इति व्युत्पत्त्या तदभेदाध्यवसायेन उत्तरार्धेन तत्समर्थनम् ॥ ११२ ॥

(काचित्)कस्याश्चित्कुलवध्वाः कुत्रचिदसाध्यतां सूचयन्तीदमाह—

**असहत नार्कजतापं संज्ञेति पुराणवाक्यमाकर्ण्य ॥**
**कुलपालिकया किञ्चिचलभ्रुवा स्मितमये निभृतम्॥११३॥**

(संज्ञा सूर्यपत्नी ) तपनस्य तापमसहमाना स्वस्थाने छायां नियुज्य गतेति पौराणिकाः। तत्र पतिव्रतयापि तया भर्तृकृततापः सोढुं न शक्त इत्युपहासहेतुः। तापशब्दो निदाघ उष्णउष्णचरत्वपरः(?)। "कुलस्त्री कुलपालिका ।" इत्यमरः। अनादरसूचनाय—किञ्चिच्चलेति । जनान्तरदर्शनपरिहाराय निभृतमिति॥११३॥

कस्याश्चित्कुसुम्भक्षेत्रमभिसारस्थानमुपलक्षयन्ती काचिदाह—

**अभवद्यदवधि विष्वग्विकसितकुसुमः कुसुम्भकेदारः॥**
**चण्डीनिर्माल्यपटावृतिनियमस्तदवधिर्बभूवास्याः॥११४॥**

रक्तवस्त्रपरिधानेन समानरूपाभिहारात् कुसुम्भक्षेत्रे कश्चिन्मां न लक्षयिष्यतीत्यभिप्रायेण कात्यायनीनिर्माल्यवस्त्रपरिधाननियमो गृहीतः, अन्यथा सर्वदा रक्तांशुकग्रहणेऽन्यैस्तत्र बीजान्वेषणेन तत्प्रकाशप्रसङ्गात् । एवं तु देवतावशिष्टपरिधाननियमरूपहेतुं विज्ञायान्यथा तर्कयिष्यन्तीतिभावः ॥ ११४ ॥

शरदि कृताभिसारां नखक्षतादिगोपनाय प्रयासान्तरमनुतिष्ठन्तीं कांचित्काचित्सुकरोपायमादर्शयति—

**अनुभवसि किं कररुहव्रणसंवरणप्रयासमधुनापि ॥**
**पश्य वयस्येवेयं विहासितवदना चकास्ति कर्पासी॥११५॥**

कररुहाः=नखाः । वयस्यासादृश्यं तदनुकूलत्वात् । विहासितमुखी=पुष्पितत्वात् सखीकार्यसिद्धिसन्तोषाच्च । तथाच कर्पासक्षेत्रे कण्टकैः स्तनौ क्षताविसयमेव प्रकार उपस्थितत्वादादृियतां किमुपायान्तरगवेषणयेतिभावः ॥ ११५ ॥

कश्चिद्विरहीदमाह—

**असमाः शरा रतिपतेर्वैलक्षण्याच्छरान्तरापेक्षात् ॥**
**सङ्ख्यावैषम्यादिति पुनरनुभूत्या विसंवादि ॥ ११६ ॥**

कामबाणानामसमत्वं तावत्प्रसिद्धम् । तच्च बाणान्तरप्रतियोगिकसादृश्यानाश्रयत्वेनैव युक्तम् । अन्यबाणजन्यपीडापेक्षया विजातीयपीडाजनकत्वस्यानुभवसिद्धत्वात् । यत्तु पञ्चसङ्ख्यत्वादसमत्वपरिकल्पनं तदनुभवविरुद्धम् । अतिशयेन तद्धन्त्वानुमानात् प्रत्यक्षपीडाविषयानुपपादकत्वाच्चेतिभावः ॥११६॥

द्रव्यमदान्धकारितदुरीश्वरोपमर्पणकदर्थितो मनस्वीदमाह—

**अपगच्छति सति यस्मिन्विवेकशक्तिः समस्तवस्तूनाम्**
**द्रव्यं तमिस्रमिति तत्संमनुते यो गुरोः स गुरुः॥११७॥**

यथा द्रव्ये सति तदभिमानेन वस्तुविवेको नश्यति । तथान्धकारेऽपि चाक्षुषानुदयात् । अतोऽन्धकारस्य सादृश्यात् द्रव्यमिति स्वीकारो येन कृतः स सत्यं गुरोर्गुरुः युक्तार्थाभ्युपगमात् । पक्षे प्रभाकरगुरुः । प्रभाकरेण तेजोज्ञानाभावस्यैवान्धकारत्वस्वीकारात् । उक्तंच भट्टैः—

"तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥" ॥११७॥

धनवत्येव सर्वोऽनुरज्यत इति कश्चिद्दर्शयति—

**अभियुक्तजनानामपि बत प्रवादोऽयमितरसामान्यः ॥**
**गुणवत्सु तदितरेष्वपि नित्यद्रव्येषु यत्किल विशेषः११८**

अभियुक्ताः=शास्त्रार्थपरिच्छेत्तारः । तदाहुः—
"अभियुक्तास्तु ये यत्र तन्निबद्धप्रयोजनाः ।
तत्रत्यगुणदोषाणां ज्ञाने चाधिकृता मताः ॥"

इतरसामान्यः=यथानभियुक्तानां तादृश एव । तदितरेषु=तादृशद्रव्यरहितेषु विद्यादिगुणसम्पन्नेषु सत्स्वपि नित्यं बहु द्रव्यं येषां तत्रैव विशेष उत्कर्ष इति वदन्ति अनभियुक्ताः । अभियुक्ता अपि जन्यपृथिव्यादिषु गुणोपेतेष्वपि नित्यद्रव्येषु परमाण्वाकाशादिषु विशेषाख्यपदार्थं स्वीकुर्वन्ति । आकाशादिवृत्तिविशेषानङ्गीकारे तु परमाणव एव ग्राह्याः । अर्थद्वयस्याभेदारोपेण द्वयोः साम्यसिद्धिः ॥ ११८ ॥

केनचित् कुचकमनीयत्वहृतहृदयेन प्रेषिता दूती मालाकारी इदमाह—

**अतिकायस्तव सोऽयं मालिनि! सुमनोहरो भरः स्तनयोः।**
**विधुरयति नयनविषयीभविष्णुमात्रोऽपि सुग्रीवम् ११९**

"मालिनी वृत्तभेदे स्यान्मालाकारस्त्रियामपि ।" इति विश्वः। अतिकायः=पीवरतरः सुतरां मनोहरस्तव स्तनभारो दृष्टमात्रोऽपि शोभनग्रीवं नायकं त्वदप्राप्त्या पर्याकुलयति । अथच मालिनीसंज्ञरावणपत्नीतनयः सुमनसां देवानां हर्ता अतिकायसंज्ञो राक्षसो दृष्ट एव सुग्रीवं वानरराजं युद्धभूमौ आकुलितवानितिभावः। तथाच लङ्काकाण्डे रामं प्रति विभीषणवाक्यम्—

"अस्य प्रभावः सुमहान् कथ्यते देवदानवैः ॥
तनयं विद्धि मालिन्यास्त्वतिकायेति यं विदुः ॥" इति ॥११९॥

द्रविणमदान्धानदातॄनकुलीनानवेक्ष्य कश्चिद्राजप्रशंसामाह—

**अतुलः कोऽपि विशेषो भवति महोदारचरितानाम् ॥**
**पदसत्त्व एव राजा नकारलोपं यदाप्नोति ॥ १२० ॥**

क्षुद्रा हि पदारूढाः सर्वत्र निषेधमेव कुर्वन्ति। राजा तु महत्त्वान्नकारं लुम्पति। यथासम्भवं सर्वेभ्यः प्रदानात् । अथच राजन्शब्दः पदसंज्ञक एव प्रत्ययनकारलोपमनुभवति न तु भसंज्ञायाम्। "नलोपः प्रातिपदिकान्तस्य"(८।२।७) इति वचनेन प्रातिपदिकान्तस्य पदान्तस्य नस्य लोपविधानादित्यर्थः ॥१२०॥

कुटिलाचरणानामेवात्रादरो भवतीत्यनुभूय कश्चिदुपदिशति—

**अतिवेलं सरलानामिह लोके न प्रतिष्ठितिर्भवति ॥**
**मायामपास्य जगतामीशोऽपि हि न प्रपञ्चगतिः॥१२१॥**

माया=मिथ्याचरणं तामपहाय संसारे कस्यापि गणना न भवति। तथाहि जगदीश्वरोऽपि भगवानात्मा अविद्यां विना प्रपञ्चगोचरो न भवति प्रपञ्चं न जनयति। अथच बोधविषयो न भवति। वृत्त्युपहितस्यैव हि तस्य ज्ञेयत्वम्। वृत्तेरप्युपाधित्वेन तदुपहितस्य सोपाधित्वात्। शुद्धस्य च स्वप्रकाशतया सदागम्यत्वात्। "यस्यामतं तस्य मतं मतं यस्य न वेद सः।" इतिश्रुतेरित्यर्थः॥ १२१॥

दुर्जनसम्पत् परोपतापायैवेति कोऽपि निदर्शयति--

**अधिकसमृद्धियुतानां न खलु खलानां भवेद्विनयः॥**
**अच्छेतरो हि वर्णो वहति पदान्ते न तुच्छत्वम्॥१२२॥**

अच्छेतरः=अनुज्ज्वलोऽसदाचरणशीलो वर्णो ब्राह्मणादिर्यः कश्चित्। पदनाशे सति तुच्छत्वमविनीतत्वं न धत्ते। पदारूढ एव दुर्विनीतो भवति। तद्भ्रष्टश्च नम्रः। "शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः" इति न्यायात्। अथच अच्छः=छकारभिन्नः तदितरः छकाररूपो वर्णः पारिभाषिकपदान्ते छत्वं न भजति। तुकारोऽत्र पूरणार्थः। पक्षान्तरे अन्यपदघटकत्वेन वैयर्थ्याभावात्। "व्रश्च"(८।२।३६)इत्यादिसूत्रेण पदान्ते छकारस्य षत्वविधानादित्यर्थः॥१२२॥

उत्तमपदप्राप्तये स्वस्य न्यग्भावमुद्भावयेति कश्चिन्मित्रमुपदिशति—

**अवधीयतामतिमते! चरितं पदकामुकजनस्य॥**
**महतोऽपि ह्यासङ्गो भवति गुणीभावमेत्यैव॥१२३॥**

महतः श्रुताभिजनशालिनोऽपि पुरुषस्य आसङ्गोऽर्थात्पदप्राप्तिः गौणत्वं (पदं) प्राप्यैव भवति, अतस्तदर्थिभिस्तथैवानुष्ठेयम्।

अथच महच्छब्दस्यापि आकारान्तत्वं गुणीभावं समासे कस्यचिद्विशेषणत्वमासाद्यैव भवति । "आन्महतः समानाधिकरणजातीययोः"(६।३।४६) इति सूत्रेण महाराजेत्यादावात्वविधानादित्यर्थः । यद्यपि महानित्यादावप्यात्वं भवति तथापि दीर्घविधिप्रयुक्तमेव नत्वात्वावच्छिन्नाविधेयत्वप्रयुक्तमित्यदोषः । यद्वा पदप्राप्तये यतस्वेत्याभिदधानं सुहृदं कश्चिन्मनस्वीदमाह । तथाच गौणत्वं विना पदानवाप्त्या तस्य च दुःसहतया न तत्र प्रवृत्तिरुचितेतिभावः ॥ १२३ ॥

उत्तरनायिकामपेक्ष्य पूर्वस्या एव गुणशालितां नायकमादर्शयन् कश्चिदाह—

अधिगतवृद्धिः सुतरामितरप्रत्यययुतोऽपि सम्पन्नः ॥
प्रथमासुयोगतः पुनरनङ्ग एव स्थितोऽसि सखे ! ॥१२४॥

इतरनायिकासु प्रत्ययः प्रीतिः "सर्वनाम्नां वृत्तिमात्रे"इति पुम्वद्भावः । तद्वानपि त्वं प्राप्तसुखादिवृद्धिरेव संवृत्तः । प्रथमनायिकायाः शोभनेन सम्बन्धेन अनङ्गः काम एवासि । सौभाग्यातिशयात् । अथच सखिशब्दः प्रत्ययान्तरे सखायावित्यादावतिदेशेन वृद्धिं प्राप्तः प्रथमविभक्तेरेकवचनसुयोगात् अनङं गच्छति प्राप्नोतीत्यनङ्गस्तादृशो भवति । "सख्युरसम्बुद्धौ" (७।१।९२) (इत्यनन्तरेण) "अनङ् सौ" (७।१।९३) इत्यनेन तत्रानङ्विधानादिति भावः ॥ १२४ ॥

कश्चिदगुणनिन्दामाह—

अधमानां प्रस्तावे लभते सङ्ख्येयतामहृदयो यः ॥
पापग्रहप्रकरणे विधुन्तुदो गण्यते गणकैः ॥ १२५ ॥

"प्रस्तावः स्यादवसर" इत्यमरः । अहृदयः=गुणानभिज्ञः ।

समानधर्माणामेवैकप्रकरणे गणनीयत्वादस्याप्यधमविशेषत्वात् । राहुपक्षे शिरोमात्रस्वरूपत्वेन हृदयराहित्यात्पापानामधमत्वात्तन्मध्ये अहृदयत्वेन राहोरपि गणनम् "पापौ तमःकेतू" इति विष्णुधर्मोत्तरोक्तत्वादिति ज्योतिषवचनादित्यर्थः ॥ १२५ ॥

कांचिदुपपतावासञ्जयितुं तद्भर्तुरगुणत्वं सूचयन्तीदमाह—

**अनुरूपयोर्द्वयोरपि समागमो दुर्लभः प्रायः ॥**
**नहि मन्यतेऽभियुक्तैर्विभुद्वयस्यापि संयोगः ॥ १२६ ॥**

अनुरूपयोः=वयोरूपविद्यादिसमानशीलयोः । समागमः=दाम्पत्यादिसम्बन्धः । उपपतिसंयोगेन तत्सौलभ्यसूचनाय-प्राय इति । अभियुक्तैः=नैयायिकैः । मीमांसकैर्विभुद्वयस्यापि संयोगाभ्युपगमात् । नित्यसंयोगे प्रमाणाभावाद्विभोश्च कर्मासम्भवेन जन्यसंयोगासम्भवादिति भावः ॥ १२६ ॥

कचिद्बहुवल्लभे(१) बद्धानुरागाया दशां दूती तत्र निवेदयति—

**अवलोकितवत्यास्त्वामतिरुचिरजनीशशेखरं सुभग! ॥**
**द्वेषादिव पञ्चेषुर्भिनत्ति मर्माणि बाणौघैः ॥ १२७ ॥**

अतिरुचिराणां जनीनां नायिकानां ये ईशाः प्रियास्तेषां शेखरं मूर्द्धन्यम् । "जनी सीमन्तिनीवध्वोः" इति विश्वः । पक्षे अतिरुचिस्तेजस्वी रजनीशश्चन्द्रः शेखरो मूर्द्धाभरणं यस्येति तस्य शिवात्मकत्वसूचनम् । स्वविद्वेषिदर्शनादिव तां पीडयतीति भावः ॥१२७॥

कश्चिदात्मनो विद्यावैदग्ध्यं दर्शयन्नोढामाह—

**अद्याप्यप्राप्तमेव स्पर्शं मानिनि ! तवाधिगच्छामः ॥**
**कोमलकठिनावयवैः किमुपादानस्य फलमेतत् ॥१२८॥**

---

(१) अत्र बह्व्यो वल्लभा यस्येति बहुव्रीहिर्बोध्यः ।

मानिनीति स्त्रीमात्रसाधारणम् । सर्वाङ्गावच्छिन्नपरिरम्भालाभात् अव्याप्यवृत्तिं=किञ्चिदवयवावच्छिन्नमेव, स्पर्शम्=आलिङ्गनम् आसादयामः । अथच अव्याप्यवृत्तिं तत्तदवयवावच्छिन्नं कठिनमृदुत्वादिरूपं स्पर्शं साक्षात्कुर्मः । कठिनकोमलावयवारब्धे ह्यवयविनि तत्तदवच्छेदेनाव्याप्यवृत्तिमेव स्पर्शं नवीनाः स्वीकुर्वन्ति । प्राचीनैस्तत्र चित्रस्पर्शस्यैवाभ्युपगमात् । एवं तवापि स्तनपाण्यादिरूपकठिनसुकुमारावयवारब्धत्वात् स्पर्शस्याव्याप्यवृत्तित्वं युक्तमेवेति भावः ॥ १२८ ॥

कश्चिद्घनसमये पथिकावस्थामाह—

अर्जुनकृताशुगासनगुणबन्धसमाहितस्तम्भाः ॥
पथिकाः प्रावृषि दशमुखहिरण्यपुरवासितां दधते १२९॥

दशमुखः सर्वदिग्व्यापी, हिरण्यं पुरे शरीरसम्बद्धं यस्येति स वन्हिः हिरण्यरेतस्त्वात् । पूर्वेण कर्मधारयः । तद्वासित्वं तापातिशयात् । अथच दशमुखो रावणः, हिण्यपुरवासिनो दैत्यविशेषाः तद्भावं सादृश्यं भजन्ते इत्यर्थः । अर्जुनं=ककुभपुष्पम् । पक्षे अर्जुनः=कार्तवीर्यः पाण्डवश्च । आशुगो वायुस्तस्य असनं क्षेपः । स्वावयवसंयोगद्वारा वायौ सौरभाधानेन तत्कृतत्वम् । तस्य गुणानां शैत्यादीनां बन्धेन साक्षात्कारद्वारकवशीभावेन कृतस्तम्भाः । तदुत्तरं निर्व्यापारत्वात् । रावणपक्षे-कार्तवीर्यकृतेन आशुगासनं धनुस्तस्य गुणो मौर्वी तद्बन्धेन कृतस्तम्भः । इदं चोत्तरकाण्डे स्पष्टम् । दैत्यपक्षे पाण्डवकृते यदाशुगानां बाणानामसनं क्षेपः तत्र गुणः शैत्यादिः । इदं चारण्यपर्वणि निवातकवचवधे व्यक्तम् ॥ १२९ ॥

द्रविणकणिकोन्मत्ताहङ्कारमसहमानः कोऽप्याह—

**अवरेणाप्यर्थेन श्रीमत्तामेति जडभावः ॥**
**वहति वराटकमात्रान्वयान्निवासत्वमम्बुजं लक्ष्म्याः १३०**

अवरेण=अल्पेनापि । जडभावः=अनभिज्ञः । कमलमपि जलोत्पन्नामित्यर्थादन्वयः । "बीजकोशे सरोजस्य कपर्दे च वराटकः ।" इति शाश्वतः । कमलं हि श्रीगृहमिति प्रसिद्धम् । तत्र वराटकपदेन कपर्दबीजकोशयोरैक्यारोपात्तावन्मात्रेणैव तस्य श्रीसम्बन्धबोधो जात इतिभावः ॥ १३० ॥

कं चिन्मनस्विनं पराभवासहिष्णुतया सेवादिविरहेण निर्गुणजनान्तरवत् तथा द्रव्यादिरहितमवलोकयन्नाह—

**अभिमानैकधनानां गुणान्तरेष्वाग्रहो न तथा ॥**
**वियदात्मसमयहरितां तद्व्यतिरिक्ता न ते नित्याः १३१**

परममहत्परिमाणवतामपि व्योमजीवकालदिशां गुणमध्ये मानस्यैव नित्यत्वं नतु गुणान्तराणाम् । शब्दादीनामनित्यत्वस्य स्वीकारात् । अतो मानमेव नित्यं रक्षन्ति नतु गुणान्तरमपीत्यर्थः । आत्मत्वस्य नित्यत्वेऽपि तस्य गुणत्वाभावान्न दोषः । यद्यप्येकत्वमपि नित्यं तथापि सङ्ख्याया गुणत्वनिरासेन पदार्थान्तरत्वस्य मीमांसकादिभिरङ्गीकारात्तदभिप्रायेणैवमुक्तम् १३१ ॥

कश्चिदयोग्यानामेव सम्पत्तिमवलोक्य निर्विण्ण इदमाह—

**अणुरपि यत्र न रूपस्नेहरसानां वरीवर्ति ॥**
**इह जगति तादृशानामेव विभुत्वं प्रपश्यामः ॥१३२॥**

रूपमाकृतिविशेष इति देवबोधः । स्नेहः शुश्रूषा । रसः शृङ्गारादिः । एषां लेशोऽपि यत्र नास्ति तेषामेव सम्पत्तिं प्रपश्यामः । अथच रूपस्नेहरसाख्यगुणाभाववतामाकाशकाल-

दिगात्मनामेव पञ्चानां परममहत्परिमाणम् । एतदन्यस्मिन् विभुत्वाभाव एव तात्पर्यम् । न त्वेतादृशावच्छेदेन विभुत्वसत्त्वे । अतो लोके पूर्वोक्तानां केषांचित्सम्पत्त्यभावे वायुमनसोश्च तादृशपरिमाणाभावेऽपि न क्षतिः । भ्रमत्ववारणाय मशब्दः ॥१३२॥

कृत्रिमशब्दविशेषेण केन चिद्वञ्चितः कश्चिदिदमाह—

**अवलक्षताञ्च कस्यचिदाशयमविभाव्य नैव निर्णेया ॥**
**विशदयतो जगदखिलं मलिनं ह्यन्तः कुमुदबन्धोः १३३**

आशयमभिप्रायमन्तरं च । अवलक्षता=शुद्धहृदयं सर्वावच्छेदेन श्वैत्यं च । विशदयतः=सदाचारोऽयमिति ज्ञानयुक्तं कुर्वतः, चन्द्रिकया श्वैत्यमानयतश्च । मलिनम्=असत्कार्यरतं नीलं च । अन्तर्मनो मध्यं च । कुमुदबन्धोः=चन्द्रस्य, कुः पृथ्वी तज्जन्याया मुदः प्रीतेरबन्धोरनुत्पादकस्य चेत्यर्थः । "विशदः पाशकः पार्श्वे" इति विश्वाद्विशदशब्दोऽपि सकारमध्यः ॥ १३३ ॥

मिथ्यानुरागं नाटयन्तं नायकं कस्याश्चित्सखीदमाह—

**अनुराग उपहिते त्वयि सुभग ! तया जपासुमनसेव ॥**
**रक्तोऽपि भासमानः स्फटिक इव स्वयमराग एवासि १३४**

अनुरागः=स्नेह आरुण्यं च । उपहिते=त्वाद्विषयत्वं नीते, परम्परासम्बन्धेन तद्वृत्तित्वेन ज्ञानयोग्यत्वमापादिते च । सुभगेति अनुरागोपधानयोग्यत्वेन तस्या अनुचितकारित्ववारणम् । रक्तः=अनुरक्तः अरुणवर्णश्च । तादृशपदार्थावाकरणेन(?) विशेषादर्शने च साक्षाद्रक्त इव ज्ञायमानः । स्वयम्=अन्तरात्मना साक्षात्सम्बन्धिनैव । सुमनसेति तदनुरागस्य सत्यत्वं तस्या मार्दवं च व्यज्यते । स्फटिकोपमया सच्छायायामप्यनुरागेण काठिन्यमुक्तम् ॥ १३४ ॥

कस्यचिन्नायिकाकङ्कणझङ्कारश्रवणेन वशीकृतस्यावस्थां दूती नायिकाग्रे निवेदयति—

अतिशयिततरलवलयकपाणिनिनादानुसन्धायी ॥
स सुहृदयोऽपि सुहृन्मे निपातितो दुर्हृदैव समम् १३५

लीलानुबन्धेनात्यन्तं तरला वलया यत्रेति समासान्तः कः । तादृशस्य पाणेर्हस्तस्य निनादमनुसन्दधाति सादरं शृणोति । तथा शोभनं गुणज्ञं हृदयं यस्य तादृशोऽपि स सुहृत् दुर्हृदा समं शत्रुवत् निपातितः स्मराधीनः कृतः । त्वयेतिशेषः । अथ च अतिशायिताः तर उत्कर्षार्थः प्रत्ययः, ल इति दशलकारग्रहः, व इतिमत्वर्थीयः, ल इत्यपि स एव, य इति चतुर्थ्येकवचनादेशः, क इति समासान्तादिः । एते यस्य व्युत्पाद्यत्वात्तादृशेन पाणिनिना मुनिना सुहृदयशब्दोऽपि दुर्हृदा शब्देन समं दानुसन्धायी दकारान्तः सुहृदिति निपातः कृतः।"सुहृद्दुर्हृदौ मित्रामित्रयोः"-( ५ । ४ । १५० ) इति सूत्रेण सुहृदयदुर्हृदयोः सुहृत् दुर्हृदिति निपातितत्वादित्यर्थः ॥ १३५ ॥

कश्चित्प्रियाया गुणातिशयमाह—

अरुणोऽधरे तव गुणो गुरुर्नितम्बेऽथ कुन्तलेष्वसितः॥
शिरसि कचः श्रुत एकत इह हि पदे चक्रतुश्चित्रम्१३६

उत्तरार्द्धे गुणस्य नान्वयः । गुरुपदं गुरुत्वपरम् । एकत एकतकारः । शतशब्दे तत्सत्वादयेन्तरुपचारः।(?) पदे इति द्विवचनम् । चित्रं चक्रतुः स्म । लोकोत्तरसौन्दर्यगुणितत्वात् । पक्षे पदे इति सप्तम्येकवचनम् । तत्रारुणगुर्वसितकचकतक्रतव ऋषिविशेषाः । तेषामध्येकैकावयवासक्तिमत्त्वे रागिणां का वार्तेति व्यङ्ग्यम् ॥ ॥ १३६ ॥

सुजनस्य दारिद्र्यमालोक्य कश्चिदिदमाह—

**अनुयाति गतायत्वं सुहृदय एवात्र न त्वहृदयोऽपि ॥**
**सुहृदिति दाक्षीतनयः सुहृदयमेव ह्यनुशशास ॥१३७॥**

गत आयो द्रव्यागमो यस्य तद्भावं शोभनचित्त एव प्राप्नोति न त्वन्यः। यतः सुहृदयशब्दस्यैव सुहृदिति रूपं पाणिनिराह। स हि (सुहृदयशब्दः) निपातवशाद्गतः अय इत्यंशो यस्य तादृशो भूत्वा सुहृदिति भवतीत्युक्तार्थलाभः। "दाक्षीपुत्रस्य पाणिनेः" इति भाष्यकारादयः ॥ १३७ ॥

काश्चिदनुनयादप्यमुक्तमानां काञ्चिदिदमाह—

**अविवक्षितमेवेदं वाक्यविदां श्रूयते ग्रहैकत्वम् ॥**
**तव तु विवक्षितमेवेत्ययमनघः सुन्दरि ! महीयान् १३८॥**

ग्रहः=सोमपात्रविशेषो मानश्च। एकत्वं सङ्ख्या=ऐकरूप्यं च। अभेदारोपेण वाक्यार्थः। तथाच मानापरित्यागोऽपि न वाक्यविदां रसज्ञानां संमतः। तथाच भरतः—"तावत्खेदयितुं वस्तु यावत्पादगतो भवेत्"। मीमांसकैरपि "ग्रहं संमार्ष्टि" इत्येकत्वस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात्सर्वग्रहसंमार्ग इति तृतीयाध्याये निरूपितमित्यर्थः ॥ १३८ ॥

अनभिज्ञैरादृतं कञ्चिन्निर्गुणमालोक्य कोऽप्याह—

**अकलङ्क एव सहृदयजनैरहृदयैस्तु पूर्ण आदेयः ॥**
**ईशानेन कलात्मा पूर्णस्त्वादीयते विधुस्तमसा ॥१३९॥**

अकलङ्कः=निर्दोषो लक्ष्महीनश्च। पूर्णः=द्रव्यादिमान् वृद्धिकाष्ठां प्राप्तश्च। कलामात्रचन्द्रस्याकलङ्कत्वात्सहृदयेन शिवेन तदुपादानम्। राहुणा तु पूर्वोक्तरीत्या अहृदयेन तदानीं कलङ्कसद्भावेऽपि तदनादरेण पूर्णस्यैवोपादानम्। पूर्णिमायामेव

चन्द्रोपरागदर्शनादित्यर्थः ॥ १३९ ॥

काचित्सङ्केतावसरं सूचयन्तीदमाह । यद्वा पूर्वार्द्धं सख्या उत्तरार्द्धं च नायिकाया उक्तिः ।

**अल्पीयानपि पूर्वं नीहारः पश्य जृम्भते कदिक् ॥**
**अग्रजतया ध्रुवममुं सहचरि ! संश्लिष्यति व्यासः१४०**

सहसैव वृद्धौ हेतुमुत्प्रेक्षते । व्यासः=विस्तारः पाराशर्यश्च स्वज्येष्ठतया नीहारमालिङ्गतीत्यर्थः । "व्यासो मुनौ स्याद्विस्तारे" इति विश्वः । यमुनायां सत्यवतीमालोक्य न तु कामेन पराशरेण जनान्तरसंवरणार्थं नीहारः कृतः । यतः सत्यवत्या व्यास उत्पन्न इति भारतम् । ततश्च व्यासान्नीहारः पश्य जृम्भते । अस्याग्रजत्वं पूर्वकालीनत्वादेव जन्यत्वाच्च वेत्यर्थः ॥ १४० ॥

कश्चित्प्रियां पश्यन्नाह—

**अस्याः स्मितेषदीक्षितरदनोभयभागभूरदच्छदयोः ॥**
**लोहितकगर्भनासामौक्तिकयोर्वा निवेशतो भेदः १४१॥**

अन्तर्गतदशनं बिम्बाधरद्वयं माणिक्यगर्भितनासाभूषणमौक्तिकद्वयं च परस्परव्यत्यासेनोपमीयन्ते । दन्ताधरमौक्तिकमणिवराणां प्रत्येकं साम्यसत्त्वेऽपि उक्तसन्निवेशविशिष्टानां तदभावात् रदनद्वयस्याधरगर्भत्वे उक्तभूषणसाम्यं मौक्तिकस्य माणिक्यद्वयान्तर्गतत्वे च यथास्थिता(धर)दन्तसाम्यं स्यादिति भावः ॥ १४१ ॥

नामसाम्यात्केन चित्तद्विजातीयमप्यादत्तं पश्यन्निदमाह—

**अतदीयजातिमानपि तत्पदयाच्यस्तादिष्टसङ्ग्राहः ॥**
**अहिकालकूटविषवान् बिभर्ति गाङ्गं जलमपीशः १४२॥**

काचिन्नायिकान्तरानिरोधनार्हसमये स्वसविधमागतं दयितमाह—
अवकाशान्तरविरहप्रयुक्त एवावकाशो यः ॥
महिमा प्रवृत्तिभाजो न पुनरयं तत्प्रवृत्तिविषयस्य १४४

विषयान्तरमलभमानस्य या स्वस्मिन् प्रवृत्तिः सा भर्तुरेव शक्तिः जायायास्तदधीनत्वात् । मद्गुणमहिम्ना तवागमनस्य सपत्नीनां नो गार्हत्वदशायामभावेन मद्गुणानां तद्प्रयोजकत्वात् । अतः किमनुरागाभिनयेनेति भावः । अन्यत्रापि "मा हिंस्यात्सर्वा भूतानि" इतिनिषेधनिर्मुक्तविषयमनासादयतः "अग्नीषोमीयं पशुमालभेत" इत्यस्य शास्त्रस्य हिंसाविधायकत्वम् एतद्विधिवैयर्थ्यापत्तिप्रयुक्तमेव न तु तत्पशुहिंसासामर्थ्यप्रयुक्तमिति ध्वनिः । तस्य सर्वदा तत्र प्रवृत्तेस्तव तु प्रवृत्तिः कदाचिद्देवेत्यन्यदेतदित्यर्थः ॥ १४४ ॥

काचिद्विरहदूनहृदया मदनं निन्दति—
अनले न्यधीयत सुरेश्वरेण मदनो हरेण युवा ॥
शिशुरेव शम्बरेण त्वसुरवरेण न्यधायि सिन्धुजले १४५

देवमुख्येन हरेण युवैव कामो नेत्रानलेन दग्धः । असुरराजेन शम्बरेण तु बाल एव प्रद्युम्नरूपी कामः समुद्रे निक्षिप्तः । अतोऽन्योन्यविरोधिपक्षद्वयेऽन्यतरेणाप्यनुपादानात् अयमत्यन्तदुष्ट इतिभावः । शम्बरेण मायया समाहृत्य सप्तदिवसः प्रद्युम्नः समुद्रे निक्षिप्त इति भागवतम् । अथवा—

"काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥" ( भ० गी० अ० ३ श्लो० ३७ )

इत्यादिवचनस्तेन संसारमूलभूतस्य कामस्य निन्दां क-

श्चिद्विदिततत्त्व आह ॥ १४५ ॥

अतिवियोगाद्विभजायमानां काचित्सखी समाश्वासयति—

अभिलषति विप्रलम्भजतापादतिवेलमनुरागः ॥
नित्येषु पार्थिवेष्वपि पाकेन विना श्रुतो न खलु रागः १४६

साहित्यदर्पणे—"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।" ( प० ३ का० १८६ ) अभीष्टं नायकनायिकान्तरमित्यर्थः । पार्थिवेषु=(नृप)श्रेष्ठेषु पृथिवीसम्बन्धिषु च । नित्येषु=पदभ्रंसादिहीनेषु परमाणुषु च । रागः=रत्याधिक्यं रक्तरूपं च । उक्तंच—

"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ॥
कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धते ॥"

पार्थिवेषु परमाणुष्वपि पाकजमेव रूपमिति वैशेषिकाः ॥ १४६ ॥

काश्चिद्गुणकीर्तनमुखेन स्वानुरागयोगं सूचयन्नाह—

अमुना तव मन्दोदरि ! रूपविशेषेण तनुभवेन ॥
त्रिदिवेश्वरोऽपि भगवान् विजेतुमीषत्करो नितराम् १४७

मन्दं कृशमुदरं यस्याः । अथवा मन्दोदरी रावणभार्या । रूपलक्षणमन्यत्रोक्तम्—

"अङ्गान्यभूषणान्येव कङ्कणाद्यैर्विभूषणैः ॥
येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥"

विजेतुं=वशीकर्तुं युद्धेऽभिभवितुं च । "ईषद्दुःसुषु०" ( ३।३।१२६ ) इतिखल् । नायिकाया उर्वश्यादिभ्योऽप्युत्कर्षव्यञ्जनाय त्रिदिवेति । मेघनादेनापीन्द्रविजयः कृत इत्युत्तरकाण्डे ॥ १४७ ॥

अनिवृत्तदर्शनेच्छमेव प्रियमनादृत्य मानानुरोधेन चलितायां नायिकायां सखीनायिके इदमाहतुः—

**असुहितमेव प्रियतममुपेक्ष्य चलितासि किमपरत्र ॥**
**सुहितोपेक्षा सहचरि! तथाविधानां खलु निसर्गः॥१४८॥**

असुहितं त्वद्दर्शनेनातृप्तमेव । अथच असुभ्यः प्राणेभ्यो हितम् । "चतुर्थी तदर्था॰ ( २।१।३६ ) इत्यादिना समासः । अन्यस्योपेक्षासम्भवाव प्रियतममिति । नायिका त्वाह—सुहितेति । सुतरां हितस्य तन्मात्रानुरक्तजनस्य मद्रूपस्य उपेक्षा तद्विधानामयं स्वभावः । अस्माकं तु प्रियकरणे न सुतरां हितस्य तन्मात्रानुरक्तस्योपेक्षेति नकश्चिद्दोष इति भावः ॥ १४८ ॥

कश्चित्क्षुद्रहृदयः कुटिलाचारेण स्वरक्षितमैत्रीक इदमाह—

**अमलमलिनाशयानां न सहचरत्वं सुचिरवर्ति ॥**
**दर्शायक्षणमात्रे सह तपनमृगाङ्कयोर्वासः॥ १४९ ॥**

तपनपदेन तेजस्तयाऽमलत्वसूचनम् । मृगाङ्कपदेन मलिनाशयत्वव्यञ्जनम् । कलायाः कलङ्काभावेऽपि धर्मिणस्तत्त्वमक्षतमेवेत्यर्थः । दर्शायेत्यतिविप्रकृष्टत्वद्योतनम् । तथाच देवीपुराणे—

"कलावशिष्टो निष्क्रान्तः प्रविष्टः सूर्यमण्डलम् ॥
अमायां वसते यस्मादमावास्या ततः स्मृता" ॥ १४९ ॥

काचिदन्यापवादविषये गुणमये कुत्रचिदनुरक्ता अपवादस्याप्रयोजकत्वमाह—

**अभिदधति यं वदातं शुद्धप्रकृतिं स्फुरन्निष्ठम् ॥**
**सत्यप्यवर्णयोगे स भवत्यवदात एवेह ॥ १५० ॥**

शुद्धप्रकृतिं=मायारहितम् । स्फुरन्ती प्रसिद्धा निष्ठा आच-

रणं यस्य । अवर्णः=परिवादः । "अवर्णाक्षेपनिर्वाद" इत्यमरः । अवदात उज्ज्वल एव भवति । "एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इतिन्यायात् । अपिच वदातेतिशब्दः 'दैपू शोधने' इतिशुद्धिवाचकधातुप्रकृतिकः । स्फुरन्निष्ठः क्तप्रत्ययान्तः । "क्तक्तवतू निष्ठा (१।१।२६) इतिवचनात् । तस्यादावकारयोगे सत्यवदात एव भवति । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।" इति अकारलोपे कृते वदातशब्दसिद्धेर्वदातावदातयोरेकार्थत्वादित्यर्थः ॥ १५० ॥

कश्चिदेकमात्राश्रितस्तद्दुत्तरमवाप्तदुःखस्थ आह—

**अवलम्बतेऽन्यमाश्रयमेकाश्रयसङ्क्षयेऽपि खलु जातिः ॥**
**तेनैव सह गुणः पुनरुपैति नियतं विरतिमेव ॥ १५१ ॥**

जातिरित्यनेकवृत्तित्वसूचनम् । गुणपदेन गौणत्वप्रतीत्या तन्मात्राश्रितत्वसूचनम् । एकघटनाशेऽपि घटत्वमन्यघटाश्रितं तिष्ठत्येव । तद्रूपादिकं तु समवायिनाशस्य समवेतनाशहेतुत्वान्नश्यतीत्यर्थः । यद्वा वेश्याया उक्तिः । कुलस्त्रीणामेव भर्त्रनुमरणादिकं धर्मो न त्वस्मादृशामित्यर्थः । एकेन एकमात्रश्रयेण न भवितव्यमिति व्यञ्जितम् ॥ १५१ ॥

कश्चिन्नायिकाया औज्ज्वल्यं दर्शयन्नाह—

**अवदातवेषवत्यां वरवर्णिन्यामभिसरन्त्याम् ॥**
**समजनि निशीथसमयेप्यौपसिकीवाखिला ज्योत्स्ना ॥ १५२**

शुक्लाभिसारिकात्वात् अवदातेति ।

"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे तु सुखशीतला ॥

भर्तृभक्ता च या नारी सा ज्ञेया वरवर्णिनी ॥" इति रुद्रः । भर्तृभक्तेति काचित्कत्वाभिप्रायेण । लक्षणं पूर्वार्द्धमेवेत्यव-

धेयम् । निशीथपदेन ज्योत्स्नाया अत्युत्कटावस्थासूचनम् । प्रातःकालीनेव ज्योत्स्ना म्लाना जाता नायिकाङ्गकान्त्याभिभूतत्वादिति भावः । औपसिकीत्यत्र "कालात्" (५।१।७८) इति ठञ् ॥ १५२ ॥

काचित्सपत्न्या दुःसहत्वं निवेदयति—

**अभिधीयमानमात्रे दुर्वासोवृत्तजातेऽपि ॥**
**पुलककुलदन्तुराङ्गी राधा विस्पन्दयत्यधरम् ॥ १५३ ॥**

वृत्तजाते इति लक्ष्मीनिर्वासनातिरिक्ततद्वृत्तस्यापि प्रियत्वसूचनम् । दुर्वासोदत्तपारिजातमालाया इन्द्रेण कुम्भतले निहिताया ऐरावतेन क्षेपे दुर्वाससा इन्द्रक्रोधेन लक्ष्मीर्निर्वासितेति विष्णुपुराणे । अतः स्वरादूपत्न्याः श्रियस्तेन निराकरणात्तद्वार्त्तायामानन्दोल्लासाद्रोमाञ्चस्मिताभ्युदय इति भावः । दन्तुरपदस्य निम्नोन्नतत्वे लक्षणा । "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" (४।१।५४) इतिसंयोगोपधपर्युदासेऽपि "अङ्गगात्रकण्ठेभ्यस्त्विष्यते" इतिवृत्तिकारोक्तेर्ङीप् । मुनित्रयानुक्तत्वादप्रमाणमेतदितिकैयटादयः । प्रयोगप्राचुर्यात्तत्रत्यचकारेणैतत्सङ्ग्रह इत्यन्ये ॥ १५३ ॥

काचिद्वियोगमसह्यं दर्शयति—

**अभिनवबलाहकावलिमिलितप्रस्थो लसति विन्ध्यः ॥**
**विस्मृत्य कुम्भसम्भवमभिमुख इव रोद्धुमहिमांशुम् १५४**

स्वागमनपर्यन्तमगस्त्येन निषिद्धवृद्धिरपि सूर्यद्वेषातिशयात्तद्विस्मरणेन सूर्यमार्गमावरितुं प्रवृत्त इवेत्यर्थः । एतेन रागस्यान्यत औत्कट्यसूचनम् । यद्वा यथा समयमुल्लङ्घ्य विन्ध्यो वर्द्धितुमारब्धस्तथा नायकोऽपि वर्षारम्भमागमावधिं विधायापि

नागत इति प्रोषितभर्तृका निवेदयति ॥ १५४ ॥

केनचित्तारतम्यानभिज्ञेन प्रतिष्ठाख्यापनेच्छया मन्दगुणेन सहोपमित उत्कृष्टगुणवानाह—

**असदृशगुणेन साकं तुलयति महिमाशया यदज्ञजनः ॥**
**अभ्यर्हितगुणभाजामनायुधवधः स एव पर्याप्तः ॥१५५॥**

अधिकस्य न्यूनगुणेन सहोपमानमेव बाहुल्यात्तदनार्हत्वाल्पगुणानामेव न तु प्रतीतौ स्ववृत्तिधर्माणामपलापादिति भावः ॥ १५५ ॥

कश्चिन्मनस्वी प्राह—

**अस्वाधीने प्रणयो वदान्यता वैभवविहीने ॥**
**आस्तिकजने च पातकमाजीवितमनुशयायैव ॥ १५६ ॥**

पूर्वत्राधारत्वं विषयतासम्बन्धावच्छिन्नम् । उत्तरद्वये समवायावच्छिन्नमिति विशेषः । स्वपदं प्रणयसमवायिपरम् । वदान्यता=बहुप्रदानेच्छावत्त्वम् । आस्तिकः=वेदप्रामाण्याभिमन्ता । आद्ययोः स्वेच्छाविषयासिद्ध्यभावादन्त्यस्य च भाविदुःखावश्यकत्वज्ञानादनुतापाच्च भवतीत्यर्थः ॥ १५६ ॥

नायकेन सर्वाधिकप्रेमविषयीकृतापि किमिति चिन्तामावहसीति वदन्तीं सखीं काचिदिदमाह—

**असमानमानविषया अपि दधति मुदं न मानिनो लोकाः ॥**
**भाविप्रेमतनूकृतिचिन्ताजनितातिवैक्लव्याः ॥ १५७ ॥**

असमानः=अनुपमः । "मानश्चित्तसमुन्नतिः ।" इति कोशः । मान आदरविशेषः । भावीति तनूकृतिविशेषणम् । अग्रेप्रणयभङ्गप्राशङ्कया व्यग्रा एव भवन्तीत्यर्थः । अथवा तत्त्वविद एषोक्तिः ॥ १५७ ॥

कश्चित् खलजनप्रायसंसारावगाहनकदर्थितः स्वसदृशजनसमागममुदित आह—

**अरसतरस्तापनिधिः संसारनिदाघसमयोऽयम् ॥**
**शिशिरतरच्छायानां गुणवत्सरसां समागमात्सह्यः॥१५८**

असदर्थप्रायत्वात्प्रतीत्यजनकतया अरसतरः। पक्षे त्वमातपातिशयेन जलशोषादेः। तापो=दुःखं घर्मश्च। अतिसुखहेतुः छाया समाश्रयो येषाम्। पक्षे शीतला वृक्षादिच्छाया येषु। यद्वा गुणवन्त आत्मतत्त्ववेदिन इति व्याख्येयम्। यद्वा स्वानुरूपकनायकसमागमानन्दिताया इयमुक्तिः॥ १५८ ॥

कश्चित्प्रियावशतामनुभवन्नाह—

**अध्यासते युवतयो भुवनानामुपरिभागमिति सत्यम्॥**
**चरणभुवि यदजरागो बलिरुदरे वासवोऽप्यधरे॥१५९॥**

अजः=स्वाभाविकः, रागः=आरुण्यम्। पक्षे अजसंज्ञस्य राज्ञोऽनुरागः। बलिः=लेखाभेदो वैरोचनिश्च। वा समुच्चये। आसवो मधु मादकत्वात्। पक्षे वासव इन्द्रः। तथाच लोकत्रयाधिपतीनामेतदवयवभेदवृत्तितया अस्माकं तदुपरिवृत्तित्वसिद्धौ अर्थाल्लोकत्रयस्याप्येतदधोवृत्तित्वसिद्धिः। नच स्वस्थानिनामधोवृत्तित्वेऽपि न स्वस्याधोवृत्तित्वं तथाभवारादिति वाच्यम्। तल्लोकवृत्तित्वविशिष्टानामेव स्वामिनामधोवृत्तित्वस्य विवक्षितत्वात्॥१५९॥

नायिकायाः कुशलं पृच्छति नायके कश्चिदिदमाह—

**अभिमुख एव दिगन्तं प्रति भवति कुतः सखीकुशलवार्ता**
**कर्माणि जनिते नार्हति संयोगविभागसन्देहः॥ १६० ॥**

दिगन्तमुद्दिश्य गन्तुं कृतोद्यम एव त्वयि तस्याः कुशलस्य

का कथा । तदैव कुशलाभावे एतावत्पर्यन्तं तस्य प्रसङ्ग एव न सम्भावितः । नहि कर्मण्युत्पन्ने संयोगविभागौ जातौ न वेति-सन्देहो युक्तः । कर्मोत्पत्तौ सत्यामपेक्षणीयान्तराभावेन तदुत्पत्ताववविलम्बात् । "एकद्रव्यमगुणं संयोगविभागयोरनपेक्षकारणमिति कर्मलक्षणम्" (वै०अ०१आ०१सू०१७)इति सूत्रार्थः ॥१६०॥

काचिन्नायकसङ्घटनकर्त्री पश्चादात्मानमनाद्रियमाणां नायिकामाह—

**अस्माभिरेव विहितस्तव लवलि ! लवङ्गसंसर्गः ॥**
**अधुना वेल्लितविटपा मुखमप्यस्मान्निवर्तयसि ॥ १६१ ॥**

अस्माभिरित्यादिबहुवचनेन दुष्करकार्यकारितया स्वस्यादरणीयत्वसूचनम् । तत्सन्ध्युपकारे तथादराभावात्तद्वारणाय नवेति । अनर्हसङ्गमकरणे द्वेषापत्तेः । लवङ्गेति उपादेयत्वसूचनम् । अस्मादितिपञ्चम्यन्तम् । इदानीमात्माधीनीकृतवल्लभा अस्माकं दर्शनपथमपि नावतरसीतिभावः ॥ १६१ ॥

लोकोत्तरलावण्यादिशालिनीमपि स्वीयामपहायान्यत्र चलितचित्ते कुत्रचित्काश्चिदिदमाह—

**अवगच्छति परिचितमपि नैवार्थं भङ्गुरगुणौघः ॥**
**अपि सरसि प्राप्य जनिं कमलदलं सृज्यते नहि रसेन१६२**

भङ्गुरगुणौघो=निकृष्टगुणहीनः तनुतन्तुश्चेति । अर्थमिति नान्वयः । रसेनेति जलस्य शृङ्गारस्य चोपादानम् । यथा सरस्येवोत्पन्नं कमलं जलेन नहि लिप्यते तथानभिज्ञोऽपि स्वाधीनरमणीयवस्तुना न युज्यत इति भावः । यद्वा आत्मज्ञस्योक्तिः । भग्ना गुणाः सत्त्वादयस्तत्स्थानीया वासनादयो वा यस्य स परिचितमप्यर्थं न जानाति उदासीनतयैव भोगात् । 'असक्तोऽद्विपं-

श्च भुङ्क्ते" इतिश्रुतेः । अत एव तस्य जन्यपुण्यादिसम्बन्धोऽपि न भवतीत्याक्षिप्तार्थस्योत्तरार्द्धेन समाधानम् । तदाह–"तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि कर्म न श्लिष्यते" इति । अथवा तदुदासीनत्वस्यैवोत्तरार्धेन समर्थनम् ॥ १६२ ॥

मानगोपनं विदधानां नायिकां कश्चिदिदमाह—

**अपहाय कुटिलमीक्षणमृजुकविलोकेन सूचयसि मानम् ॥**
**ऋजुकुटिलत्वमतन्त्रं प्राहास्वरसं तु विकृतिरेव ॥१६३॥**

अतन्त्रम्=अविवक्षितम् । "ह्रस्वग्रहणमतन्त्रम्"इत्यादौ तथादर्शनात् । विकृतिः=सार्वदिकावस्थावैपरीत्यम् । तथाचाभिमुखदर्शनान्मानो नास्तीति न वाच्यम् । सर्वदा कुटिलदर्शनशीलायाः कटाक्षमुन्मुच्य दर्शनेन मानस्यानुमानादिति भावः ॥ १६३ ॥

नायिकान्तरमनुसर्तुकामे नायके शङ्कमानां नायिकां सखी समाश्वासयति—

**अविदूरगते गुणवत्संसर्गिणि सङ्कुचन्ति विपरीताः ॥**
**आलोक्य पद्मिनीप्रियमाशु निमीलन्ति कुमुदिन्यः १६४**

विपरीताः=तत्सम्बन्धापकृष्टगुणाः । सङ्कोचः=उन्मिलनवैमुख्यं मुद्रणं च । पद्मिनीप्रियं=सूर्यं नायिकाविशेषकान्तं च । कुमुदिन्यः=कैरविण्यः । "इनः सूर्ये प्रभौ राज्ञि" इति विश्वः । प्रभुपरात्(१) इनशब्दात्पुंयोगे ङीप् । कुत्सितसम्बन्धिन्या मुद इन्यः ईश्वर्यः । कुत्सितमात्रैराद्दता इति वार्थः । तथाच ततो निवृत्य त्वय्येवानुरक्तिमासञ्जयिष्यतीत्यलमाशङ्कयेति भावः ॥ १६४ ॥

---

(१) प्रभ्वर्थकादित्यर्थः ।

विरहद्यमानां काञ्चित्सखी उपदिशति—

**अपराधीनि प्रियतममुपेक्षसे तन्वि ! चेत्सुचिरम् ॥**
**सौहार्दमपि चिरत्नं तर्हि कदर्थयितुकामासि ॥ १६५ ॥**

प्रियो हि स एव यत्रापराधावस्थायामपि न दौर्मनस्यम् । अन्यथा दशाविशेषे सर्वस्याप्युपादानेनाविशेषप्रसङ्गात् । तथा-चायं कृतापराध इति तदुपेक्षायां तस्यार्थादप्रियत्वमेव पर्यवस्य-ति । एवं च पूर्वकीलानानुरागस्याप्याप्रियाविषयकत्वापत्त्या स-र्वमप्याकुलीभवतीति भावः ॥ १६५ ॥

कस्याचिदनुरज्यमानं हितार्थी प्राह—

**अभिसृतवानसि सौरभभारप्रामाण्यमात्रेण ॥**
**किं मधुप! केतकीमविगणय्य भूयांसि कण्टकरजांसि १६६**

सौरभं=परिमलः सौन्दर्यं च । सौरभान्तरवैलक्षण्यलाभाय भारेति । सौरभस्य मधुव्याप्यत्वाभावलाभाय-मात्रेति । सौरभमात्रार्थित्ववारणाय-मधुपेति । दर्शनमात्रे दोषाभावादभि-सृतेति । उपभोगेच्छापर्यन्तत्वलाभार्थमिष्टाभावमात्रवारणाय कण्टकेति । इष्टालाभसूचनाय रज इति । पक्षे कण्टका दुर्ज-नाः । रजो दुरितम् । सङ्गमप्रतिबन्धकतया तदुत्तरमप्यपवादज-नकतया च । इष्टानिष्टहेतुतयाऽपरिहितत्वात् कण्टकानां प्रागु-द्देशः ॥ १६६ ॥

काचिन्मानोपक्रमाय पृच्छन्तीं नायिकामाह—

**अनुभूतवती त्वमसि प्रियविरहकदर्थना बहुशः ॥**
**सम्प्रति सुसहा यदि तद्विधान वा परिकरं माने ॥१६७॥**

त्वमित्यनेन स्वकल्पितत्ववारणम् । प्रियविरहकृताः कदर्थ-नाः दुःखानि । अनेन तदनुभवस्याप्रामाण्यशङ्का निरस्ता । सुखा-

दिज्ञानस्य भ्रमत्वाभावात्। सुसहा=द्वेषविषयत्वानापन्ना। परिकरः= बन्धो लक्षणया समारम्भः। तथाच स्त्रवृत्तिदुःखस्य द्वेषविषयत्वानुपपत्त्या मानारम्भो न कार्य इतिभावः। उत्तरालङ्कारः। "उत्तरमात्रात्प्रश्नोन्नयने स्यादुत्तरं नाम।" इत्यलङ्कारकौस्तुभे॥ १६७॥

अभिसारात्कलङ्कमाशङ्कमानां दूतीदमाह—

**अवहितया वैशेषिकवार्तेयं श्रूयतां कुतुकात्॥**
**गणयन्ति हि वसुमत्याः श्यामलतामपि विशेषगुणम्॥**

वैशेषिकाः=काणादाः। अथच विशेषोऽस्त्येषामिति ठन्। विशेषिका एव वैशेषिकाः। स्वार्थे तद्धितः। विशेषमात्रादररक्ता इत्यर्थः। अनुपेक्ष्यत्वसूचनाय–अवहितयेति। रसाधायकत्वसूचनाय–कुतुकादिति। वसुमत्याः=भूमेः द्रव्यवत्याश्च। (श्यामलतां) श्यामलभावं=नीलरूपमनाचारं च। विशेषगुणं द्रव्यान्तरवृत्तित्वरहितगुणं प्रतिष्ठाहेतुं च। तथाच तत एव कलङ्कमार्जनं भविष्यतीति भावः॥ १६८॥

कश्चित्प्रियामाह—

**अप्सरसां स्वनिरूपितमपकर्षमिव प्रकाशयितुम्॥**
**क्षपयसि मदं घनपयः कासाराणां कचैः स्मितैर्नाभ्या १६९**

घनो मेघः, पयः क्षीरम्, कासारस्तडागः। कचादिभिः क्रमादेषां जयः। पयःशब्दादप्शब्दस्य कासारशब्दाच्च सरःशब्दस्य लाभेऽर्थवशाद्धनानां बह्वीनामप्सरसां स्वापेक्षापकर्षवत्त्वं प्रकाश्यते। अवयवोत्कर्षस्यावयविन उत्कर्षे पर्यवसानादिति भावः॥ १६९॥

नायकभोगं गोपयन्तीं काञ्चित्सुहसन्ती सखी प्राह—

**अलसाति कलेवरे तव लसतितरां किमपि सौभाग्यम् ॥**
**अधरे समधिगतरदे विभाव्यते नीरदाकृतिता ॥१७०॥**

अलसशब्दादाचारक्विबन्तात्कर्तरि शतृप्रत्ययः । लसच्छब्देन नञ्समासगम्यार्थमादाय विरोधोद्धारः । रदाकृतेर्निष्क्रान्तस्य भावो रदचिह्नाभाव इत्यर्थादुत्तरार्द्धे(१)। नीरदो मेघस्तदाकारो नैल्यमिति तत्परिहारः। त्वन्नेत्रचुम्बनलग्नकज्जलस्य दयिताधरस्य त्वया चुम्बनेन त्वदधरे नैल्यं गात्राणामालस्यं चेति लिङ्गद्वयेन प्रियसम्भोगानुमानं सुलभमेवेति भावः ॥ १७० ॥

द्रव्याविरहेणापवादनिरासोपायमपश्यन्नाह—

**अतिवृत्तार्थपराणामाख्यातप्रकृतिताभाजाम् ॥**
**मायोगव्यतिरेकादवर्णविरहः श्रुतः केन ॥ १७१ ॥**

अतिशयितं वृत्तं रूपं वस्तुवृत्तं च। अर्थो वित्तादिश्चेति द्वन्द्वो वा। प्रसिद्धा प्रकृतिर्यस्य तद्भावयुक्तानामपि। मायोगो लक्ष्मीसम्बन्धस्तद्विनाभावेन । अवर्णस्यापवादस्य विरहोऽभावः केन श्रुतो भवत्येव । अथच अतिवृत्तो भूतोऽर्थस्तत्पराणां भूतार्थे विधाने तत्परधात्वर्थस्यातिभूतत्वस्यैव प्रतिपादनात् । आख्यातानां तिबादीनां प्रकृतिताभाजां प्रकृतिभूतानां धातूनामिति यावत् । धातूत्तरमेव तदनुशासनात्। मा इति निपातो निषेधार्थे। तद्योगं विना अकारविरहः केन श्रुतः । लुङादौ हि अडागमो "न माङ्योगे" (६।४।७४)इति माशब्दयोग एव निषिद्धो न त्वन्यथापीति भावः ॥ १७१ ॥

---

(१) विरोधोद्धार इति पूर्वस्यात्रापि सम्बन्धः ।

कश्चित्प्रियामाह—

**अधरे परं प्रवाले प्रालेयकरानने ! न वलते हृत् ॥**
**गतिकृतहेलमराले ! यावद्बाले पयोधरेऽपि तव॥१७२॥**

इत्यकारव्रज्या ।

परमित्येवकारार्थे । प्रवाले=पल्लवविद्रुमान्यतरसमाने अधरे एव हृदयं न वलते नोत्सुकं भवति। यावदिति किन्त्वित्यर्थे। [पः हापारेण हस्तेन सस्पृहं भवति।] (१)सम्बुद्धिद्वयं स्पष्टम् । अथच अधरप्रवालपदाभ्यां धरभिन्नप्रकृष्टबालार्थबोधात् पयोधराबालश-ब्दाभ्यां च तद्विरुद्धार्थबोधाद्विरोधः । यत्किञ्चिद्विशेपस्यापि सामान्याभावविरोधादिति भावः॥ १७२ ॥

कस्यचिद्दुर्जनानुरागं विभावयन् कोऽप्याह—

**आलोकयतां पशुपतेः कपालिनः पापसङ्गहव्यसनम् ॥**
**पूर्णेन्दुना दृशा गोऽपरितुष्यञ्छिरासि तत्कलां निदधे१७३**

पशुपतीत्यज्ञत्वसूचनम । कपालीत्यसद्वृत्तत्वसूचनम् । पूर्णेन्दोः प्राप्तत्वेऽपि तस्य शुभत्वेन तत्कलामेव बहुमन्यत। क्षी-णचन्द्रस्य ज्योतिषपरिभाषया पापत्वात्। तथा च वराहः—"क्षी-णेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः" इति । अथवा ना-यिकाप्रहितदूतीसमासक्ते नायके कस्याश्चिदुक्तिः । पूर्णेन्दुप्राया-यामपरितुष्य तद्व्याप्यत्वेन तदेकदेशतया ततो हीनतया च कलाप्रायां दूतीमाद्रियतेति भावः ॥ १७३ ॥

दोहदार्थं तिलकवृक्षं पश्यन्तीं काश्चिदालोक्य सखी प्राह—

**आरामतिलकशाखिनि दयिततमेऽपि च समानदिग्वृत्तौ**
**विकसदुपेक्षापेक्षाः कटाक्षधारा युगपदस्याः ॥ १७४ ॥**

(१) अयं पाठोऽधिकोऽसङ्गतश्च भातीति कोष्ठकमध्ये स्थापितः ।

एकदिगवच्छिन्ने तिलकद्रुमे नायके च निपतन्त्यः कटाक्ष-धारा वृक्षांशे उपेक्षात्मिका नायकांशे चोपादेयत्वादपेक्षात्मि-काः। विषयभेदेन ज्ञानस्य तदुभयात्मकत्वसम्भवात्। परेषां तर्कवारणार्थमारामेति ॥ १७४ ॥

काचिदस्थिरप्रणयं नायकमधिकृत्याह—

**आपातमात्ररागिणि नियतं दोषान्तरं समुन्नेयम् ॥**
**हरिदश्वे परितापो भवति सुधादीधितावङ्कः ॥ १७५ ॥**

दोषान्तरं=क्षणिकरागातिरिक्तो दोषः। उन्नेयम्=अनुमे-यम्। व्यभिचारवारणार्थं-नियतमिति। बाधाभावसूचनाय सामिति। सूर्यचन्द्रयोरारुण्यस्यानतिचिरावस्थायित्वं प्रसि-द्धम्। हरिदश्वेति प्रकाशकत्वं सुधेत्यादिनाल्हादकत्वं व्यङ्ग्यम्। तेन दोषस्य रागानवभासात् सिद्धसाधनशङ्कापि नेति भावः ॥ १७५ ॥

कञ्चिदस्थिरस्नेहं काचिदुपालभते—

**आनन्दमेव सूते सुभग! भवानद्भुतोदयात्प्रथमम् ॥**
**प्रणयविभङ्गहलाहलमुद्गिरसि पुनः पयोधिरिव ॥१७६॥**

सुभगेति अतियोग्यत्वसूचनम्। अद्भुतस्य=लावण्या-दिनिबन्धनस्य। पक्षे अद्भुतानां चन्द्रादिपदार्थानाम् उदयात्। प्रणयस्य विशिष्ट उत्कटदुःखजनको यो भङ्गो विच्छेदः स एव हलाहलं दुःखजनकत्वसाधर्म्यात्। गौणतयोद्गिरसी-त्यस्य नाश्लीलत्वम्। तदुक्तं दण्डिना—

"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ॥
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते" ॥ १७६ ॥

कश्चिच्छरदं वर्णयति—

**आकाशकुसुममवनीतलमुपनयता घनावसानेन ॥**
**आविष्कृतोऽनुरूपं पाण्डुभवः सहजशालिनि क्षेत्रे ॥७७**

आ समन्तात् काशकुसुमानि यत्र तादृशं भूतलं प्रकाशयता शरत्समयेन सहजाः सजातीयसंवलनेन बहवः शालयः कलमा यत्र तादृशे क्षेत्रे केदारे पाण्डुत्वगुणो जनितः । अथच प्रपञ्च-माकाशपुष्पप्रायं पारमार्थिकसत्ताविहीनं वदता व्यासेन सहजस्य समानमातृकस्य विचित्रवीर्यस्य सम्बन्धिनि क्षेत्रे भार्यायां पाण्डु-संज्ञो राजा जनित इति भारतम् । एतेन शरत्समयस्य व्यास-तादात्म्यमुद्दीपकत्वातिशयश्च व्यज्यते । जगन्मिथ्यात्वोपदेशक-स्यापि व्यासस्यैवं विकारो यथा कामस्य दुर्वारत्वे ध्वनिः॥७७॥

स्वस्य तदधीनतां सूचयन् कोऽप्याह—

**आत्मारामान्तर्गतिरसावशोकोऽपि कुसुमगात्रि ! ॥**
**चरणतलताडनं तव काङ्क्षति का नाम कामिनां तु कथा ॥७८**

अशोक एतत्संज्ञः(तरुः) शोकसामान्याभाववांश्च । "जीवन्नेव हि विद्वान्संहर्षायासाभ्यां मुच्यते" इति वचनात् । आरामे उपवने अन्तर्भावो यस्य । अथच आत्मज्ञान्तर्गत आत्मज्ञः । आत्मन्येव बाह्यविषयानपहाय आरमत इत्यात्मारामः । तदुक्तम्—

"प्रजहाति यदा कामान्सर्वान् पार्थ ! मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥" ( भ० गी० अ०२ श्लो०५५ ) इति । तद्दोहदत्वेन तदाकाङ्क्षा । तदुक्तं वृक्षायुर्वेदे—

"तरुण्या नूपुरोपेतपादघातेन ताडितः ॥
अशोको विकसत्याशु सर्वलोकमनोहरः" ॥ १७८ ॥

सत्पुरुषस्य कस्यचिद्बहुविधपदारोहावरोहमालोक्य कोऽप्याह—

**आनीय कामनीयकमनीयतायं कलानिधिर्विधिना ॥**
**अनिशोपचयापचयप्रणालिकाकृतकदर्थनां व्यर्थम् १७९**

कामनीयकं सौन्दर्यम् आनीय कदर्थनां व्यर्थमनीयतेत्यन्वयः। कलानिधिः=चन्द्रो विदग्धश्च। उपचयापचयौ=कलानां सम्पदश्च वृद्धिह्रासौ, द्वयोः प्रणालिका परम्परा। अस्यैवं कदर्थनीयत्वे रमणीयत्वमेव न कर्तव्यं तत्करणे च कदर्थनमनुचितमितिभावः। एतेन सर्वदा ऐकरूप्यमेव सम्यक् न तु महदपि पदं प्राप्य पुनस्तद्भ्रंस इति सूचितम् ॥ १७९ ॥

कश्चित्प्रियामाह—

**आजानिको मधुरिमा भवदधरे सुतनु ! रागोऽपि ॥**
**मम हृदि विषयतयाद्यः परः(१) समवायविषयिताभ्याम्॥**

आजनि जन्मारभ्य भव आजानिकः। अध्यात्मादित्वाट्ठञ्। अनुशतिकादित्वादुभयपदवृद्धिः। स्वाभाविक इति यावत्। त्वदधरे माधुर्यरागयोः समवायेन वृत्तिः। अत्र माधुर्यस्य तद्विषयकत्वसम्बन्धेन मदीयज्ञाने वृत्तिः। रागस्य तु समवायेन विषयितया च। अधरविषयकरागस्य समवायेन तद्रागस्य च विषयितया मयि सत्त्वात्। आत्मजन्यज्ञानविषयत्वाद्रागस्य आत्मनस्तद्विषयकत्वमुक्तम् ॥ १८० ॥

काचिद्बहुभिरुपपतिभिराकुलीक्रियमाणां काचिदिदमाह—

**आमोदाय दिगन्तप्रसारिणे कुप्य पद्मिनि ! निजाय ॥**
**नैवाहम्पूर्विकया भृङ्गेभ्यो मिलितुकामेभ्यः ॥ १८१ ॥**

---

(१) अत्र परस्तु इति पाठो मात्राधिक्यतया छन्दोभङ्गकरत्वादयाज्यः।

आमोदः=परिमलः हर्षहेतुर्लावण्यादिश्च "क्रुधद्रुह०" (१।४।३७) इत्यादिना चतुर्थी। परस्मै क्रोधावकाशनिरासाय निजायेति। "अहंपूर्वमहं पूर्वमित्यहम्पूर्विका स्त्रियाम्।" इत्यमरः। भृङ्गेभ्यः=भ्रमरेभ्यः तरलत्वसाधर्म्येण कामुकेभ्यश्च। आमोदप्रसाराभावे विषयज्ञानाभावेन तदिच्छायाः सुतरामभावेन तेषामागमनासम्भवादिति भावः॥ १८१॥

कथमनया मुग्धयापि वसन्तोत्सवे दयितोपरि चूर्णप्रक्षेपः कृत इति सम्भावयन्तीं सखीं काचिदिदमाह—

आदाय मुग्धसुदृशाऽभिवयस्यं चूर्णमुष्टिरक्षेपि॥
तत्कालागतदयितोपरि निपपात त्वजाकृपाणीयात् १८२

आदानस्य क्षेपोद्देश्यकत्वलाभार्थम्—आदायेति। "चूर्णानि वासयोगाः स्युः" इत्यमरः। "चूर्णं पटवासः स्यात्" इति क्षीरस्वामी। प्रियसन्निधौ सख्युद्देशेनापि क्षेपसम्भवात्—तत्कालेति। "पूरणगुण०" (२।२।११) इत्यव्ययेन षष्ठीसमासनिषेधः कृदव्ययविषय इति कैश्चिद्व्याख्यानात् दयितस्योपरीति समासः। तुशब्द उपरीत्यनन्तरं योज्यः। यथाऽकस्मादागताया अजायाः कुतश्चित्पतता कृपाणेन वधस्तन्न्यायात्। अजाया आगमनमिव कृपाणस्य पतनमिवेति "समासाच्च तद्विषयात्"(५।३।१०६) इतीवार्थविषयसमासात् छप्रत्ययविधानबलेन अजाकृपाणमिति समासः। ततोऽजाकृपाणमिव अजाकृपाणीयम्। उक्तसूत्रेण छप्रत्ययः। अकस्मादेव तत्र पतित इति फलितार्थः॥ १८२॥

काचित्सङ्केतस्थानगतामप्राप्तवल्लभां विलोक्य काप्याह—

आपाकमुपगतेवाभिसारिका परिणते शाणक्षेत्रे॥(१)
अवलोकयतेऽनुपसरत्यभिलषितजने ज्वलद्गात्री॥१८३॥

---

(१) शाणारण्ये इति पाठः काशिकराजकीयपुस्तकालयस्थपुस्तके।

आपाकः=घटादिपाकस्थानम् । "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमरः । भरतोऽपि—

"हित्वा लज्जां समाकृष्टा मदोक्षा मदनेन च ॥
अभिसारयते कान्तं सा भवेदभिसारिका ॥"

परिणतेति पीतत्वसूचनम् । ज्वलनं तापवत्त्वं दह्यमानत्वं च । विप्रलब्धेयं नायिका । तदुक्तम्—

"प्रियः कृत्वा तु सङ्केतं यस्या नायाति सन्निधिम् ॥
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता"( साहि० द० परि० ३ का० ८३ ) ॥१८३॥

पूर्वमननुरक्तायां कस्यां चित्तत्सङ्घटनयत्नं करिष्यामीति वदन्तीं दूतीं कश्चिदिदमाह—

**आलोकमात्रतो यदि नोल्लासस्तर्हि निष्फलोऽभ्यासः॥**
**कोरकितेन्दोरुदयेऽनिशमपि किं पद्मिनी हसति ॥१८४॥**

आलोकः=दर्शनं प्रकाशश्च । उल्लासः=अनुरागो विकासश्च । अभ्यासः=दर्शनाद्यावृत्तिः । कोरकिता=मुकुलिता असञ्जातानुरागा च । हासः=फुल्लत्वं प्रीतिश्च । अनिशमित्यन्तसंयोगे द्वितीया । पद्मिनी=कमलिनी नायिकाविशेषश्च ॥ १८४ ॥

प्रणतेऽपि नायके मानमपरित्यजन्तीं हितैषिणी सखी प्राह—

**आथर्वणीमुपनिषद्विद्यामिव लब्धुमेष त्वाम् ॥**
**शिरसा वहति भवत्पदनूपुररक्तोपलोल्मुककलापम् १८५**

कोपप्राचुर्यसूचनाय-आथर्वणीमिति । कर्मभागस्य तदुक्ताभिचारप्रायत्वात् । उपनिषदिति रसोत्पत्तिद्वारा परमाल्हादहेतुत्वसूचनम् । नूपुरसम्बन्धिनो रक्तोपला रक्तमणयस्त एवोल्मुकान्यङ्गाराः तत्समूहम् । वहति=दधाति । प्रणामसमये तेषां

नायकशिरःसम्बन्धात् । अथर्वशाखायां मुण्डोपनिषदध्ययनाङ्गत्वेन शिरोव्रतं विहितम् । "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" ( मुण्ड० ३।२।१० ) इति श्रुतेः । शिरोव्रतं शिरस्यङ्गारपात्रधारणमिति वेदान्तिनः । तच्च तैत्तिरीयाणां कारीरीवाक्याध्ययनस्य भूभोजनमिव मुण्डकोपनिषदध्ययनस्याङ्गम् । "नैतदचीर्णव्रतोऽधीते (मुण्ड० ३।२।११) इति तत्रैव श्रवणात् । न तु तद्भेदाच्छाखाभेदेन ब्रह्मविद्याभेदः । अतः सर्वशाखाप्रत्ययमेकं ब्रह्मोपासनमिति निरूपितमुत्तरमीमांसायां तृतीये(१) ॥ १८५ ॥

सखीभिर्माने प्रवर्त्तमाना काचित् स्वयं परामृशति—

**आलीजनानुरोधत्यागे व्याहन्यते सख्यम् ॥**
**तदनुसरणे स्वरूपासिद्धिः स्यात्प्रियतमत्वस्य ॥१८६॥**

सखीकथितार्थाननुष्ठाने सख्यव्याघातः । परस्परेच्छानुवर्तनस्यैव तत्पदार्थत्वात् । तदनुरोधेन मानकरणे तु प्रियतमत्वस्य स्वरूपासिद्धिः असिद्धस्वरूपं प्रसज्यते । तत्प्रतिकूलकरणे तस्य प्रियतमत्वासम्भवादिति भावः । एतेन स्वस्य माने प्रत्यप्रवृत्तिसूचनम् । १८६ ॥

(स्ववचनमनादृत्य मौनमेव साधयन्तीं काचित्सखी प्राह—)

**(२)आसाथं निवधान व्यवसायं सखि ! सुखेन मौनाय ॥**
**दृष्टे कलावति पुनर्विकासिष्यसि झटिति कुमुदिनीव१८७**

(कलावान्=चन्द्रः कलाकुशलो नायकश्च । ) विकासः=प्रसाद उत्फुल्लत्वं च । विषयोद्दीपनयोः समत्वभाने मौने शक्त्य-

(१) शारीरकभाष्ये तृतीयाध्यायस्य तृतीये पादे प्रथमाधिकरणे इत्यर्थः ।

(२) इदं पद्यं का. रा. पु० पुस्तके नास्ति ।

सम्भवादिति भावः ॥ १८७ ॥

सुजनेभ्यः स्वदोषनिवेदनं नानिष्टावहमिति कोऽप्यनुभूयाह–

आदीनवोऽपि सुजनैर्हृदयधृतो न स्वकार्यकरः ॥
अवदातयन्ति किरणा जगदिन्दोर्नीलयति नाङ्कः॥१८८॥

"दोष आदीनवो मतः" इति वैजयन्ती। हृदयं=चित्तं मध्यं च। स्वकार्यम्=अकीर्त्यादि मालिन्यं च। अवदातशब्दात् "तत्करोति" इति णिच्। अन्यथा किरणैः श्वैत्यस्येव कलङ्केन मालिन्यस्यापि जननप्रसङ्गादित्यर्थः। १८८ ॥

कश्चिद्गवाक्षतो नासापर्यन्तमेव प्रकाशितमुखया कयाचिद् दृष्टः तस्याः स्वविषयानुरागं तर्कयति—

(१)आकेशान्नासान्तं दृष्टेऽपि मुखेऽनुमीयते हासितम् ॥
माणिक्यद्वयधियमनु मौक्तिकयुगसंविदा तदाभरणे१८९

इत्याकारव्यञ्ज्या॥

स्मितसत्त्वे त्वधररूपाभिभवादभिभावकाभावान्मौक्तिकद्वय-घटितमेवेति स्मितानुमानात्तदनुरागानुमितिः ॥ १८९ ॥

कश्चित्पल्लीपतितनयायाः सौभाग्यं सूचयन्नाह–

इभकुम्भमदस्तम्भनसम्भवमुचित्य यश उच्चैः ॥
अपि भीतरक्षणोत्थं चिनुत उरोजौ पुलिन्दपतिपुत्र्याः९०

"भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः।" इत्यमरः।

---

(१) का. रा. पु. पुस्तके इदं पद्यं नास्ति। एतत्स्थाने—
आकारसन्निकर्षादेव दरोऽप्यादरो भवति।
तस्यैव व्यतिरेकादाशापदमेव शापदं भवति ॥
इति पद्यं वर्तते।

"एतेऽरण्यचरा" इति स्वामी । मदस्तम्भनं=गर्वनाशो दानजलशोषश्च । तदुच्चतादर्शनचिन्तया तदुपपत्तेः । स्वोन्नततया करिकुम्भजयलक्षणं यशः प्राप्य पुलिन्दतरुणानां स्वस्मिन्नासक्त्या गजवधान्निवृत्ततया भीतानां करिकुम्भानां रक्षणजन्यमपि यशो वहन् इति भावः । एतेन तदनुरागस्य सर्वविदितत्वसूचनम् ॥ १९० ॥

सङ्केतस्थलकर्मकतदपादानकगमनागमनदशायां वृत्तं द्वयोः सङ्गमं पश्चात्तप्यमाना नायिका सखीं स्मारयति—

**इतरेतराभिमुखयोर्वर्त्मनि युवयोर्मुहूर्तमभूत् ॥**
**मिलनं त्वत्करपरभृततत्कर्णरसालकलिकयोरिव तत् ॥**

स्वस्य सङ्केतस्थानगमनसूचनाय नायेकनाम्रकलिकाया आनयनम् । यथा तया सह त्वत्केलिकोकिलस्य मिलनमल्पकालावच्छिन्नमेव जातं तथा वयोरपि । जनापवादभीत्या तत्र विलम्बितुमशक्यत्वात् । अतोऽग्रेऽपि यथासमयं भविष्यतीत्यर्थः॥१९१॥

कश्चिन्नायिकाविरहावस्थां नायकाय निवेदयति—

**इन्दिन्दिरसन्दोहः प्रत्यारामद्रुमं भ्राम्यन् ॥**
**कमलोन्मूलनमूलं शोचति तस्या भवद्विरहम् ॥१९२॥**

(इन्दिन्दिरसन्दोहः=) भ्रमरसमूहः । कमलानामुन्मूलनमूलं शोचति । तापप्रतीकाराय मृणालादिग्रहणात् (उन्मूलनं) तस्य मूलं कारणम् । तस्यास्त्वद्विरहाभावे कमलमधुनैव तस्य तृप्तिसम्भवेन प्रतिद्रुमं भ्रमणानुपपत्त्या कष्टं न स्यादिति भावः । अथवा कस्यचिद्वदान्यस्य विरहे याचकानामतिवैक्लव्यं कथ्यते । इन्दिन्दिरा भ्रमणसाधर्म्येण याचकाः । द्रुमाः ( कृपणाः ) अदातृत्वेन तत्प्रायत्वात् । कमलाया लक्ष्म्या नाशमूलं द्रव्यसत्त्वेऽप्यदानेन

तथात्वात् । तस्य प्रसिद्धस्य । (विरहम् अभावम्) । अभवत न विद्यते भा कान्तिर्यस्य तद्वदिति वतिप्रत्ययः ॥ १९२ ॥

काचिज्ज्योत्स्नाभिसारिका चन्द्रोदयं ज्ञापयति—

**इन्दुकिरणाङ्कुराली हरिति हरेः प्रथममुल्लसिता ॥**
**सखि! वैजयन्तमार्जनमाणिक्यजमार्जनीव निर्भाति १९३**

"स्यात्प्रासादो वैजयन्तः" इतीन्द्रप्रकरणेऽमरः । मार्जनम् अवरापनयनं तदर्था माणिक्यशलाकानिर्मिता शोधनीव भाति । रक्ततया माणिक्येति । अन्यमार्जनाय तदसम्भवात्—वैजयन्तेति । यद्वा वासगृहसंस्कारः क्रियतामिति वासकसज्जां काप्याह ॥ १९३ ॥

अनुरूपसम्बन्ध एव सुखाय कल्पते इति दूती उपनायकस्य गुणाधिक्यं सूचयन्ती वदति—

**इह यद्यपि सम्बन्धान्तरमितरपदार्थसामान्यम् ॥**
**तदपि कथितोऽभियुक्तैः संयोगो गुणवतामेव ॥१९४॥**

जन्यजनकभावादयः सम्बन्धाः सदृशासदृशानामपि सन्तु नाम । सम्भोगाख्यस्तु सम्बन्धो मिथः सदृशसौन्दर्यादिगुणानामेव युक्तः । अथच समवायादयो गुणवतां द्रव्याणां तद्रहितानां गुणकर्मादीनामपि स्वीक्रियन्ते । संयोगस्तु गुणवतामेव । द्रव्ययोरेव तत्स्वीकारादिति शास्त्रविदो वदन्तीत्यर्थः ॥ १९४ ॥

अन्यनायिकासक्ते नायके सखी तस्यानिष्टहेतुतां निराकरोति—

**इन्दीवरमकरन्दैरिन्दिन्दिरवृन्दमानन्दम् ॥**
**विन्दति पुनर्मरन्दाः कुन्दादेर्मन्दयन्ति सन्देहम् ॥१९५॥**

विन्दतीत्यस्योत्तरार्द्धान्वयानर्हतया न पूर्ववाक्यैकदेशस्योत्तरगतत्वं दोषः । "मकरन्दो मरन्दवद्" इति द्विरूपकोषः ।

सन्देहम्=अन्यमधु कमलमधुविशिष्टं स्यादिति शङ्कामेव । मन्दयन्ति=प्रतिबध्नन्ति । तथाचान्यत्रासक्तोऽपि विशेषदर्शनान्निवृत्तभ्रमस्त्वय्येव रतिं दृढीकरिष्यतीति सम्यगेवेदं निर्वृत्तमिति भावः ॥ १९५ ॥

भावनाविशेषेण सर्वत्र तामेव पश्यन् तद्दर्शनेऽप्यनाश्वासवान् कोऽप्याह—

**(१)इतरस्यामपि पतितं चक्षुस्तामेव पश्यति मदीयम् ॥**
**तद्दर्शनेऽपि तेन प्रामाण्यग्रहणदौर्बल्यम् ॥ १९६ ॥**

नायिकान्तराणामपि स्वाभीप्सितनायिकात्वेनैव ग्रहणात् वस्तुतस्तस्या एव दर्शनेऽपि तस्य स्वानुरागविषयविशेष्यकत्वनिश्चयो न भवति । अतस्तत्सत्त्वेऽपि मदन्तः परितोषो न सम्पद्यत इति भावः । यद्यपि विषयान्तरेऽपि तद्भ्रमो भवत्येव । तथापि सारूप्यदर्शनजन्यत्वलाभाय—इतरस्या मित्युक्तम् । चक्षुः—संयोगाभावदशायां मानसभ्रमसम्भवेऽपि तद्विरोधिविशेषदर्शनप्रसक्त्यर्थं—चक्षुरिति । तथाच तद्व्याप्यवत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञानस्य चाभावादासक्तिविशेषलाभः ॥ १९६ ॥

कश्चिन्नायिकाधरमाधुर्य्यं वर्णयति—

**इक्षोरपि विक्षोभं मदपरिहारं च हारहूरायाः ॥**
**गुम्फो गिरां भवत्याः पीयूषस्यापि दूषणं तनुते ॥१९७॥**

"मृद्वीका गोस्तनी द्राक्षा हारहूरा च कथ्यते" इति

---

( १ ) का. रा. पु. पुस्तके इदं नास्ति । एतत्स्थाने—
इष्टानामपि सहचरि ! गुणभेदादभिहितो भेदः ।
भावविशेषरहस्यं जैमिनिमुनिरेव वेत्ति परम् ॥
इति पद्यं वर्तते ।

हलायुधः। गुम्फः=सन्दर्भविशेषः। तेन विवक्षितार्थप्रतिपादक-पदमात्रलाभेन न्यूनाधिक्यापत्तिर्निरासि। इक्षुरसस्य साधारण-लभ्यत्वात् विशिष्टमात्रलभ्यतया ततो द्राक्षाया उपादानम्। ततोऽपि देवमात्रलभ्यतया स्वरूपतोऽप्याधिक्याच्चामृतस्येति बोध्यम्। तथाच तदपेक्षया स्वर्गसुखस्याप्यपकृष्टत्वमेवेत्यर्थः॥ १९७॥

कांचित्सखी हितैषितया शिक्षयति—

**इच्छसि यदि वरवर्णिनि! दयितमनोनगरमध्यमाधिरोढुम्।**
**तत्प्रतिकूलाचरितं प्रतिपच्चं तन्निराकुर्याः॥ १९८॥(१)**

वरवर्णिनीति तत्प्रवेशौचित्यव्यञ्जनम्। दयितेति प्रवेशावश्यकत्वसूचनम्। मन इति विवेकित्वसूचनम्। नगरेत्यनेन नायिकाकीर्णत्वध्वनिः। मध्येति नायिकान्तरीयप्रवेशवैलक्षण्यावेदनम्। आरोहणेन तस्य स्वाधीनत्वाधानदर्शनम्। नायकप्रतिकूलाचाररूपं तत्प्रवेशप्रतिबन्धकं चेद्दूरीकरिष्यसि तदा रूपादिकारणान्तरसत्त्वादवश्यं तत्र दार्ढ्यमेष्यसीति भावः १९८

काञ्चिदतिशीतलप्रकृतिरिति विदितामवेक्ष्य काप्याह—

**इदमीयः शरदुष्णद्युतिवदसह्यः प्रतापोऽयम्॥**
**प्रतियुवतिकेतकीनामनुमेयो म्लानिमात्रेण॥ १९९॥**

त्यदादित्वेन वृद्धसंज्ञत्वात् इदम्शब्दाच्छप्रत्ययः। केतकीसादृश्येन तत्सपत्नीनां प्रियविरहकृतपाण्डुत्वसूचनम्। यद्यपीयमतिविनयशीला तथाप्येतद्द्वयेन प्रियस्यान्यनायिकापराङ्मुखत्वज्ञापकसपत्नीजनम्लानतयाऽस्याः प्रतापो यथोक्तदुःसहोऽनुमीयत इति भावः। द्वितीयपक्षे मात्रपदं साकल्यपरम्॥ १९९॥

(१) का. रा. पुस्तके नास्ति।

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 317.

# आर्यासप्तशती

पर्वतीयश्रीविश्वेश्वरपण्डितविरचिता

तत्कृतयैव टीकयोपेता ।

नेपालदेशीय-

विष्णुप्रसादभण्डारिणा

संशोधिता ।

# ARYÂSAPTÂSATI

By

PARVATIYA SRI VISVESVARA PANDIT.

With a commentary by the author,

*Edited by* Vishnu Prasada Bhandari,

*of Nepal.*

FASCICULUS II-२.

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

AGENTS: PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY:

OTTO HARRASSOWITZ, LEIPZIG: GERMANY.

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1924.

कापि विप्रियकारिणं नायकमाह--

इयदपि कियदनुभूतं सहृदय! नैवावधारितं भवता ॥
योऽनुगुणः सम्भोगे स विप्रलम्भोऽन्य एवेति ॥२००॥

इति इकारव्रज्या ।

सहृदयेति तदवधारणयोग्यत्वसूचनम् ।
"भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ॥
नाधिगच्छति चाभीष्टं विप्रलम्भः स उच्यते ॥"
इत्युक्तलक्षणः सम्भोगेच्छाद्वारा तदनुगुणो विप्रलम्भः ।
"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते"
इत्युक्तवचनरूपस्तु विप्रलम्भो न तथा । अतो मद्वचनं विधाय मत्सम्भोगेच्छाशङ्कैः सहृदयप्रथा प्रागेवोरः स्थितैवेति भावः(?)२००॥

काचिद्विरहिणी सखीमाह—

ईश्वरवाञ्छा जगतीसमाश्रयः कमठपृष्ठवत्कठिना ॥
यत्सङ्गिनि विरहाद्रौ ज्वरविषमुद्गिरति रतिसिन्धुः॥२०१

समाश्रयत्वं तद्विषयकत्वात् । पक्षे तदुपारूढत्वात् । कठिना= दुःखदत्वात् । पक्षे स्पर्शविशेषः । विरह एव पर्वतो दुर्वहत्वात् । ज्वरस्य विषत्वं मूर्च्छादिजनकत्वात् । रतेः सिन्धुत्वमनेकभेद-तया गाम्भीर्यात् । ईश्वरेच्छाया नित्यत्वेऽपि यदा विरहसाम-ग्री तदा ततो विरहोत्पत्तौ दुःखं भवति । दुःखसंवलितरतेरेव विप्रलम्भत्वात् । तदुक्तम्—

"सम्भोगः सुखसम्भिन्नो विप्रलम्भस्तु दुःखयुक् ॥
रतिस्तयोः प्रकर्षः स्यादुत्कर्षात्सुखदुःखयोः ॥"(१)

(१) अत्र उत्कर्षात् इत्यस्य स्थाने आधिक्यात् इति पाठः सा-हित्यदर्पणस्य 'यत्र तु रतिः प्रकृष्टा' इति कारिकायास्तृतीयपरिच्छेद-स्थितायां रामचरणभट्टाचार्यकृतटीकायां दृश्यते ।

कूर्मपृष्ठे मन्दरं निधाय समुद्रमथने कृते कालकूटमुत्पन्नमिति पुराणप्रसिद्धम् ॥ २०१ ॥

कश्चिदभिज्ञस्त्वया तदनुरागो न ज्ञात इति वादिनीं दूतीमाह

**ईषद्वेल्लितकन्धरमतितरलापाङ्गभङ्गिविक्षेपम् ॥**
**किञ्चिदपदेशनिर्मितमध्येमि विलोकितं तस्याः ॥ २०२ ।**

अध्येमीति 'इक् स्मरणे' इत्यस्य रूपम् । कर्मणः शेषत्वेनाविवक्षितत्वाद्विलोकितामित्यत्र न षष्ठी । विलोकितपदेन नायकस्य पश्चादवस्थानद्योतनम् । "विलोकितं पृष्ठतः स्यात्" इति भरतवचनात् । अत एव ईषादित्यादि । मनाक् वक्रीकृता कन्धरा ग्रीवा यत्र । अनेनावनताख्यं ग्रीवाकर्म सूचितम् । तथाच शार्ङ्गदेवः—

"पार्श्वोन्मुखी तु तुलिता ग्रीवा भङ्गे तथेक्षणे ।"

तामेव प्रक्रम्य सङ्गीतमीमांसायाम्—

"ग्रीवा भङ्गे स्मृतेक्षायां प्रियस्य गुरुसन्निधौ ।"

द्वेषादिनापि तथा दर्शनसम्भवादाह—अतितरलेत्यादि । अत्र भरतः—

"हर्षप्रसादललिता कान्तात्यर्थसमन्मथा ॥
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥"

तथापि जनान्तरेण ज्ञाते सङ्गमो न स्यादतः किञ्चिदित्यादि । केनचित्=पृष्ठगतसखीसमाभाषणादिना व्याजेन कृतम् । यद्वा केनाचित्=अन्येनाज्ञाततया विलक्षणेन । उक्तरूपेण व्याजेनेत्यर्थः ॥ २०२ ॥

कश्चिन्मानवतीं प्रियायां स्वस्यानुरागं व्यञ्जयन्नाह—

**ईर्ष्याकषायमपि ते वदनमिदं मां धिनोत्येव ॥**
**इन्दुरुदयारुणिम्ना भिन्नोऽपि मुदे चकोराणाम् ॥२०३॥**

"पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ।

ईर्ष्यामानो भवेत्स्त्रीणाम्" इति साहित्यदर्पणे । (प० ३ का० १९९ । २००) एतेन रक्तमुखरागसूचनम् । धिनोति= प्रीणयति । एतेन सर्वास्ववस्थास्वपि प्रियवस्तुनो मनोहरत्वमेवेति व्यज्यते ॥ २०३ ॥

कश्चिदनुभूततत्सङ्गमसुखस्तामाशास्ते—

**ईहे तरलिततारं मुक्तकचं मुदितनमजीवम् ॥**
**सङ्गं तस्याः संस्थितजीवनविद्यासिदिवसमिव ॥ २०४ ॥**

तरलिता=चञ्चलीकृता हर्षाधीना च । तारा=बृहस्पतिस्त्री कनीनिका च । कचाः=केशाः कचो गुरुपुत्रश्च । जीवः=आत्मा बृहस्पतिश्च । "कचः केशे गुरोः सुते" इति विश्वः । मृतसञ्जीवनविद्यालाभदिवसोऽप्येवम्भूत एवेत्यर्थः । मुक्तकेशमित्यत्र कामशास्त्रम्—

"न विना केशनिर्मोकं न विना काममोचनम् ॥
कुर्वन्ति कामिनो भोगं न च बाह्यरतं विना" इति॥२०४॥

कांचित्सखी समाश्वसयति—

**ईदृशमेव विपर्ययमभिसन्धायास्थिरप्रेम्णाम् ॥**
**तत्र न बध्नन्ति रतिं सम्प्रति किं वा गतानुतापेन२०५**

इति ईकारव्रज्या

ईदृशं=त्वत्प्रत्यक्षविषयीभूतम् । विपर्ययं=वैपरीत्यम् । अस्थिराणां प्रेम्णामिति कर्मधारयः । बहुव्रीहौ तु विपर्ययम्=अदृढतानुरागत्वम् । तत्र=अस्थिरप्रेमसु । रतिम्=इच्छामनुरागं वा । पूर्वमेव मया बोधितापि तथा नाकार्षीः साम्प्रतं त्वनुतापेन किं कार्यम् । अतीतस्यान्यथाकर्तुमशक्यत्वात् । अथवा विपयान-

वासिदुःखितं कश्चित् परमार्थविदुपदिशति । अस्थिरेषु ब्रह्मातिरिक्तपदार्थेषु अनुरागमीदृशं दुःखपरिणामरूपं विपर्ययमभिमेत्य विदिततत्त्वास्तत्र रतिं न बध्नन्ति किन्त्वात्मन्येव । "आत्मन्येवात्मना तुष्टः"(भ.गी.अ.२श्लो.५५)इत्युक्तेः । सम्प्रतीनि । तथा चैतदुत्तरं तेषु भावपहायात्मानमेव ज्ञातुं प्रवर्तेथा इत्यर्थः ॥२०५॥

काश्चित्प्रोषिताय तत्कान्तादशां निवेदयति—

**उन्नमयन्ती वदनं दिदृक्षया तव कपाटमवलम्ब्य ॥**
**त्वद्देशं प्रति चलितुं सा भाति गृहीतपक्षेव ॥ २०६ ॥**

अतिदूरतया दर्शनासम्भवज्ञाने सत्यपि रागौत्कट्येन तत्तिरस्कृत्य दर्शनार्थं प्रवृत्तिः । कपाटद्वयमध्यवर्तिनया उभयपार्श्ववर्तिनोस्तयोः पक्षसाम्यम् । अवलम्ब्येत्यनेन पदाग्रमात्रेण भूमिस्पर्शसूचनम् । तन्निबन्धनपतनभयादेव कपाटाश्रयणात् । उन्नमनेन प्रियनयनसंयोगप्रतिबन्धकमध्यवर्तिपर्वतादिकृतव्यवधानानिराकरणेच्छा व्यज्यते ॥ २०६ ॥

वञ्जुलतरुदोहदसमये प्रथमं तत्पल्लवेन कृतावतंसया नायिकया कृतं तत्पदप्रहारं पश्यन्प्रिय आह—

**उत्तंसितं किसलयं श्रवणाभरणारुणमणीनाम् ॥**
**मिलनात्प्रथममशोकः पदपरिरम्भेण पुष्पितः पश्चात् २०७**

पश्चादिति कर्णालङ्कारलग्नपद्मरागसम्बन्धादवतंसतापन्नमशोकपल्लवं प्रथमं कुसुमितम् । उक्तरत्नानामेव रक्ततत्पुष्पस्थानीयत्वात् । अशोकस्तु पदप्रहारेण पश्चादेव कुसुमितः । तथा च गृहीतकिशलयस्य कुसुमाभावप्रयुक्ता विजातीयशोभाक्षतिर्न शङ्क्येति भावः । एतेन महत्परिग्रहे स्थानच्युतानां तद्वर्तिनां च समानैव फलसम्प्राप्तिर्भवतीति व्यञ्जितम् । "पल्लवोऽस्त्री किसल-

यम्" इत्यमरः ॥ २०७ ॥

काश्चित्प्रियां प्रीणयितुकाम इदमाह—

उन्नतिमानतिकठिनः समुदितनक्षत्रमालोऽयम् ॥
बाले ! पयोधरस्तव कनकाचलवद्वरीवर्ति ॥ २०८ ॥

कठिनान्तमर्थश्लेषः। नक्षत्राणां माला पङ्क्तिः। अथवा हारविशेषः। "सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः" इत्यमरः। "बाला स्यात्षोडशाब्दा" इति रतिरहस्यम्। (प.४ श्लो.१) "पयोधरे खेलति कुम्भ एव" (स० ६ श्लो० ६६) इति नैषधादिप्रयोगादेकस्यापि प्रयोगः सम्प्रदायसिद्धः ॥ २०८ ॥

काञ्चिदत्यन्तमानान्निवर्तयितुं सखी शिक्षयति—

उत्पत्तिशिष्टसौहृदगुणावरुद्धे मृगीदृशां हृदये ॥
तदनुगुणादतिरिक्तो मानः कथमेति संमानम् ॥२०९॥

स्वाभाविकसौहृदव्याप्ते कामिनीनां हृदये रसानुकूलाकिञ्चिन्मानादधिको मानो न युक्तः। रसप्रातिकूल्यत्वादसाध्यो मानो रसाभास इत्युपगमात्। अथच गुणविशिष्टकर्मविधिस्थले उत्पन्नशिष्टो गुणो न निविशते। उत्पत्तिशिष्टगुणेनैव कर्मणो निराकाङ्क्षत्वात्। तेन (द्वितीयाध्यायस्य द्वितीयपादे) नवमे अधिकरणे "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र वाक्ये वाजिनद्रव्यकं कर्मान्तरमेव विधीयते। पूर्वकर्मण्यभिहितवाक्योपात्तद्रव्येणावरोधादिति सिद्धान्तः।
['सोमेन यजेत' इत्यत्र सोमविशेषः](१) ॥ २०९ ॥

(१) यथा यागस्याप्राप्तत्वेन सोमद्रव्यकयागान्तरस्य विधानं तथात्रापि इत्यर्थिकेयं पङ्क्तिः टिप्पणीरूपा मूले पतितेति भाति।

कस्याश्चिद्विरहावस्थां नायकाय काचिन्निवेदयति—

उद्यानमेव किंशुककोरकशार्दूलनखभीमम् ॥
सुभग ! तव विप्रयोगे जातं कान्तारवत्तस्याः ॥२१०॥

पलाशमुकुला एव सिंहनखा इत्युद्यानपक्षे । तत्सदृशा ये सिंहनखा इति कान्तारपक्षे । तेषामुपवनगतानां दुरालोकत्वेन नखसाम्यम् । यथा सिंहादिभीत्या वनं गन्तुं न शक्यते तथा किंशुकमुकुलभयेनोपवनमपीत्यर्थः ॥ २१० ॥

कश्चित्पथिकस्य प्रपापालिकायां रागमाह—

उद्यत्सत्त्वप्रगुणस्वेदनया पश्यतः प्रपापालीम् ॥
पानीयशालिकायितमपि तनुलतयाऽध्वनीनस्य॥२११॥

"प्रपा पानीयशालिका" इत्यमरः । क्यङन्ताद्भावे क्तः । सत्त्वं मानसविकारविशेषः । तत्कार्यविशेषः स्वेदः । "सत्त्वोत्कटे मनसि ये प्रभवन्ति भावास्ते सात्त्विका निगदिताः कविभिः पुराणैः" इत्युक्तेः । तनुलतायाः पानीयशालिकात्वे प्रपापाली तामपि पालयिष्यतीत्यर्थः । स्वविषयकानुरागाचिह्नस्वेददर्शनेन तस्या अपि पाथिकाविषयकानुरागोपपत्तेः ॥ २११ ॥

मृषैव नायकापराधं कलयन्तीं काश्चित्सखी प्राह—

उत्कलिकानां सहचरि ! सरसानां सहज एष सरसां च ॥
सरलमपि स्वान्तरगं कुटिलतयैव प्रकाशयन्तीति॥२१२॥

"विद्यादुत्कलिकाशब्दमुत्कण्ठावाचिवाचकम्" इति शाश्वतः । सरससरःशब्दोत्तरे व्यधिकरणे षष्ठ्यौ । यथा तरङ्गकौटिल्यरूपदोषाज्जले क्षिप्तं सरलमपि दण्डादि वक्रमेव प्रतिभाति । एवं सरसमनोगतः प्रियादिरपि स्वमात्रासक्तोऽपि अन्यानुरक्तत्वेन भासते । 'स्नेहः पापशङ्की' इतिन्यायात । तथाचाकस्मा-

देव नायकागमने मन्युस्त्यज्यतामित्यभिप्रायेण निरपराधेऽपि तस्मिंस्त्वयापराध आरोप्यते न त्विदानीं तस्यापराधलेशोऽपीति भावः ॥ २१२ ॥

काचिद्बद्धमाना तन्निर्वाहासमर्था च चित्तमुपालभते—

उत्सुकतामेषि कथं हतहृदय ! पुरागृहीतनिर्बन्ध ! ॥
प्रारब्धापरिनिष्ठितमुक्तार्थां माकृथा बहास्यां माम् २१३

उत्सुकतां=नायकसङ्गमवाञ्छाम् । हतेति प्रथममेव तथानालोचनान्निन्द्यता । अनारम्भे दोषाभावात्—प्रारब्धेति । तथापि तत्सिद्धौ तदभावात्—अपरिनिष्ठितेति । असमाप्तेत्यर्थः । तदुक्तम्— "अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् ॥
आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्" इति ॥ २१३ ॥

काचित्कृष्णपक्षमध्ये प्रातः प्रियसदनादायान्तीं नायिकामाह—

उषसि नभोमध्याश्रितमालि ! निभालय कलारमणम् ॥
प्रियसविधादपनेतुं युवतीः कामीयमर्द्धचन्द्रमिव ॥ २१४ ॥

"यस्याऽङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन पूर्ववत् ॥
सोऽर्द्धचन्द्र इति ज्ञेयः करः कर्मास्य वक्ष्यते ॥"

एतेन बालतरवः(?) शशिलेखाकच्छकलशवलयानां निवासनमायातम् । मध्यौपम्यं च पीनं च इत्यादि । निभालयेति परस्मैपदं "त्रपामपाकृत्य निभान्निभालय" (स० १२ श्लो० ५३) इति नैषधभावप्रदीपे प्रतिपादितम् ॥ २१४ ॥

काश्चिद्ग्रीष्मतप्त आह—

उल्लाघयति निदाघव्याघातेनेह माघवत्सुनन्तुः ॥
श्वेतरहिमहेतूनामनुपादेयत्वमादधती ॥ २१५ ॥

उल्लाघयतीति "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ( ८ ।

२ । ५८ ) इति निपातितात् 'तत्करोति' इति णिच् । "उल्लाघो निर्गतो गदात्" इत्यमरः । निदाघः तपस्तस्य व्याघातस्तत्कार्यदुःखोत्पत्तिप्रतिबन्धः तेन । उल्लाघयति=नीरुजं करोति । स्वभिन्नानां शैत्यहेतूनां चन्दनमृणालादीनाम् । अनुपादेयत्वं=शैत्यादिप्रवृत्तिविषयस्वभावम् । आदधती=कुर्वाणा । तत्संयोगादेव शैत्योत्पत्तेः । माघमासे पित्तपूराय शैत्यसिद्ध्या शैत्यहेतूनामनुपादेयत्वमनुभवसिद्धमिति भावः ॥ २१५ ॥

काश्चित्सहृदयः काव्यवासनाशून्यानिन्दामाह—

उपलानामिव तेषां प्रविशति न रसः कथञ्चिदप्यन्तः॥
हृदयविहीनाः कठिना रक्ता अपि येऽवभासन्ते॥२१६॥

हृदयहीनत्वमचेतनत्वात् । पक्षे हृदयपदं रसबोधजनकसंस्कारविशेषपरम् । तदुक्तम्—

"भावना चेन्न हेतुः स्यात्स स्यान्मीमांसकादिषु"

अत एव काठिन्यश्चमत्कारानुदयात् । पक्षे स्पष्टम् । रक्ताः=शृङ्गारिणो रक्तवर्णाश्च । लौकिकशृङ्गाराभिज्ञत्वेऽपि उक्तशक्तिविशेषविरहान्न तत्र रसोत्पत्तिः । अन्तः=मनसि अभ्यन्तरे च । रसः=शृङ्गारादिर्जलं च । रसस्यात्मस्वरूपत्वव्यवस्थापत्तेरानित्यतया तदभिव्यक्त्यभिप्रायेण प्रविशतीति । पक्षे स्पष्टम् । उक्तं च—

"सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ॥
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः" ॥
यद्वा क्षणिकस्नेहं नायिका निन्दति ॥ २१६ ॥

कृतापराधेऽपि नायके मानं मा कुथा इति वादिनीं कांचित्काप्याह—

**उपदेशमपि परेषां समाचरन्तो जना विपदि ॥**
**स्वयमाप्य तामवस्थां हृदयं रोद्धुं न पारयन्त्येव॥२१७॥**

उपदेशः=शिक्षा । तथाच भरतः—

"इदं कुरु गृहाणेदमुपदेश इति स्मृतः" ।

विपत् अन्यजननिष्ठा ग्राह्या । तां=यस्यामवस्थायां परमुपदिशन्तः स्थितास्तज्जातीयाम् । स्वयं तादृशदशामवाप्य हृदयं रोद्धुं दुःखाद्विमुखीकर्तुं नैव क्षमन्त इति भावः । एतेन तदवस्थापन्नस्य मनःसमाधानमेव दुष्करं न त्वन्योपदेशोऽपीति सूचितम् । तदाह—

"विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" ॥ २१७ ॥

गुणेन तद्वेदी अवशो वशीक्रियते इत्याह—

**उपनीय कमलपरिमलमनिलेन सलीलमलिनमामृशता**
**स्वागमनावधिभूतां दिशं प्रति प्रेर्यते स हठात्॥२१८॥**

(भ्रमरः) वायूपनीतकमलसौरभमाघ्राय वायुसमागमनापादानभूतां दिशमुद्दिश्य गच्छति । तस्यां कमलानुमानात् । अथच वायुनाभिहतं तृणादि यस्यां दिशि वायुर्गच्छति तदभिमुखमेव प्रयाति न तु यतो वायुरागच्छति तस्याम् । इह तु विपरीतम् । हठात्तदनभिमुखमेव प्रयाति । गन्धाघ्राणोत्तरमेव गमनव्यञ्जनम् । सलीलमिति मन्दत्वसूचनम् । तादृशेन वहनेन तृणादिकमपयं न भवतीति व्यतिरेकः । अवधिशब्दोऽपादानार्थः ॥ २१८ ॥

कश्चिद्वयस्यमाह—

(१)उत्तमयापि मया कृतविप्रियया मत्तकाशिन्या ॥
अयथाग्राहककीरव्यपदेशात्कुटिलिता दृष्टिः ॥ २१९ ॥

"जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्यात्तद्विप्रियमिति स्त्रियाः ॥"

इति भरतः । ममैतादृशकोपकरणे उत्तमत्वव्याघातप्रसङ्गाद्ध्याप्यमानमन्यथा गृह्णन्तं शुकशावकमुद्दिश्य मदभिप्रायेण दृष्टिर्वैकृत्यं विहितवतीत्यर्थः ॥ २१९ ॥

कश्चिद्विद्यावतामवश्यं द्रव्यलाभो न भवतीत्याह—

उदधिः सरस्वतीनां निधिरप्येकः समुद्रतामगमत् ॥
मैवं मंस्थाः स यतस्तास्वपि वैरस्यमारभते ॥ २२० ॥

सरस्वतीनां=नदीनां वाणीनां च । समुद्रतां=समुद्रजातिविशेषं मुद्रावत्त्वं च । वैरस्यम्=अत्युत्कटलवणरूपरसवत्त्वं तद्विषयकप्रीत्यभावं च । तथा च वित्तेन सरस्वतीसमुद्रत्वयोः सामानाधिकरण्यदर्शनाद्विद्याधनयोर्विरुद्धत्वव्याप्तौ व्यभिचारो न शङ्क्यः । तत्र वैरस्यारम्भेणैव समुद्रत्वयोगात् । सरस्वतीमात्रासङ्गप्रयुक्तधनलाभविरहात् । शुद्धविद्यायाश्च धनेन सह विरोध-

---

(१) का० रा० पु० पुस्तके इदं नास्ति । एतत्स्थाने—

उलपस्य सौकुमार्यं सर्वजनानुभवसंसिद्धम् ।
पलमात्रवैपरीत्यात्स्यादुपलत्वं तु तस्यैव ॥

इति पद्यं वर्तते । कोमलचेतस्त्वात्तत्प्रतिकूलकरणे स नैष्ठुर्यमवलम्बिष्यते अतो मानं मा कुरु इति नायिकां प्रति सख्या उक्तिः । उलपः तृणविशेषः प्रतानवती लता वा । पलमात्रवैपरीत्यात्=उलपशब्दः पकारलकारयोरेव वैपरीत्यात् उपलो जायते । पक्षेच क्षणमात्रप्रातिकूल्यात्प्रस्तरवत्कठोरत्वं भवतीत्यर्थः ।

केन चिदल्पमेवोपकृत्य दत्ताधिककदर्थनः कोऽपीदमाह—

**उल्कामुखप्रकाशात्क्षणमध्वदृशोऽपि बाढमन्धाः स्मः ॥**
**उपकारानिर्वहणे वरमस्मादनुपकृतिरेव ॥ २२३ ॥**

उल्का वह्निज्वाला मुखे यस्य स शृगालविशेषः । अन्धकारे किञ्चित्प्रकाशप्राप्तौ तन्नाशोत्तरं तत्प्राप्तिपूर्ववदेव चाक्षुषं न भवति । अतः क्षणं तदालोकेन मार्गं दृष्ट्वापि पुनस्तदभावे चाक्षुषानुत्पत्त्याऽन्धा एव जाताः स्मः । उपकारोऽत्र स्वपूर्वकालीनदुःखाधिकदुःखजनकव्यतिरेकाप्रतियोगी ग्राह्यः । अतो नानुपपत्तिरिति ध्येयम् ॥ २२३ ॥

कश्चिन्नायकाय विरहिण्यवस्थां निवेदयति—

**उद्ग्रीविकाविधानात्पदाग्रमात्रेण भूतलं स्पृशती ॥**
**त्वदवेक्षणाय सुभगाभ्यस्यति सा व्रतविशेषमिव २२४**

उन्नता ग्रीवा यस्यां क्रियायां सा उद्ग्रीविका । दूरस्थपदार्थदर्शनेच्छायां तथाकरणात् । तदर्थं पदाग्रेण भूमिस्पर्शः । तेनापि किञ्चिदौन्नत्योदयात् । अत्र भरतः—

"उत्क्षिप्तश्च भवेत्पार्ष्णिः सञ्चरोऽत्र तलेन च ॥
अङ्गुल्यश्चान्विताः सर्वाः पादाग्रं तत्र सञ्चरेत् ।"

व्रतविशेषं=पादाग्रेण भुवं स्पृष्ट्वा स्थितिरूपं तपोभेदमिवाभ्यस्यति । त्वद्दर्शनवाञ्छयैवम्प्रायाणि कदर्थनान्यनुभवतीत्यर्थः ॥ २२४ ॥

कश्चिद्यौवनावस्थां प्रशंसति—

**उपनिषदन्तररसिकं यौवनमद्वैतमात्मभुवः ॥**
**बत मत्तकाशिनीनां दृश्यपि दृश्यत्वमातनुते ॥२२५॥**

इत्युकारव्रज्या ।

उपनिषद्=ब्रह्मप्रतिपादकं वेदवाक्यम्। तदपेक्षयाऽन्यस्यां कर्मोपनिषदि रसिकमित्यर्थः। तत्रात्मन एवाद्वैतम्। अत्र तु कामस्य। आत्मजन्यस्य प्रपञ्चस्य तस्मिन्नभेदारोपः। दृक् ज्ञानं तत्र दृश्यत्वं तद्विषयत्वं नास्ति। यौवने तु दृशि दृष्टौ दृश्यत्वं रमणीयत्वम्। विषयत्वं दृश्यत्वमिति वेदान्तिनः ॥ २२५ ॥

काचिन्मृषैवापराधकल्पनयानुरक्तिसंशयितां प्राह—

**ऊहो विकृतावपि न प्रकृत्यसमवायिनोऽर्थस्य ॥**
**नाशदशायामपि न स्पृशति कृशानुः शिशिरभावम् २२६**

स्वभावविरुद्धस्यानर्थकर्मकरत्वस्य अनुमानं न कार्यम् विनश्यदवस्थायामपि वन्हौ शैत्याभावात्। एवं त्वन्मात्रानुरक्ते तस्मिन्नपि तद्विप्रियं न कल्प्यम्। अथ च प्रकृतिभूते यागादौ असमवायिनोऽर्थस्य प्रकृत्यसमवेतार्थप्रकाशकशब्दस्येति यावत्। विकृतावूहो न भवतीत्यर्थः। प्राकृतप्रयोगस्यान्यथाभाव ऊहः ॥ २२६ ॥

कश्चित्स्वापकृष्टानामादरदर्शनाादिदमाह—

**ऊनस्याधिकभावो भवति गुणस्यापकर्षहेतुत्वम् ॥**
**दृश्याददृश्यदर्शनमिति क्रिया भवति विपरीता ॥२२७॥**

गुणहीनस्योत्कर्षः गुणवतोऽपकर्षतारतम्यं विज्ञाय तद्विपरीतापादान इति लोकक्रिया विपरीता दृश्यते इत्यर्थः। अथच गणितप्रसिद्धायां विपरीतक्रियायाम् ऋणस्थले भाजनं गुणनस्थले हानिः क्रियते दृश्याददृश्यराशिरीत्यानयनार्थ इति ध्वनिः।

"छेदं गुणं गुणं छेदं वर्गं मूलं पदं कृतिम्।
ऋणं स्वं स्वमृणं कुर्यात् दृश्ये राशिप्रसिद्धये ॥" इति लीलावत्यामुक्तम् ॥ २२७ ॥

कस्य चिदर्थे दूती नायिकामाह—

**ऊरुस्तम्भद्वितये रम्भासौभाग्यभोगिनि भवत्याः ॥**
**कुसुमेषुतापदुःस्थः शेतां वैश्रवणनन्दनः स सखि! ॥२२८॥**

भोगिनीत्यन्तं रम्भापदस्य कदलीपरत्वमादाय सप्तम्यन्तं द्वितयविशेषणम् । अप्सरोविशेषार्थत्वमादाय नायिकासम्बुद्धिः । सौभाग्यः सादृश्येनोभयत्र तुल्यः । "रम्भा कदल्यप्सरसोः" इति विश्वः । वै इति निपातः । श्रवणमात्रेण नन्दनः प्रमोद-जनकः । यस्य गुणाकर्णनेनैव एवमानन्दो जातस्तत्सङ्गमेन कियान्न स्यात् । कदल्याः शीतस्वभावतया तापार्त्तस्य तत्र शयनौचित्यात् । अथच "किन्नरेशो वैश्रवणः" इत्यमरः । कुबेरस्य नन्दनो नलकूबरः । सोऽपि रम्भादयित इति तदभि-न्नयोर्युवयोरपि सङ्गमो युक्त इति भावः ॥ २२८ ॥

काचित्परवशां दयितदर्शनोत्कण्ठितां नायिकां काप्याह—

**ऊर्ध्वीकृत्य ग्रीवां चकोरि! किं वा दिदृक्षसे चन्द्रम् ॥**
**अयथास्थानस्थापितपञ्जररुद्धं न वेत्सि स्वम् ॥ २२९ ॥**

कन्धरोन्नमनमात्रसाध्यचन्द्रचक्षुःसंयोगाभिप्रायेण किमेवं करोषि चन्द्रनयनयोराक्षेपे मुख्यस्याप्यभावेन ततोऽपि दर्शना-सम्भवादिति भावः । चकोरीति दर्शनावश्यकत्वम् । चन्द्र-मिति दर्शनयोग्यत्वं सूचितम् । तद्दर्शनार्हदेशगमनवारणाय रुद्धान्तम् । पञ्जररोधेऽपि छिद्रादिना तत्सम्भवात् स्थापि तान्तं पञ्जरविशेषणम् । स्थानस्याऽयथात्वं स्ववृत्तेश्चन्द्र-दर्शनाननुकूलत्वम् । तथाच किं वृथा प्रयासेनेत्यर्थः ॥२२९॥

अहङ्कारेण गुणहानिर्भवतीति कश्चिद्दर्शयति—

**ऊष्मायमाणमधिकप्रकाशमप्यपजहाति दाक्षिण्यम् ॥**
**अस्मिन्नर्थे भगवान्निदर्शनं व्योममणिरेव ॥ २३० ॥**

ऊष्मा=गर्वः सन्तापश्च। "बाष्पोष्मभ्यामुद्वमने"(३।१।१६) इति क्यङ्। प्रकाशः=आलोको ज्ञानं च। दाक्षिण्यं=परप्रियत्वं दक्षिणदिग्वर्तित्वं च। अतिप्रकाशस्यापि अधिकोष्मवतो भास्करस्य ग्रीष्मे दाक्षिण्याभावात्। तदानीं तस्योत्तरदिग्गतत्वेन दाक्षिणगतत्वाभावादित्यर्थः ॥ २३० ॥

क्षुद्रेषु प्रणयो न कार्य्य इति कश्चित्सहृदयमुपदिशति—

**ऊषर इव खललोके सञ्जातसमन्वयोऽपि रसः ॥**
**नैव तदनन्तरेषु क्षणेषु बध्नाति सम्बन्धम् ॥ २३१ ॥**

"स्यादूषः क्षारमृत्तिका"इत्यमरः। "ऊषसुषि"(५।२।१०७) इत्यादिना मत्वर्थप्रत्ययः। रसः=प्रीतिर्जलं च। अत्र रसपदेन खलविषयकान्यनिष्ठप्रीत्युपादानम्। सञ्जातः प्रीतिविषयत्वाभ्युपगमानुकूलाचरणरूपः समन्वयो यस्मात् तादृशोऽपि तदुत्तरक्षणेषु सम्बन्धं न ददाति। क्षणमेव खलेन तदाचरणात्। खलनिष्ठप्रीत्युपादाने तु खलहृदये सञ्जातसमन्वयोऽपि स्वोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षणेषु सम्बन्धं न वहति। क्षणमात्रमेव खलहृदि तदुत्पत्तिरिति व्याख्येयम् ॥२३१ ॥

कश्चिज्जनान्तरसन्निधावेव मया मानिन्यनुनीतेति सखायमाह—

**ऊरीकृतमनुनयनं प्रियया थ गुणस्पृशा वृहन्निकायाः ॥**
**स्वादिमतः पूर्वास्मिन्मृद्वीकामलकयोर्धूत शिरसा(१)२३२**

इत्यूकारव्रज्या ।

---

(१) का. रा.पु. पुस्तके एतत्स्थाने—
ऊरीकृतमपि कार्यं विजहत्यहहाऽकृतव्यूहाः।
भवति विनिवर्तनीयं कृतमपि कार्यं हि पाणिनीयानाम् ॥
इति पद्यं वर्तते ।

"द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा" इत्यमरः। धृते इत्यत्र मयेति शेषः। द्राक्षामलकयोर्मध्ये पूर्वस्मिन् द्राक्षाफले। स्वादिमतः स्वादुत्वात्। शिरसि तदुत्कर्षकथनार्थमित्यर्थः। स्वादिमत्ययविशिष्टस्य पूर्वस्मिन् प्रकृतिभागे पदसंज्ञे। (१)मृद्वीकासमभिव्याहारात्प्रत्ययस्य हलादित्वलाभः। नायकेन तत्पादाभिप्रायेण स्वशिरसि तन्निधानात्प्रणामो व्यङ्ग्यः। तथा उत्तरीयगुणस्पर्शेन यथा गुणो मानहीनस्तथाहमिति सूचितम् ॥ २३२ ॥

कश्चिच्चन्द्रं वर्णयति—

**ऋक्षाणामग्रण्या परितो विष्णोः पदं भ्रमता ॥**
**जैवातृकजाम्बवता स्मरसुग्रीवः सहायसम्पन्नः ॥२३३॥**

ऋक्षाणां=नक्षत्राणां भल्लूकानां च। विष्णोः पदम्=आकाशं त्रिविक्रमचरणं च। तथा जैवातृकरूपेण जाम्बवता स्मरसुग्रीवः सहायवान् जात इत्यर्थः। उक्तं च तेन रामायणे—

"त्रैविक्रमे पुरास्माभिः कृतो विष्णुः प्रदक्षिणम्।
त्रिःसप्तकृत्वः पृथिवी कृता चापि प्रदक्षिणम् ॥"

जाम्बवतः सुग्रीवमन्त्रित्वात्सहायत्वम्। चन्द्रस्य शृङ्गारे उद्दीपनविभावयोग्यत्वमिति। (उक्तं च साहित्यदर्पणे)

"चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्।" (प० ३ का० १८५) ॥ २३३ ॥

सखी नायिकां शिक्षयति—

**ऋतुपर्ण इव सपत्नीजनस्तवैषोऽक्षहृदयज्ञः ॥**
**इह वैरसेनिवत्त्वं वस स्वरूपं पिधायैव ॥ २३४ ॥**

---

(१) हलादिप्रत्यये परतः पूर्वस्य "स्वादिष्वसर्वनामस्थाने" (१।४।१७) इत्यनेन पदसंज्ञाविधानात्।

ऋतुपर्णोऽयोध्याधिराजविशेषः । अक्षं=चक्षुरादिबहिरिन्द्रियं हृदयं च जानीते । तद्वृत्तिज्ञानात् । राजापि द्यूतहृदयविद्यावेदीति प्रसिद्धः । वैरसेनिर्नलः । स्वरूपं=प्रियानुरागजन्यमुल्लासविशेषम् । पिधाय=आच्छाद्यैव । वस=चिन्ताम्लानेव तिष्ठ । नतु दयितसंमानं प्राप्य उद्धतत्वं कुर्याः । नलोऽपि बाहुकसंज्ञो भूत्वा ऋतुपर्णसमीपे तस्थाविति भारतम् । यद्वा कृतान्यपुरुषपरिचर्यां प्रति सख्युक्तिः । यथैता न विदन्ति तथा विधेयमन्यथा प्रकाशप्रसङ्गादित्यर्थः ॥ २३४ ॥

कश्चिद्वसन्तस्योद्दीपकत्वं सूचयन्नाह—

**ऋतुराजसखरथोऽयं मलयमरुद्वर्ण्यते विज्ञैः ॥**
**तत्र मधुव्रतराजी विराजते वैजयन्तीव ॥ २३५ ॥**

ऋतुराजः=वसन्तः । सर्वर्तुप्रथमत्वात् । "मुखं वा एतदृतूनां यद्वसन्त" इति श्रुतेः । तस्य सखा मदनः । तथाच वामनपुराणम्—

"कन्दर्पश्च दुराधर्षश्चूताङ्कुरमहायुधः ।
समं सहचरेणैव वसन्तेनाशु सङ्गतः ॥" इति ।

"इत्युक्तः प्रययौ कामः सख्या स मधुनाश्रितः ।"

इति मत्स्यपुराणम् । कामरथो दक्षिणानिल इति कविसम्प्रदायः । उक्तं हि सौन्दर्यलहर्याम्—

"धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः ।"

"पताका वैजयन्ती स्यात्" इत्यमरः । उत्प्रेक्षया कामोद्दीपकत्ववस्तुव्यञ्जनम् ॥ २३५ ॥

कृत्रिमसद्व्यवहारे विश्वासो न कार्य इत्यभिप्रायेण कोऽप्याह—

**ऋच्छन्ति केऽपि सत्तामाकृत्या केऽप्युपाधिना लोके ॥**
**सद्व्यवहृतिमात्रात्स्वं मा सामान्येषु सद्धियं कार्षीः ॥ २३६ ॥**

केषांचित्स्वभावेनैव साधुत्वं केषांचित्तु व्याजेन। अतः सद्व्यवहारमात्रेण यत्र कुत्रापि साधुरेवायमिति निर्णयो न कर्तव्यः। किन्तु स्वाभाविकसाधुत्ववत्स्वेव। अथच केचित् द्रव्यगुणकर्मरूपाः पदार्थाः सद्व्यवहारविषयत्वं (आकृत्या) सत्तारूपजात्या लभन्ते। तत्र तस्याः स्वीकारात्। केचित् सामान्यादयोऽभावान्तास्तूपाधिना विद्यमानत्वरूपधर्मेण लभन्ते। अतो द्रव्यसामान्यादिसाधारणसद्व्यवहारेण सामान्यादिषु सत्ताजातिमत्ताबुद्धिर्न विधेया। तत्र सद्व्यवहारे निमित्तभेदस्योक्तत्वादिति भावः॥ २३६॥

काचित्प्रातः प्रियविश्लेषदूयमानेदमाह—

**ऋग्भिरिह प्रत्युषसि द्युतिभिर्भास्वानुदेति सखि!॥**
**अथ युवतीजनजीवनहवने होता कथं न स्यात्॥२३७॥**

ऋग्भिस्तद्रूपाभिर्द्युतिभिः। तथाच श्रुतिः—"ऋग्भिः पूर्वाण्हे दिवि देव ईयते। यजुर्भिस्तिष्ठति मध्ये अन्हः। सामवेदेनास्तसमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः"। ऋग्विद एव होतृत्वादस्य च तथात्वात्स्त्रीजीवनहोमे होतृत्वं युक्तमेवेत्यर्थः। "ऋग्वेदेन हौत्रमकुर्वन्यजुर्वेदेनाध्वर्यवं सामवेदेनौद्गात्रम्।" इति श्रुतेः॥ २३७॥

काचिदेकापराधसहनानन्तरमप्यपराधान्तरकारिणं प्रियं सोत्प्रासमाह—

**ऋजुहृदयया मया तव मृष्यन्त्या तावदपराधान्॥**
**दृष्टान्तः स्वयमेव स्वहस्तितस्तत्सजातीये॥ २३८॥**

इदानीमपराधक्षमायामग्रेऽप्येवं करिष्यतीत्यनालोचनादृजुहृदयत्वम्। यथा प्राक्तनानपराधानसहत तथा अग्रिमानपि

सहिष्यत इत्यनुमानेनाग्रेऽप्येवं विधेयमित्यर्थः। एवं चैकापराधस्य कथंचित्सहनेऽप्यतः परं न सहिष्यतीत्युचितम् । धीराधीरेयं नायिका । तथा च साहित्यदर्पणे—

"धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्" ( प० ३ का० ६३ ) ॥ २३८ ॥

कश्चिच्चिरपथिकमुपालभते—

**ऋणमिव यस्त्वयि सुदृशा समुद्रचारिणि समर्पितःप्रणयः।**
**प्रतिदिवसवर्धमानः कियतीमध्वग! स कोटिमारोहेत् २९**

समुद्रं सावधिकं तद्विपरीतमसमुद्रं चिरकालं चरति परदेशं गच्छतीति तथा । पक्षे समुद्रे वाणिज्यार्थं चरति । वर्द्धमानः= स्वरूपेण । ऋणपक्षे स्ववृद्धिद्वारा । कोटिं=( कक्षां पक्षे सङ्ख्याविशेषम् । ) ( समुद्रगामिवणिक्कर्तृक ऋणेऽधिक ) वृद्धिग्रहस्मरणात् । तथाच योगीश्वरः—

(१)"आरण्यकास्तु दशकं सामुद्रा विंशकं शतम् ।" ( याज्ञ० स्मृ० अ० २ श्लोक० ३८ )

सुदृशेति त्वय्यनुरूप एव रागविधानात्त्वयापि तथैव विधेयमिति सूचितम् ॥ २३९ ॥

प्रत्यक्षेऽपि सम्भोगचिन्हे नायिकान्तरसङ्गमपलपन्तं नायकं काप्याह—

**ऋतवादिता यदि तव स्तनकुङ्कुमचिह्नसत्त्वेऽपि ॥**
**ग्रावप्लवनविबोधकमृषिवाक्यं त्वन्यथा नयन्ति बुधाः २४०**

इति ऋकारव्रज्या ।

---

(१) मुद्रित याज्ञवल्क्यस्मृतिपुस्तकेषु कान्तारगास्तु इति पाठः ।

मत्सम्भोगविरहविशिष्टनायिकालिङ्गनलग्नकुङ्कुमादियोगस्य नायिकान्तरसम्भोगं विनानुपपत्त्या तस्य सिद्धावपि सत्यमहमन्यत्र नासक्त इति वदन् यदि यथार्थवादी तदा त्वमेव न त्वन्यः। "ग्रावाणः प्लवन्त" इति प्रत्यक्षविरुद्धं वेदवाक्यं तु पण्डिता नहि बाधितमर्थमागमोऽपि बोधयतीत्यभिप्रायेण गौणत्वादिनैव व्याचक्षते। तथाच वेदवाक्यस्यापि प्रमाणान्तरविरुद्धस्य 'विरोधे गुणवादः स्यात्' इति न्यायेनान्यथाकरणम्। प्रमाणविरुद्धं त्वद्वाक्यं कथं श्रद्धेयमित्यर्थः॥ २४०॥

काचित्प्रेमदार्ढ्यार्थं नायकं सूचयन्ती सखीमाह—

**एतावानेव महानालि! प्रणयस्य परिणामः॥**
**यावानेवारब्धो यस्तावत एव निर्वाहः॥ २४१॥**

अल्पो महान्वा यावानेव यत्र स्नेह उपक्रान्तः तावत एव निर्वाहः। न्यूनत्वानापादनमेव प्रशस्तम्। नतु पूर्वं महान्तं स्नेहमुद्भाव्य पुनस्तदपकर्षविधानमित्यर्थः। एतेन मनस्विनीनां परिभवोऽतिवैमनस्यमावहतीति सूचितम्॥ २४१॥

काचिदनुनयेनापि मानमत्यजन्तीमुपदिशति—

**एकान्तमानयोगात्प्रत्यादिश मा प्रियं प्रणतम्॥**
**कलयसि किं न तथाविधमानस्याजनकतां जगति २४२**

एकान्तः=भवत्यैव कल्पितहेतुकत्वेन सार्वदिकः। "प्रत्यादेशो निराकृतिः" इत्यमरः। प्रियमिति तत्कृतापराधाभावसूचनम्। तथाच भरतः—

"यो विप्रियं न कुरुते नचायुक्तं प्रभाषते।
तथार्जवसमाचारः प्रिय इत्यभिधीयते॥"

एवं मानस्योत्पत्तिमेवानुचितामभिधाय त्यागावश्यकत्वमूच-

नाय-प्रणतमिति। तथाविधस्योक्तलक्षणस्य मानस्य। न विद्यते जनस्य दयितस्य कं सुखं यस्मात्तद्भावम् । अथच तथाविधपदेन एकान्तमानोपस्थापनात् एकोऽन्यापेक्षोत्कर्षरहितोऽन्तोऽपकर्षो यस्य तादृशस्य मानस्य परिमाणस्य अजनकत्वं कुत्राप्यहेतुत्वं किं न जानासि। परमाणुपरिमाणस्य कुत्रापि जनकत्वानङ्गीकारात्। "कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः" (प्रशस्तपादभा०) इति वैशेषिकवचनादिति भावः॥ २४२॥

कश्चिन्मानपरित्यागार्हतां सूचयन्नाह—

एजन्ति चन्दनाचलमरुताभिहता बकुलवीथ्यः॥
भवदासवगण्डूषास्वादनवाञ्छावशादिवोत्तरलाः॥२४३॥

"मलयश्चन्दनाचलः"। भवत्या आसव इत्यत्र "सर्वनाम्नो वृत्तिमात्रे" इति भाष्यवचनात्पुंवद्भावः। गण्डूषाशब्दस्त्रीलिङ्गस्तावत्प्रसिद्ध एव। पुंस्त्वे च आस्वादनेति छेदः। "गण्डूषो मुखपूर्तिनी" इति रुद्रः। दोहदत्वेन तदिच्छा बोध्या। तदुक्तं वृक्षायुर्वेदे ....॥ २४३॥

अतितीक्ष्णस्वभावामपि नायिकां कस्यचिद्गुणेन वशीकृतामालोक्य काप्याह—

एणनयनेयमासीदग्निशिखोपमतया ख्याता॥
अस्य विदग्धमणेः पुनरन्वयतः शिशिरशीतला जाता२४४

"काश्मीरजन्माग्निशिखम्" इत्यमरः। एतेनोत्तमत्वमुक्तम्। तदुक्तं कल्पतरौ भविष्ये—

"फलिनीरोचनाहेमकुङ्कुमत्विष एव च।
वर्णाः प्रशस्ता नारीणां यश्च दूर्वाङ्कुरोपमः॥"

अथच तीक्ष्णतया वह्निशिखासादृश्यम्। 'विदग्धाश्चतुःषष्टि-

कलाभिज्ञा' इति जगद्धरः। तेषां श्रेष्ठस्य। अथच दग्धं दाहः भावक्तप्रत्ययान्तत्वात्। तद्विरोधिनो दाहप्रतिबन्धकमणिविशेषस्य। शिशिरशीतला=मृदुस्वभावा दाहशक्तिहीना चेत्यर्थः॥२४४॥

काचिन्नायकस्य स्वमात्रानुरक्तत्वविवित्सया एकमात्राश्रितानां प्रतिष्ठां दर्शयति—

**एकत्र वर्तमाना नियमाद्गुणकर्मभेदभाजोऽपि ॥**
**अणुवृत्तयोऽप्यभिहिताः सध्रीचि! विशेषपदभाजः २४५**

सध्रीचि हे सहचरि!। नियमादिति पूर्वान्वितम्। गुणस्य विद्यादेः कर्मणो भागधेयस्य भेदो विरहः। अणुरल्पा वृत्तिर्जीवनोपायो येषां तादृशा अप्येकमात्राश्रिततया विशिष्टा एव गण्यन्ते। सर्वत्र भ्रमणेऽनादरापत्तेः। अथवैकस्मिन्नेव द्रव्ये वर्तमाना गुणकर्मभ्यो रूपाद्याकुञ्चनादिभ्यो भिन्नाः परमाणुवृत्तयो विशेषा इत्युच्यन्ते। ते हि न जात्यादिवद्बहुषु वर्तन्ते। किंतु तत्तत्परमाणुष्वेवेत्यर्थः॥ २४५॥

काचिद्विरहिणी वर्षासु विद्युदुद्योतेन तप्यमाना सखीमाह—

**एधितवानिह वेधा मेधावी धूमयोनिमपि ॥**
**काष्ठास्वपां ककुभ इति प्रतीत्य मन्दां कृते तडिद्दहेः॥२४६॥**

एधितवान्=वर्द्धितवान्। अथच काष्ठीकृतवान्। एधधातोः, "तत्करोति" इतिण्यान्तादेधशब्दात् निष्ठा। धूमयोनिं=मेघं वह्निं च। अपिशब्दो वह्निमेघयोस्तादात्म्याभावरूपविरोधार्थः। काष्ठास्वपामिति काष्ठकाष्ठाशब्दयोः श्लेषः। ककुभ इति दिगर्थे बहुवचनान्तं वृक्षविशेषार्थे एकवचनान्तम्। मन्दाम् अल्पाम्। विपदुचितवृत्तिसामान्यस्य विशेषेणोपसंहारात्। "पुरोडाशं चतुर्द्धा कृत्वा" इत्यस्य "आग्नेयं चरुं करोति" इत्येकवाक्यत्वात्पुरोडाशपदस्याग्नेयपरत्ववत्। तथाच तडिद्रूपाग्नेर्वर्षासु विधित्सितस्यैक-

जातीयकाष्ठमात्राश्रितत्वे तादृशप्राचुर्यविरहाद्वृक्षान्तरस्यापि तदाश्रयत्वव्याप्त्यर्थं काष्ठाभेदः कृत इति अभेदाध्यवसायेन वाक्यार्थसिद्धिः । विद्युतां तदाश्रयाश्रितत्वात् । एतेन दिशामाकाशस्य च मेघतडिदुभयव्याप्तत्वं वर्णितम् ॥ २४६ ॥

काचिन्नदीतीरे कृतसङ्केता कञ्चिदिदमाह—

**एष सारिन्मात्रजलो ग्राम इति प्रावृषि त्यज विशङ्काम् ।**
**धार्मिक ! कूपवरोऽयं सन्निहितस्तावदत्रास्ते ॥ २४७ ॥**

**इत्यैकारव्रज्या ।**

"सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
न स्नानादीनि कर्माणि तत्र कुर्वीत मानवः ॥"

इति अत्रिवचनात् आप्लवनं ग्रामे जलान्तराभावात्कथं विधेयमिति शङ्कां मा कार्षीः । अन्यतोऽत्र सन्निहितः कूपस्तिष्ठति । तत्र वृद्ध्यनुकूलवार्षिकजलयोगाभावेन तत्प्रयुक्तदोषाभावात् । तत्र च नित्यक्रियादिकं कुर्याः । तथाच—

"अभावे कूपवापीनामनपायिपयोभृताम् ।
रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति ॥"

इति व्याघ्रपादवचनाज्जलान्तरालाभे नद्यामेव कर्म कुर्यादिति श्रवणेन तत्र मागा इति भावः । कूपस्य दूरत्वे नद्युद्धृतपयसि रजोदोषाभावात्तेनैव कर्म स्यादत आह—सन्निहित इति । उत्पथेन निषेधानादरणात्—धार्मिकेति । जलोद्धरणसामग्रीविरहे नद्यामेव गमनप्रसङ्गात्—वर इति तद्वृत्त्वाभिप्रायकः॥२४७॥

काचिज्जनान्तरसन्निधावभिसाराय त्वरस्वेति नायिकां ज्ञापयितुमिदमाह—

**ऐलाविलशैलविलसत्करनिकरैरेव वर्मिताङ्गीनाम् ।**
**सिद्धाभिसारिकाणामभिसारो नित्यमेकजातीयः॥२४८॥**

सिद्धाः=देवयोनिविशेषाः । इदं चान्येषामुलक्षणम् । ऐलविलस्य कुबेरस्य शैलः कैलासः । एतेन स्फटिकमयत्वमूचनमुक्तम् । "सन्नद्धो वर्मितः सज्ज" इत्यमरः । एतेन सर्वत आत्ववरणव्यञ्जनम् । नित्यं=कृष्णपक्षरात्रिष्वपि । एकजातीयः=शुक्लपक्षाभिसारसमान एव । तत्र सर्वदा रात्रौ प्रकाशसत्त्वेन कृष्णाभिसारिकावेषस्याननुष्ठानात् । नित्यपदेन त्वयाऽप्यन्यानुरोधेन न त्याज्यो नायकवैमनस्यप्रसङ्गादिति सूच्यते ॥२४८॥

काचित्स्वजनादेव प्राप्ततिरस्कारेदमाह—

**ऐरावतमन्दारौ दुर्वासाश्चेति सहभुवो लक्ष्म्याः ॥**
**एतेषां व्यापारात्सा निकृतिं प्राप विधिशक्त्या ॥२४९॥**

त्रयाणां समुद्रोत्पन्नत्वात्स्पष्टं सहजत्वम् । दुर्वाससस्तु अत्रिपुत्रत्वेन चन्द्रस्य तथात्वाच्चन्द्रस्य च लक्ष्मीसोदरत्वात्तदिति द्रष्टव्यम् । मन्दारः कल्पवृक्षपरः । श्रीपरिभवहेतुत्वं तस्य परम्परया व्याख्येयम् । मन्दारमालायामैरावतेन स्वकुम्भान्निरस्तायां दुर्वाससा लक्ष्म्यास्त्रिलोकीतो निर्वासनात् । त्रयाणामपि वैलक्षण्यात् सोदरत्वाद्विधिबलेन "आपदामभियान्तीतां हितोऽप्यायाति हेतुताम्" इतिन्यायात्तदभिभवो जात इति भावः॥२४९

कश्चिद्विपरीतरतं प्रशंसति—

**ऐल इवायं निधुवनभेदो नारीयमाणपुरुषभवः ॥**
**अतिमात्रं रमणीयो न कस्य वा मानसं हरति ॥२५०॥**

अत्र कामशास्त्रम्—

"हस्तमाधुवति हन्ति नो ददात्युज्झितुं झटिति लङ्घयेदपि ॥
स्वेच्छया श्रमिणि वल्लभेऽथवा योषिदाचरति पूरुषायितम् ॥
( रति० प० १० श्लो० ४६ )

स्त्रियाः पुरुषायितत्वे पुरुषस्य नायिकायितत्वमप्यर्थतो भवतीति नारीयमाणेति पक्षान्तरसाम्यावाप्त्यर्थमुक्तम्। अत एव "स्त्रीरूपमुपगतस्य नरस्य किं गतम्" इति विपरीतरतप्रस्तावे कामशास्त्रम्। पुरूरवा हि स्त्रीरूपात्सुद्युम्नादुत्पन्न इति पौराणिकाः। रमणीयत्वं सुखविशेषाधायकत्वं रूपातिशयवत्त्वं च। "व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्।" इत्यमरः॥ २५०॥

कश्चित्प्रियासङ्गमोत्सुको नायिका वा प्रियसङ्गमोत्सुका इदमाह —

ऐदम्पर्यं पाराशर्यस्यापि प्रियान्वये भवति॥
हेयत्वावचनादित्याह यतः प्रियतमादेशात्॥ २५१॥

"व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः" इति कोषः। इदमिति बुद्धिस्थवस्तु परं विवक्षितं यस्य स इदम्परः तस्य भाव ऐदम्पर्यं तात्पर्यमिति यावत्। "इदं त्वैदम्पर्यं यदुत नृपतेर्नर्मसचिवः सुतादानान्मित्रं भवतु सचिवो नन्दिरजनि"(१) इति मालतीमाधवम्। (अं० २ श्लो० ७) हेयत्वस्य अवचनात् अपि त्ववश्योपादेयत्वस्यैव कथनात्प्रियतमस्येत्येव सूत्रार्थ इति भावः। नायकोक्तिपक्षे प्रियपदे प्रियतमपदे च स्त्रीलिङ्गान्तच्छेदः। एवं च "हेयत्वावचनाच्च" (अ० १ पा० १ अ० ५ सू० ८) इति सूत्रमेवंप्रकारेण श्लेषेण योजितम्। तदर्थस्तु यदि प्रकृतिरेव तत्राभिमता स्यात्तदा पूर्वं तस्या एवात्मत्वमुद्दिश्य पुनस्तां निषिध्यान्यमात्मानं ग्राहयेत् स्थूलारुन्धतीन्यायात्। न तु तथोक्तमत आत्मपरमेव तदिति॥ २५१॥

(१) भवति स हि मे नन्दन इति। इति मुद्रितमालतीमाधवे पाठः।

अत्यन्तानुरक्ते नायके तथैवानुरक्तां काश्चित्सखी प्राह—

**ऐक्यमितरेतरप्रतियोगिकमासेदुषोर्भवतोः ॥**

**सहचरि! विपर्ययेण त्वां तं च व्यवहरन्ति जनाः २५२(१)**

अविच्छिन्नभावनावशेन त्वद्रूपतामापन्ने तस्मिन् त्वमिति व्यवहारः। तथैव तद्रूपतामापन्नायां त्वयि तद्व्यवहारः। नतु पूर्वकालीनतादृशव्यवहारविषयविशेष इति भावः। तदेतत् विपर्ययेणेत्युक्तम्। भवतोरिति निर्द्धारणे षष्ठी सप्तमी वा॥२५२॥

इत्यैकारव्रज्या।

काचिद्विरहिणी चन्द्रिकातप्यमानदेहा सखीमाह—

**ओषधिनाथतया किं प्रत्येषि ज्वरहरस्त्वमस्येन्दोः ॥**

**प्रत्यक्षेऽप्युष्णत्वे शैत्यं ह्यनुमीयते नाग्नेः ॥ २५३ ॥**

एतत्करसन्तापस्यानुभवसिद्धतया ओषधिपतित्वहेतुकं तापनाशकत्वं चन्द्रमसि नानुमातुं युक्तम्। बाधितत्वात्। वन्हौ शैत्यवदिति भावः। विरहे एवं वर्णनं कविसम्प्रदायसिद्धम्। तथाच कविकल्पलतायाम्—

"विरहे श्वासपाण्डुत्वम्लानिचिन्ताकृशाङ्गताः।

अब्जशय्या निशादैर्घ्यं जागरः शिशिरोष्णता" इति ॥२५३॥

काचिद्गृहपतेर्दुर्गतत्वसूचनेन तद्भार्यायाः सुखसाध्यतां सूचयन्ती दूतीदमाह—

**ओकसि जरत्तरतया मेघाम्बुनिषेधशक्तिपरिहीणे ॥**

**पिङ्गा घनाम्बुपृषता हृदयभिदारक्तवत्समीक्ष्यन्ते २५४**

अतिजीर्णगृहस्य सच्छिद्रोर्ध्वभागतया वृष्टिवारणसामर्थ्य-

---

(१) का० रा० पु० पुस्तके इदं पद्यं नास्ति।

विरहेण तदन्तः प्रविश्य निपतन्तो धूपमलिनावयवसंयोगेन रञ्जिता मेघोदबिन्दवः तदीयहृदयभेदशोणिततादात्म्येन वर्ण्यन्ते । हृदयभेदादेव तत्र जलप्रवेशात् । यद्वा जलवारणशक्त्यभावात्तच्चिन्तयैव हृदयभेद उत्प्रेक्ष्यते । एतेन यस्य यदसाधारणं कार्यं तदकरणे तस्य हृदयभेद एव लज्जया स्यादिति सूचितम् । यद्वा काचिद्गृहशून्यत्वख्यापनद्वाराभिसारस्थानतां सूचयति ॥ २५४ ॥

कस्याश्चित्सङ्केतस्थानभङ्गचिन्तामालक्ष्य काप्याह—

ओघो यथायथायं निकुञ्जमाक्रामति तटिन्याः ॥
केतकलतया सार्द्धं सितायतेऽस्यास्तथैव मुखलक्ष्मीः२५५

ओघः=प्रवाहः । आक्रामति=आवृणोति । तटिन्या इत्योघपदेनान्वितम् । केतकानां वर्षाधिक्येन समृद्ध्या, नायिकायाश्चिन्तया पाण्डुत्वोदयः । यथेत्यस्य द्विरुपादानेऽपि तदुपात्तानामेकेनैव तत्पदेन परामर्शान्न द्विरुक्तिः तथा नियमाभावादित्यन्यत्र स्पष्टम् । सहोक्त्यलङ्कारः ॥ २५५ ॥

शुक्लपक्षे विरहिण्यास्तापाधिक्यं काप्याह—

ओजायते यथेन्दुर्म्लायति तस्यास्तथा वदनम् ॥
न खलु विपक्षसमृद्धौ विपदापन्नेऽपि परितोषः(१) २५६

चन्द्रवृद्धौ सत्यां स्वविपक्षसमृद्ध्यनुशयेनेव मुखं म्लायतीति अर्थान्तरन्यासेन हेतूत्प्रेक्षा व्यज्यते । यद्यपि "ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया" इत्यत्र भाष्ये अप्सरोऽतिरिक्तपाठप्रत्याख्यानात् । "ओजायमानं योऽहिं जघान" इति तु छान्दसत्वादित्युक्तम् । तथापि "तस्य मतान्तरत्वमेवे-

(१) सन्तोषं यान्त्यपि विपत्स्थाः इति पाठान्तरम् ।

त्योजायते इत्यादयो भाषायामपि साधव एव" इति कैयटसम्मत्या "ओजायतामभ्युदयस्त्वदीय" इति नैषधभावप्रदीपे दर्शितमस्माभिः ॥ २५६ ॥

कश्चिदनुभूतप्रियाबिम्बाधरमाधुर्यस्तदानस्य सुधातिशयं साधयति—

**ओष्ठगतं दयितायाः न दधाति सुधापि माधुर्यम् ॥**
**कथमन्यथा सुधांशुःस रोहिणीचरणयावकाङ्कशिराः २५७**

अधरमाधुर्यस्य सुधातिशयित्वाभावे सुधांशोरेव रोहिणीचरणनिपतनमधरपानार्थमनुपपन्नं स्यादतोऽस्य तत आधिक्यसिद्धिः । तस्य सुधायोगसम्भवदर्शनाय सुधांशुरिति । तदसिद्धिवारणाय स इति स्मृत्यादिप्रसिद्ध्या तदावश्यकत्वपरम् । अनुमानम्–'सुधा नायिकाधरवृत्तिमाधुर्यापकृष्टमाधुर्या अधरपानेच्छानिवर्तकत्वाभावात्' इति बोध्यम् ॥ २५७ ॥

इत्योकारव्रज्या ।

नायकस्यार्थे दूती काञ्चिदिदमाह—

**और्वेणेव ज्वलता तवामुना विप्रलम्भेन ॥**
**परिशोषहेतुना सखि ! गुणसिन्धुर्निर्मितः स धृतशल्यः ॥**

ज्वलता=वर्द्धमानेन । पक्षे स्पष्टम् । परिशोषो=भोगकार्श्यं जलहानिश्च । सखीति स्वस्य विश्वास्यत्वसूचनम् । गुणानां सौन्दर्यवैदग्ध्यादीनां रत्नस्थानापन्नानां सिन्धुः समुद्रः । अत्र-रूपकेण यदि विप्रलम्भं न प्रतिकरिष्यसि तदा तस्य मरणमपि सम्भावितमिति वस्तु व्यज्यते ॥ २५८ ॥

कश्चिदधरस्य सुधासादृश्यं प्रशंसति—

**औरसमेव सुधायास्तवाधरं तन्वि ! जानीमः ॥**
**अत एव जीवननिधेर्जामित्र्यादराविशेषः ॥ २५९ ॥**

उरसो हृदयाद्भवमौरसं पुत्रं, लक्षणया सदृशं च। अत एव श्रुतिरपि "प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित" इति। जीवननिधेः=प्राणेश्वरस्य नायकस्य। सुधातनयेऽपि जलनिधेः समुद्रस्य दौहित्रत्वेन प्रेमविशेष उचित एवेति भावः। अत्राधरविषया रतिर्नायिकाविषयकत्वपर्यवसानाद्गमश्लेषाक्षमा समुद्रनिष्ठा तु भाव इति ध्येयम् ॥ २५९ ॥

कश्चित्स्वतोऽपि नायकयोः समधिकं मिथोऽनुरागं पश्यन्नाह—

**औपनिषदा वदन्ति स्वात्मानं प्रियतमं समस्तेभ्यः ॥**
**प्रेयान् रसोपनिषदि स्वस्मादपि केवलं विषयः ॥ २६० ॥**

उपनीयात्मतत्त्वं नितरां दुःखं सादयति नाशयतीति उपनिषत् वेदान्तवाक्यं तद्विदन्तीत्यौपनिषदाः। तथाच श्रुतिः- "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति" इति। उत्तरत्रोपनिषत्पदं लक्षणया रहस्यार्थकम्। स्वस्मात्=आत्मनोऽपि। विषयः=नायको नायिका वा।२६०।

इत्यौकारव्रज्या।

कश्चित्प्रियायास्तनुतां नाम पञ्चमीमवस्थां नायकाय निवेदयति—

**अङ्गं सुवर्णमस्याः सुभग ! भवद्विप्रलम्भदहनेन ॥**
**सन्ताप्यमानमधिकं कृशायते यत्तदाश्चर्यम् ॥ २६१ ॥**

सुवर्णं=शोभनवर्णं कनकाभिन्नं च। दहनः सन्तापकत्वात्। परमकाष्ठापन्नसुवर्णस्यात्यन्तानलसंयोगेऽप्यनुच्छेददर्शनात्। "अग्नौ सुवर्णमक्षीणम्" इत्युक्तेश्च। सुवर्णरूपस्याप्यङ्गस्य विरहवन्हिसन्तापात्कृशत्वं चित्रमिति भावः ॥ २६१ ॥

मानोन्नतां कांचिद्विलोक्य नायको दूरादेव तर्कयति—

**अङ्कुश इव वरवारणकुम्भस्थलमन्तरा भाति ॥**
**अलकोऽवनम्रमुख्यास्तस्या वक्षोरुहान्तरालभुवि २६२॥**

(?)आनशत्प्रथमं दौर्लभ्याभिप्रायकं तत्पदम् । कुञ्चिताग्रतया तस्याङ्कुशसाम्यम् । तेनोत्तमत्वं सूच्यते । तथाच भविष्ये—

"सूक्ष्माः कृष्णा मृदुस्निग्धाः कुञ्चिता ये शिरोरुहाः ।
भवन्ति श्रेयसे स्त्रीणामन्ये स्युः क्लेशशोकदाः ॥"

मुखनमनमत्र नायकापराधभवदुःखादवधेयम् । अलकपातोत्पत्त्या केशानां सङ्कोचादसंस्कारव्यञ्जनम् । अत्र बिम्बप्रतिबिम्बभावापन्नयोः कुचकुम्भयोर्विशेष्यतायाः अन्तरान्तरालपदाभ्यामेकार्थोक्तेर्वस्तुप्रतिवस्तुभाव इत्यालङ्कारिकसम्प्रदायः ॥ २६२ ॥

काश्चित्कटाक्षप्रशंसया स्वावस्थां निवेदयति—

**अङ्कुरयन्ति निरङ्कुशमनङ्गमुग्राक्षिदग्धमपि ॥**
**पीयूषाकूपारोत्कलिकाकारास्तव कटाक्षाः ॥ २६३ ॥**

उत्तरोत्तराधिक्यसूचनाय निरङ्कुशमिति । स्वत एव स्वस्य पीयूषापेक्षा न स्यादतः अनङ्गमिति । तद्धेतोरपि दर्शनाय—उग्रेत्यादि । जीवनशक्तिसम्भवदर्शनाय पीयूषेत्यादि ।

"यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् ॥
तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ।"(इति भरतोक्तेः)
पीयूषेत्यादिना श्वेतकटाक्षवर्णनम् ॥ २६३ ॥

कश्चित्कुचोन्नतिविस्मितः प्रियामाह—

**अम्बरसंवीतमपि प्रोच्छलितप्रान्तमनवकाशत्वात् ॥**
**वक्षोजमीक्षमाणास्तव तन्मानं कथं परिच्छिद्युः ॥२६४॥**

अम्बरं=वस्त्रमाकाशं च । बृहत्परिमाणतया तदन्तरवका-शाभावादुपान्तदेशस्य बहिर्गतत्ववर्णनम् । ईदृशस्तनस्य मानं सौन्दर्यादिसंमानं कथं विविच्य जानीयुर्लोकाः । "यथा दृश्यः किञ्चित्पवनचलचीनांशुकतया कुचाभोगः स्त्रीणां हरति न तथा मुद्रितवपुः" इति न्यायेनातिमनोहरत्वात् । अथच परममहताका-शेनापि प्रान्तस्य संवरीतुमशक्यतया तस्य परिमाणं कथं जानी-युरित्यर्थः ॥ २६४ ॥

कश्चित्प्रभातं वर्णयति—

**अश्नन्ति दीपकलिका म्लानिं प्रातःसमारम्भे ॥**
**प्रेयोवियोगकातरमुग्धदृशामन्तरात्मभिः साकम् २६५॥**

कलिकापदेन स्थूलशिखत्वसूचनम् । म्लानिं=तेजोमान्द्यं विषादं च । प्रेय इति प्रियशब्दस्यातिशायनिकप्रत्यये रूपम् । त-त्रानिष्टवियोगे दुःखाभावात् प्रकृत्यंशदुःखातिशयसूचनाय प्र-त्ययांश इति ध्येयम् । अत्र सहोक्त्यलङ्कारेण प्रथमतो द्वयोरपि दीप्तिमत्त्वादिदानीं च म्लानत्वात्तुल्यस्वभावसूचनम् । एतेन नायिकायास्तारुण्यव्यञ्जनम् । यत्कामशास्त्रम्—

"बाला नूतनसङ्गमे रतिकरी सान्द्रान्धकारे भवे—
दालोके सुखमातनोति तरुणी प्रौढा तमिस्रेऽङ्गना ॥" इति ।

( पञ्चसायके २ सायके श्लो० १५ )॥ २६५ ॥

कटाक्षेण ज्ञातस्वानुरागः कोऽप्याह—

**अञ्जनमासजयसि त्वं खञ्जितखञ्जनमदेऽक्षिण ॥**
**प्रागेव प्रमितं तद्भावप्रत्यायकत्रिभागत्वात् ॥ २६६ ॥**

खञ्जितो ह्रस्वीकृतः खञ्जरीटस्य मदो गर्वो येन तत्र । अ-ञ्जनपदेन कज्जलव्यञ्जनात्मकपापाख्ययोरभेदाध्यवसायश्लाघा ।

"संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्" ( उ० २ का० १९ ) इति प्रकाशोक्तेः । यथा त्रिभागेत्यत्र त्रिपदं तृतीयपरम् । कटाक्षेणाभिप्रायबोधात् । तस्याञ्जनवत्त्वं मया पूर्वमेव गृहीतं त्वया त्विदानीमेव तद्वत्त्वं सम्पाद्यत इत्यर्थः ॥ २६६ ॥

कश्चिच्चन्द्रापेक्षया तन्मुखोत्कर्षं वर्णयन्नायिकामाह—

**अंहःसंहृतियोगादिव मुक्तानां हिमे सरोजानाम् ॥**
**मलिनं मण्डलमिन्दोरवदातं त्वन्मुखं सुकृतैः ॥२६७॥**

हिमजन्यपद्मनाशे मुक्तितादात्म्यमादायोत्प्रेक्षा । अर्चिरादिक्रमेण गतानां हि सगुणविद्यावतां पापं वैरिषु पुण्यं ( सुहृदि ) क्रामति । तथाच श्रुतिः—"तस्य प्रिया ज्ञातयश्च सुकृतमुपयन्त्यप्रिया दुष्कृतम्" इति । ततश्च चन्द्रमण्डलस्य सङ्कोचकत्वेन पद्मवैरित्वात्तत्पापसंक्रान्त्या मालिन्यं मुखस्य तु साम्येन तत्सुहृत्त्वात्तत्पुण्योपसङ्क्रान्त्या उज्ज्वलत्वमित्यर्थः । "मालिन्यं व्योम्नि पापे ऽयशसि" ( प० ७ का० २३ ) इति साहित्यदर्पणे ॥ २६७ ॥

कस्याश्चित्प्रौढाङ्गनाया दिवस एव रतिसामग्रीसम्पत्तिमालोक्य कोऽप्याह—

**अञ्जानया नयनयोर्युगं त्वया मत्तकाशिनि ! दिनेऽपि ॥**
**यूनां दृशः प्रविसरत्तिमिरकदम्बाकुलाः कलिताः॥२६८॥**

अञ्जानया=कज्जलेन रञ्जयन्त्या । मत्ता क्षीबेव काशते प्रतिभातीति मत्तकाशिनी । 'कर्तर्युपमाने' ( ३ । २ । ७९ ) इति णिनिप्रत्ययः । काममोहेन विषयान्तरदर्शनसामर्थ्यविरहात्तिमिराकुलत्वोपचारः । तथाच दिवसेऽप्यन्धकारप्रदर्शनादाश्चर्यम् । अथच नेत्रयोरञ्जनयोगे तत्रैव मायिकमाकुलत्वं साम्यादुचि-

तम्। अत्र तु तत्र कारणं कार्यं तु तरुणेष्विति असङ्गत्यलङ्कारः ॥ २६८ ॥

काप्यनुनयमकृत्वैव परिरम्भादि वाञ्छन्तं नायकं दृष्ट्वा सखीमिदमाह–

**अन्धकरिपोः शशिकला गौरीपद्यावकद्रवान्वयतः॥**
**भालविलोचनदहनज्वालारुणितेव निर्भाति ॥२६९॥(१)**

अन्धको=दैत्यविशेषः। तथाच हरिवंशे—

"स व्रजत्यन्धवद्यस्मादनन्धोऽपीह भारत!।
तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निवासिनः॥"

अथ च। अन्ध इव अन्धकः उपायानभिज्ञत्वात्। तद्रिपुत्वेन तद्वैपरीत्यादभिज्ञतया तत्प्रणामकरणमिति ध्वनिः। तथाच भरतः–

"योऽपराद्धस्तु सहसा नारीं सेवितुमिच्छति।
अप्रसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते।"

मानमोक्षणार्थपद्प्रणामेनेन्दुकलायां यावकयोगजन्यमारुण्यं भालनयनाग्निपाकजन्यत्वेन सम्भाव्यते ॥ २६९ ॥

कश्चिदीश्वरेष्वपि कामव्यापारं सूचयन्नाह–

**अम्भोरुहमुकुलाद्धाकृतिनापि करेण गिरिभुवापिहितः**
**प्रतिबिम्बमिलनतोऽम्बुजमुकुलच्छन्नायते हिमरुक्॥२७०॥**

एकतः बिम्बप्रतिबिम्बाभ्यां मिलित्वाऽखण्डपद्मकोरकतिरो-

---

(१) अत्र का० रा० पु० पुस्तके—
अंशोऽपि खलु गुणस्य प्रभवति जगति प्रतिष्ठायै।
अंशुरिति तन्त्ववयवं विद्वांसो हि व्यवहरन्ति॥
इति पद्यमधिकं वर्तते।

हित इव सम्पन्न इत्यर्थः। मुकुलार्द्धाकारकरेण सर्पशिरा विवक्षितः। तथाच भरतः—

"अङ्गुल्यः संहताः सर्वाः सहाङ्गुष्ठेन यस्य तु।
तथा निम्नतलश्चैव स तु सर्पशिराः करः ॥" इति ॥ २७० ॥

काचिन्नायकादपरज्यानुशयानां सखीदमाह—

**अन्तर्निहिताप्यमुना प्रयत्नतो भावितापि भृशम् ॥**
**चपलतया निजयैव त्वं रसगुटिकेव बहिरासीः ॥ २७१ ॥**

अन्तः=मनसि यन्त्रमध्ये च। भाविता=यथाकामशास्त्रं सेविता वृत्तशुद्धिजनकौषधादिसंयोगा च। चपलतया=अस्थिरानुरागतया उड्डयनस्वभावतया च। रसः=पारदः। स हि यत्नेन शोध्यमानोऽपि यन्त्राद्बहिर्निःसृत्य गच्छतीति प्रत्यक्षसिद्धम्। बहिर्भवनं नायिकापक्षेऽनुरागविषयत्वाभावः। गुटिकापक्षे प्रसिद्धम् ॥ २७१ ॥

कश्चिद्वर्षासु स्वगमनशङ्किनीं प्रियामुदीक्ष्य गमनाभावं सूचयन्नाह—

**अम्बुदकदम्बसंभृतमम्बरतलमम्बुजाक्षि! संवीक्ष्य ॥**
**प्राणाः कुतुकमराला वियोगिनां मानसं जहति ॥ २७२ ॥**

कुतुकमाश्चर्यमित्यर्थः। अरालाः=वक्राः नानाविधसुखदुःखानुभावात्। अथच आश्चर्यजनका मराला हंसाः [तदभिन्नाहः]। ते हि सम्प्रति मानसाख्यं सरः समाश्रयन्ते इति सम्प्रदायः। तथाच दर्पणे—"जलधरसमये मानसं यान्ति हंसाः" (प० ७ का० २३) इति। एतैस्तु मरणस्य जातप्रायत्वात् चित्तत्याग एव कृत इति चित्रम्। "मानसं सरसि स्वान्तेऽपि" इति विश्वः ॥ २७२ ॥

**अम्भोदाद्दम्भोलेः सम्भावयतीह सम्भवं लोकः ॥**
**वर्णभ्रमात्स्वरस्य च विपर्ययान्मुदिरभिदुरयोर्भेदः२७३(१)**

(२)स्वविषयान्मुदिरभिदुरमध्ये था मेघकुलिशयोर्जन्यजनेषु-मन्यंम्नायञ्जेत्कप्रसिद्धः । वस्तुतस्तु तयोरमतिस्व एकजातीय-पीडाजनकत्वात् । द्रापनन्तु वर्णभेदाद्विजातियशब्दजनकत्वाच्च भेदप्रतिभासः । अथ च मुदिरपदं मकारे भकारभ्रमात् मकारो-त्तरस्य उकारस्य दकारोत्तरं दकारोत्तरस्य इकारस्य भकारो-त्तरं च पाठरूपाद्विपर्ययाच्च भिदुरपदं कुलिशपरमर्थसाम्यप्रात्यप्र-सिद्धिः प्रवृत्तेति भावः ॥ २७३ ॥

इत्यङ्कारव्रज्या ॥

कस्याश्चिद्रतिविपर्ययं काप्यनुमिमीते —

**कलयन्त्यधीयमानं स्त्रीपुंवच्चेति पाणिनेः सूत्रम् ॥**
**निभृतास्मितवलिताधरमाननमानमयतिस्म वधूः ॥२७४॥**

एतत्सूत्रार्थो हि यूना सहोक्तौ वृद्धसंज्ञा स्त्री शिष्यते सा च पुंवत्स्यात् तल्लक्षणमेव चेत्तयोर्वैरूप्यम् इति । युववृद्धशब्दौ अप-त्यविशेषे परिभाषितौ । यथा गार्गी च गार्ग्यायणश्चेति द्वन्द्वे गा-र्ग्यायणशब्दलोपः गार्गीशब्दस्य च पुंवद्रूपं ततो गार्ग्याविति रूपसिद्धिः । अनया तु सूत्रान्तर्गतपदानामेव स्वानुभूतार्थपर-त्वेन योजना कृता । स्त्री पुंवद्भवति । चकारात्प्रकृततरं विवक्षि-तम् । एवं च पुरुषायितपरमिदमिति लज्जया निभृतेत्यादि । यद्वा कश्चिद्वृद्धायामासक्ते नायके तत्परिहासोऽयं वृद्धायाः स्त्रि-याः पुंवद्भावार्थमादाय बोध्यः ॥ २७४ ॥

---

(१) इदं पद्यं का० रा० पु० पुस्तके नास्ति । (२) अत्र अक्षराणा-मत्यन्तमस्तव्यस्तत्वात् यथालिपि पाठ एव स्थापितः ।

काचिद्गुरुजनमनादृत्यैव रागाद्रमयमाणायां कस्यांचिदिदमाह--

कमलाकरपिहितप्रियदक्षिणदृङ्मुकुलिताब्जगतिदुःस्थः
विधिरेकतानकर्णः कलयति तस्या रतान्तनिःश्वासान्॥

दक्षिणनयनस्य सूर्यात्मकतया तत्तिरोधानेन नाभिपुण्डरीकमुद्रणे सति तत्रावस्थाने सङ्कोचभरेण दुःस्थोऽनवकाशत्वेन स्थितो ब्रह्मा कर्ममात्रे स्वामतस्तदिन्द्रियसंयोगाविरहेण विलम्बो मा भूदित्याशये निर्धाय रतान्तकालीनश्वासान् श्रोतुं बद्धादरः। रतान्ते सति नयनत्यागेन सूर्यकरयोगात्कमलविकासे सुस्थो भविष्यामीत्यभिप्रायेणेति भावः ॥ २७५ ॥

कश्चिन्नायिकापरितुष्ट आह—

कवितानामिव गुरुरसगर्भाणामर्भकैणनयनानाम् ॥
कथ्यन्तेऽलङ्कारा एव व्याजोक्त्यनन्वयाक्षेपाः ॥ २७६ ॥

अर्भको बाल एणो मृगस्तत्सदृशलोचनानाम्। गुरुः रसः शृङ्गारो गर्भे आत्मनि यासाम्। अथच रसो गर्भे यासां तदुपस्थित्यनुकूलविभावाद्युपस्थापकत्वात्। व्याजोक्तिः=व्याजेनार्थान्तरोक्तिः। तदुक्तम्—"अत्यन्ताभिमतेऽपि वस्तुनि विधियासां निषेधात्मकः।" इति। अनेन बिब्बोकभावो विवक्षितः। तदाह भरतः—

"इष्टानां भावानां प्राप्तावभिमावगर्वसम्भूतः।
स्त्रीणामनादरकृतो बिब्बोको नाम विज्ञेयः॥"

अनन्वयः=सम्भोगाभावो मानादिकालीनः। आक्षेपः=प्रियं प्रति परुषोक्तिः। एतेऽलङ्कारप्राया एव। न तु जनान्तरसम्बन्धिन इव दोषाः। कवितानामप्येतेऽलङ्काराः। काव्यप्रकाशे—
"व्याजोक्तिश्छद्मनोद्भिन्नवस्तुतत्त्वनिगूहनम्"(उ० १० का० ११८)

अलङ्कारकौस्तुभे—

"यत्रैकावच्छिन्ने स्तामुपमानोपमेयत्वे ।
अन्यसदृशं निषेद्धुं तमनन्वयसंज्ञमाचख्युः ॥"

"इष्टस्याप्यभिधातुं योऽर्थस्य विशेषबोधाय ।
स्वयमेव प्रतिषेधः स वक्ष्यमाणोक्तविषय आक्षेपः" ॥२७६॥

काञ्चित्प्रियां प्रशंसन्नाह—

करमूलेन मृणालं मुकुलमुरोजेन कुसुममास्येन ॥
मध्वधरेणामोदं जयसि त्वं परिमलेन पद्मिन्याः ॥२७७॥

पद्मिनीत्वस्पर्द्धया तज्जय उच्यते । करस्य मूलेन बाहुना । सर्वत्र तृतीया करणत्वे । मुकुलोपमया सुवृत्तत्वादिसूचनम् । तथाच भविष्ये—

"सुवृत्तमुन्नतं पीनमदूरोन्नतमायतम् ।
स्तनयुग्मं सदा शस्तमतोऽन्यदशुभावहम् ॥"

तथा—

"सुमृष्टदर्पणाम्भोजपूर्णबिम्बेन्दुसुप्रभम् ।
वदनं वरनारीणामदृष्टफलदं शुभम्" ॥ २७७ ॥

काचिद्दुह्यमानां सखीदमाह—

कठिनीभूतेन तवाशयेन नित्यं विलिख्यमानस्य ॥
उद्भियतेऽस्य नितरां वरवर्णिनि ! विग्रहे सितता २७८॥

अन्तरनुरागसत्त्वेऽपि तत्प्रत्याख्यानात्—कठिनीभूतेति । च्वि-प्रत्ययः । एतेन नायकानुरागानौचित्यवारणम् । अथच कठिनी खटिका तद्रूपेण । "कठिनी खटिकायां तु" इति विश्वः । एतेन नायकविरहेण तस्या अपि पाण्डुतया तद्विषयकप्रीतिव्यञ्जनम् । विलिख्यमानस्य=ज्ञानविषयीक्रियमाणस्य । पक्षे स्पष्टम् ।

खटिकया यत् विलिख्यते तस्य पाण्डुतौचित्यादिति भावः॥२७८॥

कश्चिदनुरक्त आह--

(१)कमलसखः कुचकलशो लौकिककलशाद्विजातीयः॥
यस्य गुणव्यतिरेको विलक्षणैः क्षणमपि न लक्ष्यः॥२७९॥

प्रसिद्धकलशस्योत्पत्त्यवच्छेदेन निर्गुणत्वमिति सिद्धान्तः। कुचकलशस्य तु सर्वदा रम्यत्वादिगुणवत्त्वेन क्षणमपि गुणाभावो नास्ति। अतस्तदपेक्षयाऽस्य वैलक्षण्यं दुर्वारमिति भावः॥२७९॥

कश्चित्प्रियाकुचयोर्मनोहरत्वातिशयमाह--

कमनीयता विलक्षणतमैव वक्षोजयोः कुरङ्गाक्ष्याः॥
यदिहाहर्निशलग्नो देवच्छन्दोऽपि विस्फुरति॥ २८०॥

विलक्षणतमत्वं शोभान्तरप्रतियोगिकोत्कर्षवत्त्वम्। अन्यशोभापेक्षापकर्षवारणाय–तमेति। एवकारेण विषयनिश्चयसूचनम्। "हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिकः।" इत्यमरः। अथच देवतानां छन्द इच्छा। इच्छावाचकं छन्दपदं तु पुलिङ्गमकारान्तम्। "स्वच्छन्दोच्छलद्" इत्यादिदर्शनात्। तथाच दिव्याङ्गनोपभोगिनामपि सुराणामेतद्विषयकोत्कार्थसिद्धिः॥२८०॥

काचित्कृष्णाभिसारिकां दूतीदमाह—

कस्तूरिकानुलेपाधिवासितेयं भवद्वपुर्वल्ली॥
भाति भ्रमरपरीता पुष्पायुधचापयष्टिरिव॥ २८१॥

"संस्कारो गन्धमाल्याद्यैर्यस्स्यात्तदधिवासितम्।" इत्यमरः। कस्तूरीभृङ्गाणां बिम्बप्रतिबिम्बभावः। पुष्पायुधपदेन तस्यापि तन्मयत्वसूचनम्। अनेन चापवल्लीव प्रथममेव त्वं तद्वशीकरणयोग्यासीः। सम्प्रति भ्रमरोपेततत्साम्ये तु तस्या

(१) का. रा. पु. पुस्तके नास्ति।

मौर्वीसमवधानेन विजयोपधानमेव सम्भवतीति सूच्यते ॥२८१॥

काचिदनभिज्ञेनानादृतां सखी समाश्वासयति—

**कमठेन कठिनभावात्कृतापि पृष्ठे विषीद न रसे ! त्वम्॥**
**ननु भोगिनायकेनाहर्निशमारोप्यसे शिरसि ॥ २८२ ॥**

रसा=भूमिः । कठोरतया (कमठेन) कच्छपावतारेण ( पृष्ठे धृतापि खेदं मा कार्षीः ) सर्पराजेन शेषेण सर्वदा शिरस्येव धार्यसे । अथच रसपदस्य मत्वर्थाच्प्रत्ययान्तत्वेन रसे रसाश्रयभूते इति सम्बुद्धिः । कं सुखं, मं ज्ञानं, तदुभयोः समाहारद्वन्द्वे एकवचने कममिति रूपम् । तेन ठः शून्यः । प्रज्ञाशून्यवद्विद्यानादरेण ज्ञानशून्यः, रूपवत्सङ्गमजन्यविजातीयसुखशून्यश्च । तादृशेन । कठिनभावात्=गुणानभिज्ञत्वात् । पृष्ठे कृता=लक्षणयानादृतापि । विषादं=स्वस्य निर्गुणत्वज्ञानजन्यदुःखं मा गाः । भोगिना भोगाभिज्ञेन नायकेन । षष्ठीसमासो वा । तेन गुणग्राहकत्वसूचनम् । शिरसि आरोप्यसे=लक्षणया नायिकान्तरमपेक्ष्य बह्वाद्रियसे । तथाच "तत्त्वज्ञेन कृतावज्ञः को नामान्तर्न तप्यते" इतिन्यायेन तदवज्ञायामेवानुतापो युक्तो न त्वनभिज्ञकृतावज्ञायामपीति भावः ॥ २८२ ॥

काचित्कुलवधूं शिक्षयितुं कश्चिदिदमाह—

**कलभस्य तवोरुभ्यां शुण्डैवास्कन्दितावयवभूता ॥**
**रेफान्तरस्य तस्य तु कृतः स्वरूपेण परिभावः ॥ २८३ ॥**

कलभस्यावयवभूता शुण्डैव विजिता । कलभपदमध्ये रेफदाने तु करभस्य स्वरूपेणैव तिरस्कारः कृतः । "मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।" इत्यमरः । अथच रेफो दुर्जनो मध्यगतो यस्य । तत्स्वरूपस्य तिरस्कारादन्यस्यापि दुष्टसमागो-

गिनः परिभवः स्यादतस्तथा न कार्यमिति व्यङ्ग्यम् । तथाच कन्दर्पचूडामणौ—

"रक्षेद्दारान्स्वीयानेभ्यः संयोगहेतुभ्यः ।
कामोपधाविशुद्धानन्तःपुररक्षिणः कुर्यात् ।
इत्येके तेऽथ न भयलोभाभ्यां हि योजयन्त्याभिः ।
तस्मात्स्यादुपधात्रयशुचिरधिको न गणिकापुत्रः" ॥२८३॥

कस्यचिदतिविदग्धस्य जनापवादमालोक्य कोऽप्याह—

**कलयैकयैव विधुना सम्प्रापि निवास ऐश्वरे शिरसि ॥**
**बह्वीभिः पुनराभिः सर्वजनानुभवसिद्धोऽङ्कः ॥ २८४ ॥**

कलया=षोडशभागेन शास्त्रादिना च । ईश्वरः=शिवो राजादिश्च । शिरसि निवासः चूडामणीकृतत्वात् । पक्षे आदृतत्वमेव । अतो बहुत्वेन सर्वत एकस्यामेवादर उचित इति भावः । यद्वा एकया=मुख्यया वशिष्ठविहितया "वृद्धिर्यद्धनवर्द्धनम्" इति स्मृत्युक्तया । कलया=मूलद्रव्यवृद्ध्या प्रत्यवायो न भवति । बह्वीभिः=स्वरूपतो वृद्धेरपि पुनर्वृद्धिरूपाभिश्चक्रकलाभिर्दोषो भवतीति व्यङ्ग्यः ॥२८४॥

कश्चित्सद्वरमुपदिशति—

**कथितजडत्वाः शिशिरा उष्णस्पर्शास्तु कृष्णवर्त्मानः ॥**
**केचिदनुष्णाशीतस्पर्शा अचला जगत्प्राणाः ॥ २८५ ॥**

शीतस्पर्शवज्जलम् । उष्णस्पर्शवत्तेजः। वह्निपदं(१)तूपलक्षणम् । अनुष्णाशीतस्पर्शवन्तौ पृथिवीपवनौ इति दीपिकादिप्रसिद्धोऽर्थः। अथच शीतलस्वभावाः कथितजाड्याः। मृदुतराणां लोके शक्त्यभावख्यापनात् । अतितीव्रास्तु कृष्णं मलिनं वर्त्म

(१) वह्निपदं वह्निवाचककृष्णवर्त्मपदमित्यर्थः ।

आचरणं येषां तथा। तदाह स्मृ(श्रु)तिः—"यत्क्रोधेन जपति यज्जुहोति यद्वा तपस्तप्यति यद्ददाति वैरोचनिस्तद्धरतेऽस्य सर्वं, मोघः श्रमो भवति क्रोधनस्य।" हारीतोऽपि क्रोधं प्रक्रम्य—"स्वेषामप्यबहुमतो भवति" इत्याह। अनुष्णाशीतस्पर्शा नात्यन्तमृदवो नात्यतितीक्ष्णास्तु अचलाः। सर्वदा पदभ्रंशाभावात्। जगतः प्राणभूताश्च। सर्वप्रियत्वात्। अत एतादृशेन भाव्यमित्यर्थः॥ २८५॥

कश्चित्प्रियावचनमाधुर्यं स्तौति—

**कलकण्ठकामिनीनामप्रतिभानां पुरस्तवालपितुम्॥**
**अर्थविशेषविहीनास्तुहीतिवाचः समुद्यन्ति॥ २८६॥**

पक्ष्यन्तरापेक्षया मधुरस्वरत्वलाभाय-कलकण्ठेति यौगिकं पदम्। कलो मधुरः कण्ठः शब्दो येषाम्। 'स्वरे कण्ठः प्रकीर्तित' इति रत्नकोषः। ततोऽपि स्त्रीजातीयानां तदतिशयात्तदर्थं कामिनीति बालवृद्धेतरपरम्। "प्रज्ञा नवनवोल्लासशालिनी प्रतिभा मता"। इति रुद्रः। तुहीति कोकिलशब्दानुकरणम्। अथच वादिनः प्रतिवाद्यग्रे कथासामर्थ्यविरहे निरर्थकाः पादपूरणमात्रप्रयोजनाः तु हीत्यादिनिपाता यथा निर्यान्ति। "तु हि च स्म ह वै पादपूरणे" इत्यमरात्। तद्वदत्रापीति भावः॥ २८६॥

कश्चित्केशकलापावलोकनोन्मुदित आह—

**कच एष पठितसंस्थितजीवनविद्यः कविनिरुक्तेः॥**
**धूर्जटिदृगनलदग्धं सञ्जीवयति स्मरं यस्मात्॥ २८७॥**

कचः=केशो बृहस्पतिसुतश्च। कविः=शुक्रः। पक्षे कवीनां काव्यकर्तृणाम्(निरुक्तेः=)सम्प्रदायात्। कचेन शुक्रसकाशान्मृत-

सञ्जीवनविद्या पठितेति पुराणविदः। "कविः काव्यकरे सूरौ कविर्वाल्मीकिशुक्रयोः" इति विश्वः॥ २८७॥

कस्यचिद्विदेशगमननिवृत्तिं पृष्टा सखीदमाह—

**कलरवमाला मौक्तिकसङ्घानादाय तण्डुलभ्रान्त्या॥**
**विसृजत्यकाण्डकरकोत्करभ्रमाधायिनः सौधे॥ २८८॥**

रतिकलहत्रुटितहारान्निपतितानि मौक्तिकबीजानि तण्डुलभ्रमेण पारावतैर्गृहीतानि। ततः काठिन्येन निगरणाभावाद्विशेषदर्शनेन विमुक्तानि। तत्र विरहव्यग्रतया करकावृष्टिभ्रमादशकुनज्ञानेन निवृत्त इति भावः। "पारावतः कलरव" इत्यमरः। (उत्करः=राशिः) यद्वा कुत्रचिद्गृहे उक्तविधमुक्ताफलानि दृष्ट्वा करकाभ्रमेण वर्षासमयारम्भमभिमन्यमानामवधिदिनेऽपि नायकानागमनेन विभूतदुरवस्थां नायिकां सखी भ्रमखण्डनेन समाश्वासयति॥ २८८॥

कश्चिद्धनवतामकार्यमपि लोकसङ्ग्राह्यं पश्यन्नाह—

**कर्मणि न खलु विशेषो विभववतां गण्यते जगति॥**
**पद्मान्वयेन कथितः सरसः पङ्कोऽपि कीर्तिरिति॥२८९॥**

विशेषः=विहितनिषिद्धाविहितनिषिद्धभेदः। (पद्मान्वयेन=) पद्मस्य कमलस्य पद्मायाः लक्ष्म्याश्च सम्बन्धेन। पङ्कः=कर्दमः पापं च। कीर्तिः=पङ्को यशश्च। "अस्त्री पङ्कं पुमान्पाप्मा" इत्यमरः। "कीर्तिः प्रतापयशसोर्विस्तारे कर्दमेऽपि च" इति विश्वः। तथाच श्रीसम्बन्धेन पापापापे कीर्तिरेवोच्यत इति भावः। यद्वा दूती कांचिद्बहुद्रव्ये उपपतौ स्थिरीकर्तुमिदमाह॥ २८९॥

काचिद्विरहिण्याह—

**कल्पयति यो दिनानि ज्वलयति कान्तंपरं हरति निद्राम्॥**
**उद्यन्नेवासुसहः स कथं विरहो न तीक्ष्णांशुः॥ २९०॥**

कल्पवत्करोति कल्पयति। विरहेण दिनानामतिदीर्घत्वाभिमानात् । पक्षे दिनानि करोति । कान्तं=नायकम् । ज्वलयति=दुःखाकरोति । पक्षे सूर्यकान्तं दीपयति । "कान्तो रतिप्रिये चारौ" इति विश्वः । निद्राहरणमत्यन्ताभावः । पक्षे प्रबोधेन तद्विध्वंसः । एवंच तदसाधारणधर्मवत्त्वाद्विरहस्य सूर्यरूपत्वं युक्तमित्यर्थः ॥ २९० ॥

काचित्कृतकान्तसङ्गमादिं सखीदमाह—

**कलधौतकलशभावभृदेतद्वक्षोजयोस्तव छितयम् ॥**
**मदनार्चनाथ नखपदकिंशुदामाश्रितं रचितम् ॥२९१॥**

"कलधौतं रूप्यहेम्नोः" इति विश्वः। नखपदरूपं यत्किंशुकदामेत्यन्वयः । देवार्चादावपि मालाद्यलङ्कृताः कनककुम्भा भवन्तीति तथोत्प्रेक्षा । एतेन तदुत्तरमपि कान्तस्य सम्भोगेच्छाव्यञ्जनेन कारणसत्त्वेऽपि कार्यानुत्पत्तिरूपा विशेषोक्तिर्व्यज्यते ॥ २९१ ॥

काचित् दूती नायिकामाह—

**कर्कशताश्रितहृदया गजराजगतिः पदातिरम्यासि ॥**
**सम्प्रति भूषितरथ्या बलसर्वस्वं स्मरस्य भव ॥२९२॥**

कर्कशता मध्ये कुचस्थित्यनुरोधाद्विलम्बविधानात । पक्षेकर्कैः श्वेताश्वैराश्रिता। "सितः कर्क" इत्यश्वप्रकरणे अमरः। गजराजगतिरिव गतिर्यस्याः। उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । पक्षे गजराजानां गतिर्यस्याम् । पदेन चरणेनात्यन्तं रमणीया । अथच पदातिभिः सहिता। भूषिता अभिसारगमनार्थी रथ्या यया । "रथ्या प्रतोली विशिखा" इत्यमरः । पक्षे संस्कृता रथ्या रथसमूहो यत्र।"रथ्या रथकक्षा रथव्रजे"इति कोषः।

बलस्य सर्वस्वम्। त्रैलोक्यजयसाधनत्वात्। अथच "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्युक्ताङ्गयोगात् त्वमेव तस्य सैन्यकार्यं करोषीत्यर्थः॥ २९२॥

कश्चित्प्रियामाह—

कलशेन भवदुरोरुहसंस्पर्शनजापराधमपमार्ष्टुम्॥
कम्बुग्रीवावत्त्वं मुग्धाक्षि! समर्पितं तुभ्यम्॥ २९३॥

"कम्बुग्रीवा त्रिरेखा सा" इत्यमरः। तस्य त्वत्कुचस्पर्द्धानधिकारेऽपि तत्स्पर्धाविधाननिबन्धनदोषशुद्ध्यर्थं तेन स्वासाधरणधर्मभूतं कम्बुग्रीवावत्त्वं तुभ्यमेव दत्तम्। अन्योऽपि स्वोत्कृष्टसन्तोषाय स्वीयं विशेषधर्मं तस्मै प्रयच्छतीति भावः। भविष्ये—

"स्फुटं रेखात्रयं यस्या ग्रीवायाश्चतुरङ्गुलम्।
मणिकाञ्चनभूषाढ्यं सा दधाति विभूषणम्"॥ २९३॥

कांचिद्रुद्धमानां सखीदमाह—

कलिरेष भीमतनयाप्रियं प्रविष्टोऽपि ते हृदयम्॥
न स्यात्सुचिरस्थायी दष्टः सहसाहिनायकेनैव॥२९४॥

भीः=मानानिर्वाहादिजं भयम्। मतं=सख्याद्यनुमतिः। नयो=नीतिः। एषामप्रियम्। एतदपर्यालोचनात्। तादृशं तव हृदयं प्रविष्टोऽपि कलिर्मानः नायकेन प्रियेण दष्टो दर्शनानुनयाभ्यां निरस्तः चिरकालं न स्थास्यति। पक्षे भीमस्य राज्ञस्तनयाया दमयन्त्याः प्रियं नलं प्रविष्टोऽपि कलिर्युगविशेषः अहीनां सर्पाणां नायकेन कर्कोटकेन दष्टश्चिरं न स्थितवानिति भारते स्पष्टम्। एवंविश्लेषेण हृदये नलाभेदमारोप्येयमुक्तिः॥२९४॥

कश्चिद्दयितामाह—

**कर्णेन सहजकुण्डलभृताङ्गनेत्रामुना नियतम् ॥**
**ध्रियते शक्तिरमोघा समस्तहृदयावभेदिनी चित्रम् २९५॥**

सहजं कर्णभूषणत्वेन योग्यत्वात् । पक्षे शरीरसहोत्पत्तिकं यत्कुण्डलं तद्धृता । अङ्गने इति सम्बुद्धिः । अत्र=शरीरे । अमुना तव कर्णेन=श्रोत्रेण । पक्षे अङ्गदेशस्य नेत्रा=नायकेन राधेयेन । अमोघा=फलाव्यभिचारिणी । (समस्तहृदयावभेदिनी=)सर्वजनहृदयमोहक्षमा । शक्तिः=सौन्दर्यातिशयः । (ध्रियते=) धार्यते । तेन (राधेयेन) तु यस्य कस्यचिदेकस्यैव हृदयविदारिणी शक्तिरायुधविशेषो दध्रे इति व्यतिरेकः २९५॥

कांचित्सखीदमाह—

**कन्यकयैव भवत्या कुन्त्येव सुसिद्धमन्त्रया नियमात् ॥**
**केनचनाऽनाकलितः सहस्रकरसङ्गमः प्राप्तः ॥ २९६ ॥**

कन्यकया=अनूढयैव । नियमेन=सर्वदा । सुतरां सिद्धो मन्त्रो नायकसङ्गमन्त्रो यस्याः । फलायोगव्यवच्छेदेनाऽन्यैरज्ञानेन सिद्धत्वम् । सहस्रसङ्ख्यपुरुषाणां करैः सह सङ्गमो लब्धः । कुन्त्यापि कन्यादशायामेव नियमात्=दुर्वासःसमाराधनात् सुतरां सिद्धः प्राप्तो यथेष्टदेवतासमाकर्षणसमर्थो मन्त्रो यया । तादृश्या । केनाप्यज्ञातः सहस्रकिरणस्य सूर्यस्य सङ्गमः प्राप्त इत्यर्थः ॥ २९६ ॥

कंचित्सत्पुरुषेण प्रेमविषयीकर्तुमारब्धमप्यसिद्धं तथात्वभावमालोक्य कोऽप्याह—

**कर्तुमपीष्टो हृदये न लभेत तदास्पदं दुष्टः ॥**
**ईशेनापि जिघत्सितमस्थात्कण्ठे हि कालकूटविषम् २९७**

हृदयकरणेच्छा प्रीतिविषयीभावेन तदन्तःसंयोगेन च । जि-

घसितं=भोक्तुमिष्टमपि । दुष्टत्वरूपसामान्यधर्मावच्छिन्नत्वदर्श-नाय-विषामिति। तस्य कण्ठ एव स्थित्या हृदयप्राप्तिर्न जातैवेति भावः ॥ २९७ ॥

काचित्सङ्केतस्थानरक्षणेन नायकं प्रशंसन्ती सखीमाह—

**कच्छपता येन धृता तेनैव नृसिंहतापि सखि! ॥**
**कोलतया सह सङ्गो भवेन्न चेदेवमस्यैव ॥ २९८ ॥**

"जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः" इत्यमरः। नदीतीरगतानिकुञ्जं पाति रक्षति भङ्गादिति कच्छपः । तद्भावो येन धृतः । नृसिंहत्वं=पुरुषश्रेष्ठतापि तेनैव धृता । एवंचेन्न कुर्यात् तर्हि लतया वल्लीमात्रेणावशिष्टेनापि उत मया सह को वा सङ्गो भवेत् । तावन्मात्रेण जनदर्शनानावरणादावयोस्तत्र संयोगो न स्यादेव । अथच कच्छपता कूर्मता येन धृता तेनैव नृसिंहतापि। कोलतया=वराहत्वेनापि। अस्यैव=उभयोः प्रकृतिभूतस्य। संयोगो न भवेत् ? किन्तु स्यादेव। त्रयाणामेकविष्णुशरीरत्वादिति भावः ॥ २९८ ॥

कश्चिन्नायिकासम्भोगं सूचयन्नाह—

**करकावली पयोधरदेशाद्वर्षाकुरङ्गाक्ष्याः ॥**
**मुक्तावलिरिव पातिता विराजते गन्धवाहपरिमर्दात्॥२९९**

"वर्षोपलस्तु करका" इत्यमरः। पयोधरो मेघ एव पयोधरः स्तनः तस्मात् । गन्धवाहः=पवनः सुरभिद्रव्यानुलिप्तो नायकश्च। तत्कृतात् परिमर्दात्=सङ्घट्टात् मर्दनाच्च। पतिता मुक्ताफलानां राजिरिव भाति। वर्षासु नायिकारोपेण मेघे स्तनाभेदारोप इति परम्परितरूपकम् । तन्मूलं च गन्धवाहेति रूपकम् । तस्य करकापङ्क्तौ मुक्ताफलोत्प्रेक्षाङ्गत्वमिति सङ्करः ॥ २९९ ॥

कश्चिदज्ञजनेन मूर्खपण्डितयोः समानकक्षां क्रियमाणां पश्यन्नाह—

**कषदृषदां न परिषदा स्वरूपमेषां विभावितं यावत् ।**
**तावत्काञ्चन ! कृत्रिमकनकैः समशीर्षिकामपि सहस्व ॥**

कषदृषदः=सुवर्णपरीक्षणपाषाणाः । स्वरूपं न विभावितं=न विचारितम्। काञ्चन=पारमार्थिकसुवर्ण! कृत्रिमकनकैः कनकाकारीकृतधात्वन्तरैः सह। समं शीर्षं शिरो यस्यां क्रियायां सा समशीर्षिका । एककक्षागणनमिति यावत् । कृते तु परीक्षणे स्वयमेवाऽन्येषामपकर्षमाकलयतीति भावः । तथापि गुणग्राहकसन्निधानातिशयाविर्भावे कृतकपाण्डित्यदुर्मदानां खण्डनादन्येषां भ्रमो निवर्त्स्यतीति भावः ॥ ३०० ॥

काचिद्विरहिणीं सखी प्राह—

**कर्बुरता भ्रमरकुलैः पलाशनिवहेषु समधायि ॥**
**बत सखि! विरहिनिबर्हण एषामप्यनाश्वासः॥३०१॥**

स्वत एव विरहिमारणक्षमेषु किंशुकपुष्पेषु भृङ्गैः स्वसंयोगेन कर्बुरता चित्ररूपवत्ता सम्पादिता । केवलानां तेषां तद्व्यशक्त्यभावमाशङ्क्य—स्वसंयोगेनेति । अधिकदुःखं विधातुमित्यर्थः । अथच पलाशकर्बुरयो राक्षसरूपार्थाभेदात् पलाशानां कर्बुरत्वकरणं सिद्धसाधनमेव तथापि पूर्वं तद्रूपत्वे अप्रामाण्यज्ञानेन पुनरपि तत्कृतमिति भावः ॥ ३०१ ॥

काचिन्नायिकावस्थां प्रियायाऽऽवेदयति—

**कल्याणप्रकृतिरयं सुन्दर ! तस्यास्त्वयि प्रणयः ।**
**मदनानलतापादपि न क्वचिदपकर्षमावहति ॥ ३०२ ॥**

कल्याणी प्रशस्ता प्रकृतिर्यस्य । रमणीयविषयकत्वात् । पक्षे

कल्याणं सुवर्णं प्रकृतिर्यस्य । तदुपादानकस्य तस्यापि (१)तद्रूपत्वाक्षेपात् । तदुपादानकस्य उपादानवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्तानियमात् । सुवर्णस्यात्यन्ताग्निसंयोगेऽप्यनपचयादनुरागस्यापि तथात्वे न हानिरिति भावः ॥ ३०२ ॥

कस्याश्चित्सौभाग्यं सूचयन्ती काप्याह—

**कान्तस्य कुन्तलान्दरासिन्दूरपरागराञ्जितान्वीक्ष्य ।**
**अनुमितबालानिधुवनविपर्ययाभिः सखीभिरुच्छ्वसितम्॥**

हेत्वन्तरविरहप्रमास्वीकारेण नायककुन्तलेषु नायिकासीमन्तसिन्दूरानिपतनस्य पुरुषायितमन्तरेणानुपपत्तेस्तदनुमानमित्यर्थः । तत्स्वरूपं तु इयं स्वकान्ते कृतपुरुषायिता नायककुन्तलवृत्तिसिन्दूरनिपातना(धायि)सीमन्तकत्वादिति बोध्यम् । नायकानुरागविषयत्वज्ञानेन सखीनामानन्दः ॥ ३०३ ॥

कश्चिद्दोषगर्हामाह—

**कार्ये नितान्तनिन्द्ये निबन्धनं केवलं भवति दोषः ।**
**मिथ्याभावे साध्ये जगतो हेतुः किल जडत्वम् ॥३०४॥**

निन्द्यकार्यं दोषेणैव भवति । यथा जडत्वेन प्रपञ्चमिथ्यात्वम् । जडत्वस्य दोषत्वात् । मिथ्यात्वस्यापि निन्द्यत्वादिति भावः । अथवा कश्चित्तत्त्वविदाह । अतिनिन्द्ये वधहेतौ विहितनिषिद्धे कार्ये दोषो मिथ्याज्ञानमेव हेतुः । यतो जडत्वेन हेतुना प्रपञ्चस्याऽसत्त्वं सिध्यति । तथाच कर्मानुष्ठानादिकं सर्वमविद्याविलसितमेवेति भावः । विमतं मिथ्या जडत्वात् शुक्तौ रजतवत् । इति प्रयोगः । मिथ्यात्वं प्रतिपद्यमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । जडत्वमस्वप्रकाशत्वमिति वेदान्तविदः॥३०४॥

(१) अनलसंयोगेऽप्यनुच्छिद्यमानत्वस्याक्षेपादित्यर्थः ।

काचिन्मायाचारो मायिनि वर्तनीय इति न्यायेन सखीमाह—

**काममतिचित्ररूपः सुरभिरयं तावदप्यरस एव ॥**
**कथमत्र क्रियतां सखि! भावय नैसर्गिकः स्नेहः ॥३०५॥**

चित्रमद्भुतजनकं रूपं सौन्दर्यं यस्य। पक्षे चित्रत्वं नानारूपवदवयवारब्धावयविवृत्तिविजातीयरूपत्वम् । सुरभिः=सुगन्धिः कमनीयश्च । अरसः=अतिप्रेमरतत्वादधमशीलः। पक्षे रसपदस्य भावप्रधानत्वात् (न विद्यते) तन्निमित्तं जलत्वं यत्र तथा । ततश्च स्नेहस्य सङ्ग्रहजनकगुणविशेषस्य जलमात्रगुणत्वात् अन्यत्रासम्भवः । अतोऽत्र नैसर्गिकः प्रत्याख्यानभावेऽप्यभिन्नः प्रणयः कथं स्यादिति भावः ॥ ३०५ ॥

कश्चित्प्रियामाह—

**कारीरीं सुषमां तव वहन्ति हारे हरिन्ति रत्नानि ॥**
**अत एवेह पयोधरसमुन्नतिर्भवति रसहेतुः ॥ ३०६ ॥**

"पालाशो हरितो हरित्"इत्यमरः । करीराणामियं कारीरी तद्वृत्तिहरितत्वसजातीयत्वात् तादृशीं सुषमां वहन्ति। "वंशाङ्कुरे करीरोऽस्त्री" इत्यमरः । पक्षे सुष्ठु समां=साङ्गाम् । कारीरीम्=इष्टिविशेषम् । "कारीर्या वृष्टिकामो यजेत" इति विहिताम् । पयोधरः=स्तनो मेघश्च । रसः=शृङ्गारो जलं च । कारीर्यापि वृष्टिप्रतिबन्धकनिरासे जलं वर्षतीत्यर्थः ॥३०६॥

कोऽपि नायिकामाह—

**कालीयकधूमेनाप्युपस्कृता या विशेषसंसेव्या ॥**
**कबरीकलिन्दजेयं वहति विजातीयमेव रसम् ॥३०७॥**

कालीयकं=सुगन्धिविशेषः । तद्धूपेन संस्कृता कबरी विशेषेण सेवनीया भवति । प्रसिद्धकालिन्दी तु कालीयकाख्य-

सर्पविषानलधूमयोगेन असेव्याभूत् । अतोऽस्यां विलक्षणरसयोगो युक्त इति भावः । "नागे कालीयकोऽपि च" इति द्विरूपकोषः ॥ ३०७ ॥

काचित्सङ्केतस्थानं सूचयन्ती सखीमाह--

**कालिन्दीयं सहचरि ! तमालनीलायमानतीरान्ता ।**
**कैवर्तकन्यकायां पराशरो यत्र रतिमापत् ॥ ३०८ ॥**

(नीलायमानेति) तीरान्तस्य लताघनत्वेन निबिडत्वसूचनम् । तीरस्य वर्षासु जलाहृततया कथं तत्र सङ्केत इत्यत उक्तम्--अन्तेति । यत्र पूर्वं तीरमासीत्तत्र तथात्वेऽपि तत्समीपदेशे तद्योतनम् । यदि जलानुपेतदेशमात्रं तीरपदेन लक्ष्यते तदान्तपदं स्वरूपार्थकम् । "अन्तशब्दादकारान्तात्" "प्रियपान्थमनुव्रजे"(?) इत्यादौ स्वरूपपरत्वस्य भाष्ये दर्शनात् । तथा च यत्र तादृशसंयमवतः पराशरस्यापि मनःक्षोभोदयादगम्यागमनं जातं तत्रान्येषां का वार्तेति भावः ॥ ३०८ ॥

अकस्मादेव नायिकान्तरसंसर्गिणि प्रिये कुपितां नायिकां सखीदमाह-

**कालवशेन विपक्षे वृत्तिरभूत्प्रियतमस्य यदि तस्य ॥**
**तदपि न सुभ्रु ! तथाविधसम्बन्धेनेति माविषदः॥३०९॥**

तथाविधेन=त्वदपेक्षोत्कर्षवत्ताज्ञानपूर्वकेण । ततश्चाकस्मात्तथाभूतेऽपि तस्मिंस्त्वय्येव दृढमनुरक्ते विषण्णा माभूः । यथा वह्निमान् धूमादित्यादौ संयोगसम्बन्धेन वन्ह्यभाववति काले कालिकसम्बन्धेन धूमस्य वृत्तित्वेऽपि तथाविधेन हेतुतावच्छेदकसम्बन्धेन तस्मिन्नवृत्तेर्न व्यभिचारस्तथा । साध्याभाववति हेतुतावच्छेदकसम्बन्धेन (हेतोः) वृत्तिरस्यैव व्यभिचारपदार्थत्वादिति भावः ॥ ३०९ ॥

काप्यभिसारादागत्य सखीमाह—

कापि लता सखि सेवनमात्रेण परं प्रसूयते श्रेयः ।
प्रकृतेः प्रपञ्चहेतोर्बन्धः पुरुषस्य यत्र गुणभूमेः ॥३१०॥

कापि=परमाश्चर्यजनिका । लता=वेतस्यादिः । स्वस्य परिशीलनेन परममाल्हादं जनयति । यस्यामधिकरणभूतायां प्रपञ्चस्य प्रियमिलनानुकूलव्यापारसमुदायस्य हेतोः कारणभूतायाः अत एव प्रकृष्टायाः कृतेर्यत्नात् गुणानां भूमेराश्रयस्य पुरुषस्य नायकस्य बन्धः स्ववशीकरणं भवति । अथच कपिलोक्तत्वात्कापिलं साङ्ख्यं तज्जानन्ति कापिलाः । तद्भावः । (सेवनमात्रेण=) स्वज्ञानमात्रेण । परं मोक्षलक्षणं श्रेयः सूते । गुणानां सत्त्वरजस्तमसां भूमेः स्थानात् । प्रपञ्चस्य जगतो हेतोः । एतादृश्याः प्रकृतेः=अव्यक्तात् पुरुषस्य=ईश्वरस्य बन्ध इव बन्धो भवति । तत्र प्रकृतिर्गुणत्रयवती मूलकारणं भवति । ईश्वरस्य नाऽपि बन्धो नापि मोक्षः । किंतु विवेकाग्रहमात्रम् । तदुक्तम्—

"तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥"

( सां० का० ६२ ) इत्यर्थः ॥ ३१० ॥

दूती कस्याश्चिदवस्थां नायकाय वदति—

काञ्चन दशामुपेता भवद्वियोगानलज्वलिता ॥
शैवालनिकषलग्ना सा रागाधिक्यमाचष्टे ॥ ३११ ॥

काञ्चन=विशिष्य निर्वक्तुमशक्यदुःखजनिकाम् । अथच काञ्चनस्य सुवर्णस्य दशामिति समासः । शैत्यार्थितया शैवालयोगः । एतादृशतयाऽनुरागोत्कर्षं प्रत्याययति । सुवर्णमपि वह्नितप्तं निकषोपलसंयोगात्स्वरागं प्रकाशयतीत्यर्थः ॥ ३११ ॥

कस्यांचिदपकृष्टगुणायामासक्ते नायके काप्याह--

**कारणमदृष्टमेव प्रणये गुणराशिरन्यथासिद्धः ॥**
**इति हतविधिना सहचरि ! वैफल्यमनायि गुणसृष्टिः ३१२**

क्वचिद्गुणवत्यप्यननुरागात्क्वचित्तदभाववत्यनुरागोदयाच्चान्वयव्यतिरेकव्यभिचारेण गुणानां नानुरागहेतुत्वम् । न चानुरागविशेषे एव तद्धेतुत्वं स्यादिति वाच्यम् । निर्गुणविषयकस्थलीयावश्यकल्प्यादृष्टविशेषकारणतयैव तस्यान्यथासिद्धेः । अन्यथा घटविशेषे रासभादेर्हेतुत्वापत्तेरिति भावः । यद्वा काचिद्न्यासक्तवल्लभाऽदृष्टमात्रेणानुरागोत्पत्त्या स्वस्य गुणाभावमाशङ्कमानां कांचिदिदमाह ॥ ३१२ ॥

कश्चिदत्युदारहृदय आह--

**कार्मुकवद्धृतजीवा अपि ते चैतन्यविरहिता एव ॥**
**कोटिजुषामपि येषामासक्तिर्मार्गणत्यागे ॥ ३१३ ॥**

धृतजीवाः=जीवन्तोऽपि । आत्मविशेषगुणजनकात्मनःसंयोगो जीवनमिति वर्द्धमानः । पक्षे धृता जीवा मौर्वी येन । चैतन्यविरहः सत्कार्यरहितत्वात् । पक्षे स्पष्टम् । कोटिः=तत्सङ्ख्यावच्छिन्नद्रव्यम् अग्रं च । मार्गणाः=याचका बाणाश्च । त्यागः=अनादरः प्रक्षेपश्च । "मार्गणो याचके शरे" इति विश्वः ॥३१३॥

कास्यांचिन्मृदुप्रकृतावपरज्य तीक्ष्णस्वभावायामनुरक्ते नायके काप्याह--

**काठिन्यं मृदुता वेत्येतदाकिञ्चित्करं द्वितयम् ॥**
**स गुणोऽन्य एव येन प्रविशत्यन्तर्बहिर्गतोऽप्यर्थः ३१४**

काठिन्यं नानुरागप्रतिबन्धकम् मृदुत्वं न तज्जनकमित्यकिञ्चित्करशब्दार्थः । गुणः=प्राग्भवीयसंस्कारादिः । अन्तःप्रवि-

शति=अनुरागविषयीभवति । अथच पाषाणकुसुमादौ प्रतिबिम्बानुदयात् कठिनमृदुत्वानादरेण स उज्ज्वलत्वरूपो गुणोऽन्य एव । येन बहिःपदार्थोऽपि तत्र प्रतिबिम्बितो भवतीत्यर्थः । स्वच्छद्रव्याभिहतं चक्षुः परावृत्य बिम्बमेव गृण्हातीति शास्त्रविदः ॥ ३१४ ॥

कश्चिदुत्कण्ठितः प्रियामाह--

**काश्मीरेण तुषारक्षितिधरसंयोगकुतुकमनुभूय ॥**
**लब्धं स्तनसङ्गात्ते कनकाद्रिस्पर्शसौख्यमपि ॥ ३१५ ॥**

कुङ्कुमस्य हिमवत्संयोगोपपादकं काश्मीरेति पदम् । अङ्गरागाय कुङ्कुमेन कुचयोः स्पर्शेन सुमेरुस्पर्शकौतुकमप्यनुभूतमित्यर्थः। अत्र कुचस्पर्शेन सुमेरुस्पर्शजन्यविजातीयसुखानुपपत्त्या तयोस्तत्तादात्म्यं ध्वन्यत इति रूपकालङ्कारध्वनिः । एतेन त्वत्कुचपरिरम्भेणैव स्वर्गसुखानुभवो भवतीति व्यङ्ग्यम् ॥ ३१५ ॥

काचित्खण्डिता नायकमाह--

**कान्तारतोपलब्ध्या दुर्दर्शं वहसि विग्रहं यदपि ॥**
**सन्ततमनन्यगतिकास्त्वामवगाहामहे तदपि ॥ ३१६ ॥**

कान्ताया इष्टनायिकाया रतस्य प्राप्त्या ईर्ष्यया दुर्दर्शत्वम् । अथच कान्तारत्वं दुर्गत्वम् । "कान्तारं वर्त्म दुर्गमम्" इत्यमरः। यथा मार्गान्तराभावे दुर्गमार्गेणापि सञ्चरन्ति तथा नायकान्तरगमनानर्हतया त्वय्येव रज्याम इति भावः ॥ ३१६ ॥

कश्चित्सदसतां स्वभावमाह--

**कालागुरुरतिदाहे सौरभमुद्गिरति सारसमदाहे ॥**
**उभयत्रापि सिताश्मो न कदापि सखे ! पुनः काष्ठम् ३१७**

कालागुरुर्दाह एव सौरभं प्रकाशयति (सारसं=पद्मं स्वदाह

एवातस्य दाहे रम्यगन्धाभावात् । उभयत्रापि=दाहे तदभावे च । "सिताभ्रो हिमवालुका इत्यमरः" । कर्पूरस्य दग्धस्यापि सौरभातिशयदर्शनात् । काष्ठपदं सुगन्धव्यतिरिक्तपरम् । अथच कालो मलिनाचारः अगुरुर्लघुहृदयश्च पीडनादेव द्रव्यादि ददाति । पद्मवत्कोमलहृदयस्तु स्वयमेव । एवं पूर्वार्द्धेन सदसतोः स्वभावमुक्त्वोत्तरार्द्धेनात्यन्तसदसतोराह । अतिकारुणिको हि कर्पूरवद्विशदचरितो विपदि सम्पदि वा परोपकारमेव करोति । काष्ठवत्कठिनस्तु नोभयत्रापीति भावः ॥३१७॥

काचित्खण्डिता धृष्टनायकमाह—

**कालिकया स्वयमेव त्वदाननं सुभग! सम्यगाक्रान्तम् ॥**
**वाचोयुक्तिपटुत्वं तवेति किंनाम तच्चित्रम् ॥ ३१८ ॥**

कालिका=नयनचुम्बनलग्नाञ्जननिबन्धनं श्यामत्वम् । वाचोयुक्तिरित्यत्र "वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु" इति अलुक् "वाचोयुक्तिपटुर्वाग्मी" इत्यमरः । कृतापराधस्य तदुन्मार्जनोपायावश्यकत्वात् । अथच यस्य मुखे कालिका सर्ववाङ्मयजननी देवी सन्निहिता भवति तस्य वाचोयुक्तिपाटवे किमाश्चर्यमित्याशयः ॥ ३१८ ॥

(कामनायकं) कश्चिद्विषयान्तराद्विविच्याह—

**किमपि कमनीयतायाः कवितानां सुभ्रुवां च वैजात्यम् ॥**
**हृदयानि तदवगाहात्तदितरविषयान्निवर्तन्ते ॥ ३१९ ॥**

किमपि निर्वक्तुमशक्यत्वेऽपीक्षुक्षीरमाधुर्यादिनिष्ठवैजात्यवदनुभवसिद्धतया दुरपन्हवं कमनीयतानिष्ठं वैजात्यमस्ति । काव्यविशेषाणां स्त्रीविशेषाणां च विजातीयकामनीयकावगाहनेन मनसो विषयान्तरव्यावृत्तेः । रसस्य क्षणिकभावमयत्वेऽपि धारावाहिके-

च्छया पुनःपुनस्तस्यैवावगाहनमिति। विषयान्तरे च तथा नियमाभावात्। तेन सर्वज्ञानस्यैव स्वविषयेतरविषयाविषयकत्वात्कोऽत्र विशेष इति शङ्कानवसरः ॥३१९॥

काचित्कुलटायाः सखीमाह—

कीचकवृन्दं सहचरि! भीमेन ज्वलनतेजसा दग्धम्॥
येनाकारि विहाराकाङ्क्षा निभृतैव कान्तायाः॥३२०॥

महता ज्वलनमयेन तेजसा वंशवनं दग्धम्। येन नायिकाया अभिसरणं गुप्तमेव स्थापितमिति विवक्षितार्थः। वह्निसदृशप्रभावेन भीमसेनेन कीचककुलं नाशितमनीत्या येन द्रौपद्याः सम्भोगेच्छा विहितेति यथाश्रुतार्थः। इदं च विराटपर्वणि प्रसिद्धम्। तथाच स्थानान्तरमन्विष्यतामिति भावः॥३२०॥

काचिद्विरहिणी वर्षासु सखीमाह—

कीलालसत्तयापि प्रत्यक्षविशेष्यधूमयोनितया॥
किं नेह सिध्यति घनानेहसि तादात्म्यमनलस्य॥३२१॥

कीलालं जलं तस्य सत्तया। प्रत्यक्षविषयो धूमयोनिर्मेघो यत्र तद्भावेनापीत्यपिर्भिन्नक्रमः। मेघभावस्यान्यदापि प्रत्यक्षात् विशेष्यधूमयोनितयेति। पक्षे "वह्नेर्द्वयोर्ज्वालकीलौ" इत्यमरः। कीलाभिर्लसत्तया दीप्यमानत्वेन प्रत्यक्षगम्यधूमजनकत्वेन चेत्यर्थः। तयोस्तादात्म्यसम्बन्धेन वह्निव्याप्यत्वात्तद्वति वह्निभेदसिद्धिर्युक्तेत्यर्थः॥३२१॥

कश्चिदसतीमाह—

किं कूर्मेश्वर सुचिरं कुलाचलाध्वानमेवमतिलङ्घ्य॥
स्वयमीश्वरेण जगतां सुरापगे! शिरसि निहितासि ३२२

कुलस्य अचलमविच्छिन्नं पारम्पर्यागतमध्वानमाचारमपहाय।

पक्षे कुलाचलस्य हिमाद्रेर्मार्गमतीत्य। सुरां पिबतीति सुरापो दुराचारः तं गच्छतीति सुरापगा तादृशीति सम्बुद्धिः। केनाचिन्महता समादृतासि। अथ च सुराणामापगा गङ्गा जगदीश्वरेण शिवेन शिरस्यारोपितेति भावः॥ ३२२॥

कस्याश्चित्सौभाग्यं सूचयन्ती काप्याह—

**कुचयोर्दत्तेऽर्द्धचन्द्रस्पर्शिनि वैमुख्यमर्हमेतस्याः॥**
**चित्रं प्रतियुवतीनां तद्व्यतिरेकेऽपि यत्तदभूत्॥ ३२३॥**

अर्द्धचन्द्रो=नखक्षतविशेषः प्रागुक्तहस्तविशेषश्च। वैमुख्यं=वृत्तत्वं पराङ्मुखत्वं च। तद्व्यतिरेके=अर्द्धचन्द्राभावेऽपि। तत्=वैमुख्यम्। स्वास्मिन्नायकाननुरागमाशङ्क्य तासां वैमुख्यम्। अत्रार्द्धचन्द्ररूपवैमुख्यजातीयकारणाभावेऽपि तदुक्तेर्विभावना॥ ३२३॥

काचिन्नायकस्य सौभाग्यं सूचयति—

**कुलिशं मनस्तवेदं न यदप्यन्येन शक्यमादातुम्॥**
**तदपि विबुधाधिपेन स्वहस्तपरिवर्त्ति तेन कृतम् ३२४**

कुलिशं काठिन्यात्। आदातुं=स्वस्मिन् स्थिरीकर्तुं हस्तेन धारयितुं च। विबुधाधिपेन=परमविदग्धेन, देवराजेन इन्द्रेण च। स्वहस्तपरिवर्ति=स्वाधीनं स्वकरसंयुक्तं च। तथाच बहुषु समासज्य कुत्राप्यस्थिरीभूता त्वमत्रैव स्थिरा जातेति भावः॥३२४॥

काचित्प्रियानुरागादेव स्त्रीणां प्रतिष्ठा स्यादिति सूचयन्ती काप्याह—

**कुम्भप्रदेशमभ्रमुदायितस्य गरुत्मतो नखैर्भिन्नम्॥**
**गायन्ति वीक्ष्य देव्यः सौभाग्यं सत्यभामायाः ३२५**

"ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः। सत्यभामानुरोधेन पारिजातं जिहीर्षति भगवति तद्रक्षणार्थमुद्यते

इन्द्रे गरुडैरावतयोर्युद्धं प्रवृत्तं तदभिप्रायं पूर्वार्द्धम्। एतेन स्तनविपक्षतत्कुम्भविपत्त्या तासामानन्दोत्पत्तिः सूचिता। तदाह—

"गुप्तः साक्षान्महानल्पः स्वयमन्येन वा कृतः।
करोति महतीं प्रीतिमपकारोऽपकारिणः॥" ॥३२५॥

काचित्प्रातर्वर्णयति—

**कुरुवृन्दकन्दलरुचः किरणास्तरणेर्गवाक्षमार्गेण॥**
**प्रविशन्ति देवयुवतीविच्छेदाद्रुधिरस्रज इव॥ ३२६॥**

कुरुविन्दो=रक्तमणिः। युवतीशब्दो 'यु मिश्रण' इत्यस्य शतृप्रत्यये "उगितश्च"(४।१।६)इति ङीप्प्रत्यये साधुः। विच्छेदः=प्रियवियोगः श्लेषाद्गात्रभेदश्च। एवंच प्रियगाढालिङ्गनसम्पन्नाभेदतद्विभागलग्नशोणितत्वमुत्प्रेक्ष्यते(१)। एवं चात्राप्येषां प्रियविश्लेषहेतुत्वमिति व्यज्यते॥ ३२६॥

कश्चित्प्रियामाह—

**कुरुराज इव कटाक्षस्तवैष कर्णं समाश्रित्य॥**
**सुखसाध्यमेव विजयं मनुते सर्वाधिकमपीह॥ ३२७॥**

कुरुराजो=दुर्योधनः। कर्णं=श्रवणं राधेयं च। समाश्रित्य=तेन सह संयुज्य। पक्षे तमात्ममित्रीकृत्य। विजयं=वशीकारमर्जुनं च। "बीभत्सुर्विजयः कृष्ण" इति भारतात्। अर्जुनस्य सर्वाधिक्यं स्वरूपेण। जयस्य तु जेतव्योत्कर्षेण। सुखेन साध्यं=कार्यं विजेतव्यं च। उक्तं च भारते—

"दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव!।
भयमर्जुनसञ्जातं क्षिप्रमन्तरधीयत" इति॥ ३२७॥

---

(१) प्रियगाढालिङ्गनेन सम्पन्नो योऽभेदस्तस्य विभागो विश्लेषः।

काचिद्भावनोपनीतप्रियचुम्बनादिमुदितां वियोगिनीं सखीदमाह-

**कुवलयमुकुलसकुल्यं वरवर्णिनि! नयनयोस्तव द्वितयम् ॥**
**प्रियवदनसुधादीधितिचुम्बनमाख्याति काल्पनिकम् ३२८**

विशेषणेन दृष्टेर्मुकुलत्वसूचनम् । तदाह भरतः—

"स्फुरदाश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटान्विता ।
सुखामीलिततारा च मुकुला दृष्टिरिष्यते ॥"

"द्वयोः स्पर्शगन्धयोः" इति तत्प्रक्रमे **सङ्गीतमीमांसायाम्** । चन्द्रसम्बन्धेनैव मुकुलतौचित्यात् **सुधादीधितीति** । कुवलयपदमत्र कमलमात्रपरम् । नीलस्य चन्द्रविकासित्ववर्णनात् । एतेन तत्स्पर्शसुखेन नयनमुकुलत्वमप्युपपादितम् । प्रियवदनस्य तत्र कल्पिततया चुम्बने काल्पनिकत्वोपचारः । यद्वा काचित्प्रत्याख्यातानुनयां मानिनीं सखी प्राह । तथाच परमार्थप्रियमनादृत्य किमनेनेति भावः ॥ ३२८ ॥

काचिद्दुर्जनासक्तां कोऽप्याह —

**कुम्भीनसीसुतेन प्रतीरभूमिः पुरैव नेऽदूषि ॥**
**सम्प्रति वहसि तमन्तः कालिन्दि! त्वां कथमुपेमः ३२९**

कुम्भीनसी=मधुसुरस्त्री तस्याः सुतेन लवणनाम्ना राक्षसेन । तस्य यमुनातीरे मधुवने वास इति पुराणप्रसिद्धेः । तं=कुम्भीनसीसुतं कालियाख्यं नागम् । "कुम्भीनसी जनन्यां च लवणाख्यस्य रक्षसः । कुम्भीनसो विषज्वालाकुलदृष्टिभुजङ्गमे ।" इति विश्वः । तथाच लवणस्य तीरवासेऽपि तद्भयेनैव त्वमसेव्या आसीः । कालियस्यान्तर्वहने तु सुतराम् । अथच तत्प्रायेण क्रूरपुरुषे त्वद्गृहसमीपवर्तिन्यपि भयमासीत् । किंपुनरधुना तत्रैवानुरक्तायां त्वयीति भावः ॥ ३२९ ॥

काचिद्वर्षासु विरहिणीदशामाह—

कुटजैरपि निष्कुटजैरतिमात्रं सखि ! दृशौ प्रतप्येते ॥
संसर्गः सुखहेतुर्न खलु विरुद्धस्वभावानाम् ॥ ३३० ॥

"गृहारामास्तु निष्कुटाः" इत्यमरः । संसर्गश्चक्षुःसंयोगः । विरुद्धेति । दशाविशेषेण दुःखदस्वभावानाम् । अथच निष्कुटजपदेन कुटजत्वाभावोक्त्या कुटजत्वतदभावयोर्विरोधात्तथा । तथाच विरुद्धधर्मिणां सङ्गो दुःखायैवेति भावः ॥ ३३० ॥

कांचिदभिसारं गोपयन्तीं काप्याह—

कुञ्जरताश्रयिणी त्वं गमनोरुपयोधरैः कलिता ॥
अत एव पद्मिनीनामशेषमुन्मूलयसि मानम् ॥ ३३१ ॥

गमनस्यालसतया ऊरुस्तनस्य च नखपदाङ्कितत्वात् कुञ्जाधिकरणकं यद्रतं तद्वती त्वं (कलिता=) ज्ञाता । अथच गमनस्य करिगमनसादृश्यादूर्वोश्च तत्करसाम्यात्स्तनयोश्च तत्कुम्भसाम्यात् । कुञ्जरस्य भावः कुञ्जरता । तुल्यमन्यत् । गमनस्य प्राण्यङ्गत्वाभावान्नैकवद्भावः । पद्मिनीनां=स्त्रीणां नलिनीनां च । सौभाग्यातिशयात्स्त्रीमानोन्मूलनम् गजस्यापि नलिन्युन्मीलनं स्वभाव एव ॥ ३३१ ॥

काश्चित्प्रियामाह—

कुण्डलिनौ यदि कर्णावथ कञ्चुकिनौ स्तनौ जातौ ॥
स्यात्को नाम विशेषो जीवनहरणे तदा सुतनु ! ॥ ३३२ ॥

कुण्डलिनौ=गृहीतकर्णभूषणौ । कञ्चुकिनौ=परिहितचोलौ । एकेनैव जीवनहरणसम्भवादभावे वैजात्याभावाच्च किमिति द्वयमादधासीति रामणीयकातिशयसूचनम । अथच कुण्डलिकञ्चुकिपदयोः सर्परूपैकार्थवाचकत्वादेकेनापरं वैयर्थ्यमापद्यत एवं-

ति भावः ॥ ३३२ ॥

कश्चिद्दुर्लभां स्तौति—

**कुन्तलललिता काञ्चीपरिष्कृता रुचिरचोलासि ॥**
**कर्णाटमालवकुला सुतनु ! कथं दक्षिणा न स्याः ॥३३३॥**

दक्षिणा=विदग्धा दिग्भेदश्च । कुन्तलः=केशो देशविशेषश्च । काञ्ची=रसना तद्देशश्च । चोलम्=अम्बरं देशश्च । कर्णमटति प्राप्नोति तादृशी माला पङ्क्तिर्येषां तादृशानि बकुलानि तत्पुष्पाणि यस्याः तेषामवतंसीकृतत्वात् । पक्षे कर्णाटमालवौ देशौ तत्सम्बन्धि कुलं यस्याम् । एवंधर्मसाम्याद्दाक्षिण्यमुचितमेवेति भावः ॥ ३३३ ॥

कस्याश्चित्स्वैरिण्या आशयं कश्चित्तर्कयति—

**कुलटेतिपदमशक्यं पररूपेणैव संसाध्यम् ॥**
**इत्थमनुशिष्यमाणा स्मयतेस्म तिरोवलद्वदनम् ॥३३४॥**

कुलान्यटतीति शकन्ध्वादित्वात्पररूपे कृते कुलटापदासिद्धिरिति वैयाकरणाः । इयं तु कुलटेतिपदं परेण=लोकोत्तरेण, रूपेण=सौन्दर्येण, साध्यं संप्राप्यम् । पदेति शब्दपरत्वे तु साध्यं स्वविषयकशक्तिमत्कर्तव्यम् । अल्परूपायां सर्वानुरागाभावेन कुलटापदप्राप्त्यसम्भवादित्यर्थं बुद्ध्वा स्वानुभवसंवादेन हसितेति भावः ॥ ३३४ ॥

प्रथममेव नायकेन परित्यक्तां नायिकान्तरविरागिणि नायके तस्य स्वपरिग्रहमाशङ्कमानां काचित्काप्याह—

**कुर्वन्ति रिपुविपक्षाश्रयणं नैव स्वनामशक्तिभृतः ॥**
**श्रीभारत्यौ द्वे अपि निर्वासयतिस्म दुर्वासाः ॥३३५॥**

श्रीनिर्वासनप्रमाणं प्रागुक्तम् । भारतीतथात्वे तु श्रीहर्ष-

चरितप्रसिद्धं सङ्गृह्योच्यते—

दुर्वासा उपमन्युसंज्ञमुनिना सार्द्धं विवादं चरन्
साम्नो विस्वरतां चकार विहितं सभ्यैर्न किञ्चिद्भयात् ।
तिष्ठन्ती तु सरस्वती कमलभूपार्श्वे महासं व्यधात्
तत्क्रोधादथ तेन सा क्षितितलं नीता विधेर्लोकतः॥

श्रीभारत्योर्वैरं तु प्रायशः परस्परात्यन्ताभावसामानाधिकरण्यदर्शनात्सम्प्रदायसिद्धम् ॥ २३५ ॥

काञ्चित्प्रियामाह—

**कुन्दे तनुं निधत्ते वरवर्णिनि ! वीक्ष्यतां भ्रमरः ॥**
**त्वत्कुन्तलनीलिम्ना विजितो देहं जिहासुरिव॥२३६ ॥**

कुन्दपदं तत्पुष्पपरम् । पक्षे कुन्दसंज्ञस्तक्षणसाधनाविशेषः । त्वत्केशश्यामतया तिरस्कृतो निर्वेदेन देहत्यागमिच्छन्निवेत्यर्थः । एतेन तिरश्चामपि स्वपराभवे दुःखं भवतीत्यन्येषां कथं न स्यादिति सूचितम् । एवं चैतादृशोद्दीपनसमये मानत्यागं कथं नावहसीति व्यङ्ग्यम् । यद्वा मानिनीं प्रति प्रियस्योक्तिः ॥ २३६ ॥

काञ्चिदुपनायकार्थे दूतीदमाह—

**कुश इव कुमुद्वतीप्रियतमोऽयमिन्दुः समुल्लसति ॥**
**अस्य रुचिप्रकरोऽयं पुनरतिथिर्भूतले स्फुरति ॥ २३७ ॥**

कुशो=रामपुत्रः "कुमुद्वती कुशपत्न्यां कुमुदिन्यां कुमुद्वती" इति विश्वः । अतिथिः=अभिनवागतः। रुचीनां ज्योत्स्नानां प्रकरः समूहः। अथच अस्येति जन्यत्वं सम्बन्धः। रुचीनामिच्छानां प्रकरो यत्रेति प्रियत्वसूचनम् । "अतिथिः कुशपुत्रेऽपि कोपे प्राघुणिकेऽपि च" इति विश्वः ॥ २३७ ॥

काश्चिद्विरहस्य सर्वदुःखातिशयमाह--

**कुटिलादेकस्मादपि भवति भयं दुःसहं भुवने ॥**
**अष्टावक्रस्य गिरा गोपीभिरलम्भि वल्लभवियोगः ३३८॥**

कुटिलपदेन दुर्जनग्रहणम् । (दुःसहं=)लक्षणया भयान्तरापेक्षयाभ्यधिकं भयम् एकस्मादेव कुटिलाद्भवति । गोपीनां प्रियविरहदुःखं तु अष्टावक्रस्य वाक्याज्जातम् । एवंचैकवक्रमात्रसाध्यभयापेक्षया बहुवक्रसाध्यविरहस्थभयस्याधिक्यमर्थासिद्धमेवेति भावः । अष्टसु स्थानेषु तस्य वक्रत्वमिति नामिद्धिः । पूर्वजन्मन्यप्सरोविशेषैरष्टावक्रं प्रति भगवत्प्राप्त्युपायः पृष्टस्तस्य वैरूप्यं दृष्ट्वा हासश्च विहितः ततस्तेन तत्प्राप्त्युपायमुक्त्वा मम हास्यात्तद्विरहो भावीति कथितमिति पुराणविदः ॥ ३३८ ॥

कश्चिद्वसन्तागमं सूचयन्नाह—

**कुसुमशिलीमुखयोगं विदधानेनेह लोचने मधुना ॥**
**सरूपं स्मरस्य विशदितमन्तः करणे तमाचरतः॥३३९॥**

कुसुमानां शिलीमुखानां भ्रमराणां च संयोगं लोचने कुर्वता वसन्तेन । दर्शयतेति यावत् । ( पक्षे पुष्पमयबाणसम्बन्धं विदधत इति विभक्तिविपरिणामेन योज्यम् । ) कामेनान्तः करणे, मधुना च बाह्यकरणे तदाचरणात ( सरूपम् ) ॥ ३३९ ॥

काचिन्नायकस्याननुरूपनायिकासक्तिं द्योतयन्तीदमाह—

**(१) कुब्जायामनुरागो मधुद्विषा सखि ! समभ्युपेतो यः॥**
**सङ्घटत एव सोऽयं वामनरूपानुरूपतया ॥ ३४० ॥**

---

( १ ) का० रा० पु० पुस्तके इदं नास्ति । एतत्स्थाने—
कुत्सोद्भवमपि लोकं नियमादुपकुर्वते महोदाराः ॥
निर्जित्याप्यैलविलं रघुरपुपूरद्धि कौत्साशाम् ॥
इति पद्यं वर्तते ।

तच्छरीरावच्छिन्नतदनौचित्येऽपि शरीरान्तरावच्छिन्नतदनुरूपत्वादिदं युक्तमेवेति भावः । तुल्यमन्यत् । मत्प्रतिकूलमात्रार्थं तत्रासक्त इति भावः । यद्भरतः—

"वार्यते यत्र यत्रार्थे तं तमेव करोति यः ।

विपरीतनिषेवी च स वाम इति संज्ञितः" इति ॥ ३४० ॥

कश्चिदत्यन्तोद्धतां नायिकामाह—

**कूलङ्कषैः कलय मा केलिं कालिन्दि ! कल्लोलैः ॥**

**तालाङ्कहलाबेल्लनकवलगता लोकिनास्येव ॥ ३४१ ॥**

कूलं कषन्ति भजन्ति ते कूलङ्कषाः । "सर्वकूलाभ्रकरीषेषु कषः" ( ३।२।४२ ) इति खच् । एतादृशस्थले निरनुबन्धो माशब्द इति प्रामाणिकाः । "तालाङ्को मुशली हली" इत्यमरः आवेल्लनं तदाकर्षणं तद्रूपः कवलो ग्रासस्तदनुरोधेनैव गमनात् त्वदपकर्षदशाप्यस्माभिर्दृष्टैवेत्याशयः । यद्वा सङ्केतकुञ्जभङ्गकुपिता कापि वर्षासु यमुनां प्रत्येवाह ॥ ३४१ ॥

अस्थिररागनायकानादृता काप्याह—

**कूटतपनीयवच्च क्रमेण परिशीलनाद्गलितरागाः ॥**

**तेषां विशदतयापि स्फुरति न कश्चिन्मुदो लेशः ॥३४२॥**

कूटं कृत्रिमं तपनीयं सुवर्णम् । परिशीलनं= सहवासादि । पक्षे परिधानादि । रागः= स्नेहो वर्णश्च । विशदतया= स्फीतवेषतया विद्यादिमत्तया वा । पक्षे पूर्ववर्णापेक्षरूपापकर्षात्मकश्वेतत्वादिना रजतादिबुद्ध्यैव तद्ग्रहे न विषादः सुवर्णधियोपादाने तु पश्चाद्विसंवादेन दुःखं भवतीत्यर्थः । यद्वा किमिति कुत्राप्यनुज्ज्वलपरिच्छदे रक्तासीति वदन्तीं सखीं काप्याह । कृत्रिमसुवर्ण इवेति सप्तम्यन्ताद्वतिः । ( परिशीलनात् ) विषय-

भोगात् ये तेषु गलितरागाः=अस्थिरत्वाद्यालोचनात्तदिच्छाहीनाः। तेषां (विशदतया) विशिष्टं मानुषादिसुखापेक्षयोत्कृष्टमिन्द्रब्रह्मलोकादिभवं शं सुखं ददातीति कप्रत्ययः तद्भावेनापि प्रीतिर्न भवति। तेषामपि क्षयित्वाविशेषात्तद्दातर्यपि न रज्यन्त इति भावः ॥३४२॥

कस्यचिद्विरहाग्नाधिकावस्थां दूती तं प्रत्याह—

**(१)कृशतामपि संस्पृशति प्रतीकजाते सुभग ! तस्याः ॥**
**अपचीयमानतत्तत्स्वस्वावयवप्रभास्ति समवेता॥३४३॥**

सुभगेति स्वविषयकसमुपधायकत्वसूचनम् । "अङ्गं प्रतीकोऽवयव" इत्यमरः। जातं=समूहः। यस्य यस्यावयवस्यावयवा गतास्तत्तन्निष्ठप्रभा तत्तदवयवेषु सङ्क्रान्ता न तु गतावयवैः सह नष्टेति न कान्त्यपकर्षसम्भावनेति भावः॥३४३॥

कश्चित्प्रियामाह—

**कृतमाला कण्ठतटी दृगच्छगोला कवर्यसौ कृष्णा ॥**
**कुचभूः सचन्द्रभागा न कथं स्यात्त्वयि रसाधिक्यम्॥३४४**

(कृता) स्थापिता माला यस्यां,कृतमालाख्यनदी च। रूपसमतयोपस्थितयोर्द्वयोरभेदान्वयबोधात्। एवं सर्वत्र। अच्छो विशदो गोलो यस्याः। एतेन पिङ्गलत्वादिनिरासः। अच्छा चासौ गोला चेति। गोला गोदावरी। सा यस्यामिति वा। आद्ये नदीदृशोरन्त्ये नदीगोलकयोश्चाभेद इति विशेषः। कृष्णा=श्यामवर्णा सरिद्वि-

---

(१) का० रा० पु० पुस्तके इदं नास्ति। एतत्स्थाने—
कृत्रिमरागविशङ्कां क्षणमात्रेणापनेतुकामेव ।
कलयत्यग्निशिखान्वयमियमम्बुजलोचना हृदये ॥
इति पद्यं वर्तते ।

शेषश्च । चन्द्रस्य कर्पूरस्याङ्गरागे भागो यस्याः । चन्द्रभागा- ख्या नदी तत्सहिता च । रसः=शृङ्गारो जलं च ॥ ३४४ ॥

कश्चिद्वल्लभामाह—

**कृष्णोऽर्जुनश्च लोके सुन्दरि ! कर्णं तिरस्कुर्वन् ॥**
**आकर्ण्यते किरीटी त्वदपाङ्गो दृश्यते नान्यः ॥३४५॥**

(कृष्णोऽर्जुनश्च) श्यामरूपः श्वेतवर्णश्च । अनेन श्यामश्वेतक- टाक्ष उक्तः । पक्षे तदुभयसंज्ञः । तथाच भारतम्—

'अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः" ॥

कर्णं=श्रवणं राधेयं च । एकावच्छेदेन विरुद्धगुणद्वयवतोऽप्रसिद्ध्या दर्शनश्रवणासम्भवादिति विरोधपक्षाभिप्रायः ॥३४५॥

बहुभार्येण केनचिद्भार्यात्वमुद्देश्यतावच्छेदकीकृत्य कस्यचिद्वस्तुनः प्रेषणेऽपि तत्प्रियायामेव पर्यवसानात् स्वस्या बहिर्भावं कापि कस्याश्चिद्वदति—

**केषाञ्चित्सङ्ग्राहकमध्येऽपि समीयुषामर्थात् ॥**
**न भवति फलोपधानं तदसाधारणनिबन्धनं किमपि ४६**

स सङ्ग्राहकधर्मोऽसाधारणं निबन्धनं निमित्तं यत्र । तादृशं फलोपधानं फलसम्बन्धो न कश्चिद्भवति । अथच अ- जादिप्रत्याहारान्तर्भूतानामपि णकाराद्यनुबन्धानामच्प्रयुक्तका- र्याणि न प्रवर्तन्ते "उणादयो बहुलम्" (३।३।१) इत्यादिप्रयो- गादिति । इदं च तेषां संज्ञासम्बन्धपक्षाश्रयेणोक्तम् । तेषां सं- ज्ञैव नास्तीति पक्षद्वये अच्त्वाद्यनवच्छिन्नत्वात् ।

"प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।

आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" । इति वार्त्तिकोक्तेः ॥ ३४६ ॥

स्वार्थसाधनपरस्वभावमनुभूय कोऽप्याह—

**केवलमात्मार्थपराः प्रकृतेरुल्लङ्घयन्ति वचनादि ॥**
**इति परिभाषणमर्हं प्राय इति त्वनुचितं नियमात् ३४७**

"स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि" इति-शाब्दिकपरिभाषा । तदर्थस्तु—'प्रकृत्यर्थातिरिक्तार्थानवबोधका ये प्रत्ययाः क्वचित्तदन्तानां लिङ्गान्यन्यथापि भवन्ति । यथा मुक्तापदात्स्वार्थे ठकि मौक्तिकमिति क्लीबम्' इत्यादि । अत्र त्वन्यथा योज्यते । केवलं परार्थतात्पर्यराहित्येन स्वार्थसाधनतात्पर्यकाः ( जनाः ) प्रकृतेः ( स्वभावात् ) वचनादि=स्वकार्यसिद्धिपूर्वकालीनम् उक्त्यादि,(उल्लङ्घयन्ति) स्वकार्यसिद्ध्युत्तरं त्यजन्ति इत्येतदर्थकं परिभाषणं युक्तमेव । अपिशब्देन क्वचिदनतिवर्तनस्याप्युक्तः प्राय इति त्वयुक्तम् । नियमात् । नियमेनैव प्रतिज्ञात्यागात् । अनियमबोधकप्रायोऽर्थकस्यापिपदस्यानुचितत्वादिति भावः ॥ ३४७ ॥

कस्याश्चित्प्रियानुरागमुदिता सखीदमाह—

**केशकलापः प्रकरं समुद्गिरन्कुन्दमुकुलानाम् ॥**
**प्रियपरिरम्भानन्दाद्धातितरां बाष्पविप्रुष इवोज्झन् ४८**

तस्य ( केशकलापस्य ) श्लथतया गुम्फनसमयदत्तकुन्दमुकुलपतने शरीरतदवयवबहिर्भूतानां केशानामत्यच्छेदकृतासम्बधेन सुखाद्युत्पत्त्याश्रयत्वेऽपि तदुत्प्रेक्षया यत्र तेषामपि तथा वृत्तं तत्र तस्यां कियान्नाम प्रमोदो नाविर्भवेदिति व्यज्यते । "कलापाद्याः कचात्परे" इत्यमरः । कचाधिकशब्दोत्तरवर्तिनः

कलापादिशब्दाः कबरीवाचका इत्यर्थः ॥ ३४८ ॥

कश्चिच्छरदं वर्णयति—

केदारे कलमानां पलाशवदना शिरीषगरुद्देषा ॥
राजी भाति शुकानां विहितऋतुत्रयसमाजेव ॥३४९॥

पलाशं किंशुकपुष्पं तत्तुल्यरक्तवदना । शिरीषरजोवत् हरितवर्णा गरुतः पक्षा यस्याः । अत्र पलाशशिरीषाभ्यां विशेषणाभ्यां वसन्तग्रीष्मयोः विशेष्यशुकांशेन च शरदो लाभादृतुत्रयसमाजसिद्धिः । एतेन तस्या उद्दीपकत्वातिशयव्यञ्जनम् । यद्वा कस्याश्चित्सङ्केतस्थानसूचनमेतत् । एवंच यत्र विरुद्धानामपि समाजस्तत्र परस्परानुरक्तानां कथं न स्यादिति भावः ॥ ३४९ ॥

अनुनयमगृहीत्वैव नायिकायाः परावर्तनेनाननुरागशङ्किनं नायकं सखीदमाह—

केतकशिखया स्तनयोर्मूर्धनि परिवर्तनेन निपतन्त्या ॥
त्वत्परिरम्भोज्झितयोस्तयोर्वितीर्णोऽर्धचन्द्र इव ॥३५०॥

सरभसपराङ्मुखीभवनेन कर्णावतंसीकृतकेतकदलस्य स्तनयोर्निपतनं त्वदाश्लेषसुखवञ्चितयोस्तयोस्तिरस्काराय दत्तोऽर्द्धचन्द्र इवेत्यर्थः । एवं चाननुरागशङ्का न युक्तेति व्यङ्ग्यम् ॥ ३५० ॥

अविचार्यैव प्रवर्तमाने कुत्रचित्कश्चित्पुराणवृत्तमनुवदति—

केशी हत इति भवता किमुपक्रान्ता सुकेश्यपि निहन्तुम्॥
इतरजनस्येवेयं कृतिरुचिता कथमविदितार्था ॥ ३५१ ॥

केशी दैत्यविशेषः । शोभनाः केशा यस्याः । अथच शोभनः केशीति भ्रमेणास्याः स्वविप्रलम्भेन वधो न युक्तः । तथा-

चार्थमपर्यालोच्यैव न क्वचिदपि प्रवर्तितव्यमिति ध्वनिः ॥३५१॥

काचिदन्यासक्तं नायकमाह—

**कैतवमासाद्य पुरा सुभगाभ्युपयासि दासनामधुना ॥**
**मायासमाश्रयतया भवति विशुद्धात्मना भवतः ३५२**

पूर्वं शठत्वं कृत्वा पश्चात्तवैव दासोऽस्मीत्युक्तावपि मायाविनस्तव कथं विशुद्धत्वमिति भावः। अथच "ब्रह्म दासा ब्रह्मेमे कितवा उत" इत्याथर्वणश्रुत्या कितवदासयोरपि ब्रह्मरूपत्वोक्तेर्मायाश्रयत्वस्य शुद्धब्रह्मण्येव स्वीकारात्। "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला" ( सङ्क्षे० शा० अ० १ श्लो० ३१९ ) इति ध्वनिः ॥ ३५२ ॥

कश्चित्पक्षपातस्वभावमाह—

**कैरव एव सुधांशुर्वहति प्रणयं रविः कमल एव ॥**
**गुणमात्रोपादानव्यसनिन उभयत्र भृङ्गास्तु ॥ ३५३ ॥**

पक्षानुरोधिनां व्यक्तिविशेषावच्छेदेनैव भेदो भवति, गुणमात्रग्राहिणां तु उपादेयधर्मवत्त्वावच्छेदेनैवेति भावः। उभयत्रैवकाराभ्यां कमलकैरवव्यवच्छेदः ॥ ३५३ ॥

काश्चिदभिसारायाङ्गसंस्कारमाचरन्तीं सखीदमाह—

**कैवल्यमेव परमप्रमोदजननं न तु प्रपञ्चोऽपि ॥**
**इति परमार्थविदां धीः सुतनु! प्रियमेहि शुद्धैव ॥३५४॥**

कैवल्यं=भूषणाङ्गरागादिविरहेण स्वरूपमेव, परमाल्हादहेतुः तद्ग्रहणाधीनविलम्बविरहेणोत्कठाधिक्यपर्यवसानात्। प्रपञ्चो=भूषणाद्युपादानं तु न तथा। तन्मान्द्यसूचकत्वात् अङ्गदर्शनप्रतिरोधित्वाच्च इति रसतत्त्वज्ञानाम् (सिद्धान्तः)। अथच कैवल्यं=मुक्तिरेव दुःखासंवलितानन्दहेतुः। "मुक्तिः कैवल्यनिर्वाण" इत्य-

मरः । कैवल्यपदमत्राविद्याध्वंसपरम् । प्रपञ्चः संसारस्तु न तादृगिति तत्त्वज्ञानां सिद्धान्तः । एतेन त्वं विनैव भूषणादिकं ब्रह्मस्वरूपानन्दतुल्या तद्वती तु प्रपञ्चानन्दसमेति शुद्धाया एव रमणीयत्वातिशयध्वनिः ॥ ३५४ ॥

कस्याश्चिदर्थे सखी नायकमाह—

**कैलासवञ्चितान्तोत्तुङ्गं तस्या महोज्ज्वलं हृदयम् ॥**
**मन्दोदरीप्रियेण त्वया प्रसह्योद्धूतं सुभग ! ॥३५५॥**

उत्तुङ्गं सदर्थनिरतत्वात् । पक्षे स्पष्टम् । महानुज्ज्वलः शृङ्गारो यत्र । पक्षे अतिश्वेतम् तेन । कैलासेनार्थादन्वयः । (तृतीयान्ताद्वतिः) कृशोदर्याः प्रियेण । अथच रावणेन । उद्धूतं=स्वासक्तीकृतम् उन्मुलितं च । तदारम्भात् । सुभगेति अनुरागयोग्यत्वव्यञ्जनम् ॥ ३५५ ॥

कोपेऽपि मामप्रसाद्यैव कथं स्प्रष्टुमिच्छसीति शङ्कमानां नायिकां कोऽप्याह—

**कोपकषायितमीक्षणमुदीक्षमाणेन पक्ष्मलाक्षि ! तव ॥**
**माणिक्यकर्णभूषणसङ्क्रान्तारुणिम निरणायि ॥३५६॥**

ईक्षणमिति प्रथमान्तम् । निरणायीति कर्मणोऽभिधानात् । उदीक्षमाणेनेत्यत्र त्वर्थादीक्षणस्यैव कर्मत्वम् । प्रशस्तं पक्ष्म यस्य पक्ष्मलं तादृशमक्षि यस्याः । तथाच कर्णालङ्कारकान्तियोगादौपाधिकमारुण्यमिति ज्ञात्वा तस्य कोपजन्यत्वं न गृहीतमित्यर्थः । सामान्यालङ्कारः ॥ ३५६ ॥

कश्चित्प्रियामाह—

**कोकविपक्षौ वक्षोरुहौ तवैतौ कुरङ्गाक्षि ! ॥**
**करजपदचन्द्रशकलैः संयुक्तौ यन्मुदं वहतः ॥ ३५७ ॥**

"कोकश्चक्रश्चक्रवाक" इत्यमरः । कोकस्य चन्द्रसंयोगेन विप्रयोगात् दुःखं भवति । अनयोस्तु नखक्षतार्द्धचन्द्रसंयोगात्सुखमेव । अतस्तद्विपक्षत्वं सादृश्येनेत्यर्थः । यत्कामशास्त्रम्-

"पञ्चमीं गतिमुपेत्य वीक्ष्यते स्थाणुवारिततुरङ्गवो यथा ।
कामुकावपि तथा स्मराहवे दन्तघातकरजान्न पश्यतः"

( र० र० सुरताधिकारे प० १० श्लो० ६५ ) ॥ ३५७ ॥

कश्चिन्मानिनीमाह—

**कोकिलकुलं कुहूरुतमाम्रेडयतीदमाम्रविपिनेषु ॥**
**मकरध्वजस्य सुहृदपि मलिनात्मसु को हि विश्रम्भः ३५८**

"कुहूः स्यात्कोकिलालापे दर्शेन्दुकलयोरपि" । इति विश्वः । "आम्रेडितं द्विस्त्रिरुक्तम्" इत्यमरः । कामसुहृत्त्वेन प्रसिद्धोऽपि कोकिलः कामसुहृच्चन्द्रविरोधिकुहूमनाह्वानं करोति । तथाच मित्रवैरिणोऽपि स्ववैरित्वात्तात्प्रियत्वमस्य कामसौहृदविरुद्धमेवेत्यर्थः ॥ ३५८ ॥

कश्चित्सुहृद्विपत्तावुल्लसतां निन्दामाह—

**कोकनदेऽपि निमीलत्युल्लासो भवति कोकनादानाम् ॥**
**दीर्घोत्तरपदभाजामपि भावोऽन्यः सरूपाणाम् ३५९**

"रक्तोत्पलं कोकनदम्" इत्यमरः । सायङ्काले तत्सङ्कोचात्तदानीं च विश्लेषदुःखेन कोकानां नादोदयो भवति । दीर्घयुक्तमुत्तरपदं येषां तादृशानां समानरूपाणां=बहुसादृश्ययुक्तशब्दानामपि अन्य एव भावः=प्रवृत्तिनिमित्तम् । तथाच किञ्चिद्वैसादृश्येनाप्यर्थभेदः । अथच अतिदीर्घं पदं स्थानं भजतां समानरूपाणां समधर्मणामपि अन्य एवाभिप्रायः । पदारोहे सत्यन्यथैव भवन्तीति भावः ॥ ३५९ ॥

अतिप्रसिद्धायामप्यननुरक्ते कस्यांचिदनुरज्यमाने नायके काप्याह—

को वेद वस्तुविभवं गिरिराजभुवोऽपि विप्रकृष्टेन ॥
वल्मीकभुवमवाप्य प्रोद्भूतिरलम्भि काव्येन ॥३६०॥

वस्तूनां=पदार्थानां, विभवं=शक्तिं, को जानाति। यतः पर्वताग्रभूमितोऽप्यतिदूरेण शुक्रेण वल्मीकभुवमासाद्य उदयः प्राप्तः। अथच कवित्वेन वल्मीकभुवं वाल्मीकिं प्राप्य उदयो लब्धः। पर्वतावधिकविप्रकर्षाश्रयशुक्राभिन्नत्वाद्यध्यवसितस्य काव्यस्य वल्मीकाभेदाद्यध्यवसितवाल्मीकिसकाशादुदय उक्तः॥ ३६०॥

कस्याश्चित्प्रियानुरागं काप्याह—

कौसुम्भवसनपिहितं बालावक्षोजमीक्षमाणाभिः॥
मुदितं कुङ्कुमपङ्कालेपभ्रान्त्या सपत्नीभिः॥ ३६१॥

कुसुम्भेन रक्तं कौसुम्भम्। "तेन रक्तं रागात्" (४।२।१) इत्यण्।

प्रातर्महारजतरञ्जितकञ्चुकेन
वक्षोजमावृतमुदीक्ष्य सरोरुहाक्ष्याः।
तत्रैव कुङ्कुमविलेपनमार्जनस्य
भावादसम्भुजिरिहानुमिता प्रियस्य॥

तथाच कुङ्कुमानुन्मार्जनेन तस्याः प्रियानुपभोगमनुमाय तासां प्रमोद इति भावः। एतेन भ्रमजन्यं सुखमचिरमेव स्था-स्यतीति सूचितम्॥ ३६१॥

तत्सौधगवाक्षाभिमुखमार्गेण सञ्चरन्नपि तयाहं न दृष्ट

इति वदन्तं नायकं सखीदमाह—

कौतूहलाकुलतया दिदृक्षया तव गवाक्षमायाता ॥
त्वयि दूरगे जिहासुः प्राणान्वातायनं तमनुमेने ॥३६२॥

गवामक्षीव गवाक्षः। गोशब्दो नेत्रस्यापि वाचकः। ततश्चायं नेत्रस्यापि नेत्रं दर्शनसाधनत्वादिति त्वद्दर्शनार्थं तत्रागता। दर्शन-साधनताज्ञानस्य तद्गमनानुकूलकृतिजनकत्वात्। तथाच तदानीं तस्य गवाक्षत्वज्ञानमासीत् त्वयि दूरगे तु त्वद्दर्शनमप्राप्य दुःखेन प्राणांस्त्यक्तुमिच्छन्ती तं वातायनमेव मन्यते। वातस्यायनं गमन-मार्ग इति व्युत्पत्तेः। प्राणानामपि वातत्वेन तन्मार्गेणैव तेषां गमनाभिलाषादिति भावः ॥ ३६२ ॥

कश्चिन्नायिकामाह—

कौटिल्यं बिभ्राणस्त्वदपाङ्गः सुभ्रु! चन्द्रगुप्त इव ॥
सहसा नन्दपदस्यानुशासकत्वं स्वयं वहति ॥ ३६३ ॥

कौटिल्यं वक्रत्वं चाणक्यं च। "कौटिल्यः कुटिलमतिः स एष येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः" ( मुद्रा० रा० अं० १ श्लो० ७) इत्यादिदर्शनात्। चन्द्रगुप्तो मौर्यवंश्यो राजविशेषः। आनन्दपदस्यानुशासको भवति। आनन्दस्यैतद्विजृम्भिताधी-नत्वात्। चन्द्रगुप्तोऽपि चाणक्याश्रयेण नन्दराज्यं प्रापेति वा प्रसिद्धम् ॥ ३६३ ॥

कश्चित् दूतीदमाह—

(१)कौशलकल्पयितव्यं स्वस्यापि परोक्षतापन्नम्(२) ॥
सुकृतमिव सा भवन्तं सुभग! सदा वहति हृदयेन ३६४

(१) अत्र उभयोः पुस्तकयोः कौशलेति पाठः। टीकानुरोधेन केवलेति पाठोऽपेक्षितः समीचीनश्च।

(२) परोक्षताभाजम् इति का० रा० पु० पुस्तके पाठः।

कल्पयितव्यम् अविच्छिन्नभावनाजन्यसाक्षात्काराविषयीक-रणात् । चक्षुःसंयोगाभावेन चाक्षुषाभावसूचनाय-केवलेति । तदेवाह-स्वस्यापीति । कदाप्यदर्शनात्परोक्षत्वम् । विप्रल-म्भस्यापि रतिरूपत्वेन सुखत्वात्तज्जनकतया सुकृतमिवेति । हृदयेन वहति=सर्वदा त्वत्स्मरणरतत्वात् । पुण्यमपि कल्पनीयमेव । देवदत्तशरीरस्य तद्भोगसाधनतया तन्निर्मितमृगादिदृष्टान्तेन तदीयगुणविशेषपूर्वकत्वे साध्ये अदृष्टपर्यवसानात् , स्वस्यात्मनो-ऽपि परोक्षमतीन्द्रियत्वादिति भावः ॥३६४॥

कश्चित् खलसङ्गमवैमुख्यार्थमाह--

**कौक्षेयकाः खला अपि तीक्ष्णत्वादुभयतो नियतम् ॥**
**स्पृष्टाः प्रमादतोऽपि च्छेदविधेर्न व्यभिचरन्ति ॥३६५॥**

"कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः । उभयतः अशेषावस्थासु धाराद्वये च । तीक्ष्णत्वात्=क्रूरत्वात् संयो-गभेदाच्च । नियतमित्यस्याप्यत्रैवान्वयः । यथा खड्गस्य यदव-च्छेदेनैव स्पर्शः क्रियते तत्रैव नियमेन च्छेदो भवति तथा यत्रैव खलसंसर्गोऽस्ति तत्राऽवश्यं कार्यहानिर्भवतीति भावः॥३६५॥

अङ्कुरितयौवनाकारवती नायिका कापि मुग्धायां प्रियानु-रागमाह—

**कञ्चुलिकाया ग्रन्थिं पूर्वग्रन्थेर्विलक्षणं वीक्ष्य ॥**
**शिथिलोऽप्यबोधि सख्या बालायाः प्रियपरीरम्भः ३६६**

स्तनाभरणमपसार्य वल्लभेनालिङ्गितायां तस्यां मौग्ध्येन दृढमनालिङ्गनात्स्तनयोः स्वाभरणमणिमुद्रादिलिङ्गाभावेऽपि प-रिरम्भपूर्वकालीनसखीदत्तकञ्चुकिग्रन्थिविलक्षणं परिरम्भोत्तर-कालीनग्रथिं विभाव्य तेन लिङ्गेन कञ्चुकोन्मोचनमनुमाय

तस्य चेतरबाधेन वल्लभकर्तृकत्वमाश्लेषार्थत्वं च साधयित्वा तस्यां प्रियाश्लेषानुमानमिति भावः ॥ ३६६ ॥

काश्चित्प्रिय आह--

**कङ्केल्लितरुः किसलयमयमकठिनमासनं समुपहृत्य ॥**
**तव पदमिलनस्पृहया नवाङ्कुरैर्जातपुलक इव ॥३६७॥**

कङ्केल्लिः=अशोकः।देशीशब्दोऽप्ययं बहुप्रयोगवशात्संस्कृतेऽपि साधुरिति वामनः । "पशूनामीशानः प्रमदवनकङ्केल्लितरवे" इति सौन्दर्यलहरी। पदयोरतिसुकुमारतया स्कन्धादियोगेन व्यथा माभूदित्याशयेन पल्लवमयासनोपहरणम् । एतेन वृक्षस्यापि त्वत्पदाश्लेषेच्छायां सहृदयस्य सा कथं न स्यादिति सूचितम् ॥ ३६७ ॥

कश्चित्प्रियामाह—

**कण्ठतले तव लग्ना विभाति मुक्तावलिस्त्र्यग्री बाले !।**
**शब्दार्थतदुभयोत्थध्वनिभेदानामिव श्रेणी ॥ ३६८ ॥**

एतेन त्वद्वाक्यमेतादृशध्वनिप्रायमिति सूचितम् । तदुभयं=शब्दार्थौ । तथाहि ध्वनिस्त्रिविधः । शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्च । तदुक्तं काव्यप्रकाशे—

"अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।

शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः"। (उ० ४ का० ३७—३८) यत्र पर्यायान्तरोपादाने व्यङ्ग्योऽर्थो न प्रतीयते स आद्यः । यत्र तदुपादानेऽपि प्रतीयते स द्वितीयः । यत्र वाक्ये एतद् द्वयं तत्र तृतीयः । यथा—

"अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ।"

अत्र चन्द्रतारकाश्यामाशब्दाः परिवृत्त्यसहाः अन्ये तु तत्सहा एव । एतेषां भेदास्त्वनन्ता एवेति ॥ ३६८ ॥

कश्चित्प्रियासङ्गमार्थं तामाह—

**कम्बुग्रीवेति भवद्ग्रीवाव्यवहारलब्धसौभाग्यः ॥**
**शङ्खः करेऽपि विषजति सुन्दरि ! ते वलयरूपेण ॥३६९॥**

ग्रीवायां रेखात्रयवत्त्वेन कम्बुसादृश्यव्यवहारात् ग्रीवासादृश्यप्रतियोगित्वेन लब्धप्रतिष्ठः शङ्खः संयोगरूपसाक्षात्सम्बन्धेन ततोऽपि सौभाग्यातिशयो भविष्यतीति कङ्कणात्मना त्वत्पाणौ लगतीति भावः । एतेन यस्य येन प्रतिष्ठा जाता स तदुत्कर्षार्थं तदुत्कर्ष एव यत्नं करोतीति सूचितम् ॥ ३६९ ॥

कश्चिन्मानिनीमाह—

**कण्ठीरवावलग्ना गिरिलब्धसमुद्भवा श्यामा ॥**
**रसराशिवृत्तिसहजा त्वं किल चण्डीत्युचितमेव ॥३७०॥**

सिंहमध्यसदृशं मध्यं यस्याः तनुत्वात् । "सिंहश्च कण्ठीरवः" इति हलायुधः । "मध्यमं चावलग्नं च" इत्यमरः । पक्षे सिंहावलग्ना तद्वाहनत्वात् । गिरि वाण्यामिति सप्तम्यन्तम् । लब्धः समुत् जन्यत्वेन प्रीतिसहितो भव उत्पत्तिर्यस्याः । पक्षे गिरेः पर्वताल्लब्धः समुद्भवो जन्म यया । श्यामा=षोडशवार्षिकी नीलरूपा च । शृङ्गारसमूहवृत्तिः सहजः स्वभावो यस्याः । पक्षे जलराशिः समुद्रः तद्वृत्तिः सहजो भ्राता मैनाको यस्याः । एवंविधा त्वं चण्डी कोपनेति युक्तम् । अन्यादृश्या मानानधिकारात् । अथच तद्वृत्तिधर्मवत्त्वात् चण्डी देवी तत्तादात्म्यमुचितमेव ॥ ३७० ॥

काश्चित्सेवास्वभावमाह —

**कञ्जकुलं लोकेऽस्मिन्नूनं जानाति सेवकावस्थाम् ॥**
**बध्नाति मुकुलदम्भादञ्जलिमुद्दिश्य राजानम् ॥३७१॥**

सेवकस्य अवस्थां धर्मम् । सोऽपि हि प्रभुमभिलक्ष्य नित्यमञ्जलिं बध्नाति । इदमपि नृपाभेदाध्यवसितं चन्द्रमुद्दिश्य (मुकुलच्छलेनाञ्जलिं बध्नाति)। राजपदेनोभयोपस्थापनादयमर्थः। यद्वा कश्चित्सेवानिर्विण्ण आह । सेवकस्यावस्थां दुःखरूपं परिणामं जानाति । यतो राजोद्देशेनाञ्जलिं बध्नाति । निवृत्तिविषयेऽप्यञ्जलिबन्धस्य लोके प्रसिद्धेः । कदापि राजसेवां न करोतीत्यर्थः । यद्वा कश्चित्प्रियाविरहदून आह ॥ ३७१ ॥

काञ्चित्प्रियदर्शनेन रोमाञ्चितां सखीदमाह—

**कण्टकभरेण भवतीमावृणुते कुसुमसायको युक्तम् ॥**
**अधरकुचस्मितपल्लवगुलुच्छकुसुमा हि वीरुदसि ३७२**

"स्त्रीरोमाञ्चे द्रुमाङ्गे च कण्टकः परिकीर्तितः" इति विश्वः । कुसुमसायकपदं साभिप्रायम् । अधरादीनां पल्लवादिभिः सह यथासङ्ख्यमभेदः । ततश्च कुसुमार्थिनो लतारक्षार्थं कण्टकावरणं युक्तमेवेत्यर्थः । एतेन तस्याः कामजयसाधनत्वं सूचितम् । अथचैतादृशरमणीयायाः प्रियावलोकनानन्देन रोमाञ्चो युक्त एवेति भावः ॥ ३७२ ॥

काश्चित्प्रियामाह—

**कन्दलितमृगमदाङ्कं भालतलं वीक्षमाणैस्ते ॥**
**चन्द्रशकलान्तरालं कलङ्कमलिनं निभालितं लोकैः ३७३**

कन्दलित=उत्पन्नः। अन्यवैलक्षण्यं व्यङ्ग्यम् । कस्तूर्या अङ्कास्तिलको यत्र । "ललाटे तिलकश्चैव नानाशिल्पप्रयोजितः" । इति भरतोक्तेः । अर्द्धचन्द्रस्य प्रान्ते कलङ्कसत्त्वात्ततो विशेषसूचनाय-अन्तरालमिति । तथाच तस्य मध्येऽङ्काभावेऽपि भालस्यापि तदभेदादत एव मध्यगताङ्कचन्द्रार्द्धदर्शनकौतुकं प्राप्त-

मिति भावः । रूपकध्वनिरयम् । एतद्दर्शनेनाप्रसिद्धोक्तविधार्ध-चन्द्रदर्शनस्यापि सिद्धेर्विशेषालङ्कारः । एतेनोत्तमत्वमप्युक्तम् । तथाच भविष्ये—

"अर्द्धेन्दुप्रथिताभोगं रोमशं सुसमाहितम् ।
भोग्यभोगकरं श्रेष्ठं ललाटं वरयोषिताम्" ॥ इति ॥३७३॥

इति ककारव्रज्या ।

कश्चिद्विषयसत्त्वेऽपि तदनुपभोगिनं कंचिदुद्दिश्याह—

खट्वाङ्गं पाणितले निधाय यो भूतले स्वपिति ॥
दिग्वासा नेत्रत्रययुतोऽपि किं सर्वविक्तया तस्य ॥३७४॥

खट्वाङ्गम्=आयुधविशेषः शयनसामग्री च । नहि तत्सत्त्वे भूतले शयनमर्हं, खट्वासम्पादनस्यैव कर्तुमुचितत्वात् । नेत्रं=नयनं वस्त्रं च । नेत्रं प्रक्रम्य—"वस्त्रे मूले विलोचने" इति विश्वः । वस्त्रत्रय-सत्त्वे नग्नताया अनौचित्यात् । एतादृशस्य सर्वज्ञतया किं प्र-योजनं, न किमपि । सर्वपदं बहुपरम् । ईश्वरपक्षे यावद्वस्तुप-रम् ॥ ३७४ ॥

कश्चिन्नीरसमाधिकृत्याह—

खरहृदयस्य हि रामाजिह्मगदृग्भङ्गिदुष्करभिदस्य ॥
शक्यं किं वा विबुधैराधातुं दूषणानुगतेः ॥ ३७५ ॥

खरं रसाभावेन तीक्ष्णं हृदयं यस्य । रामाणां स्त्रीणां जि-ह्मगाभिः कुटिलगातिभिः दृशोर्भङ्गिभिः कटाक्षरूपाभिः दुष्करा भिदा भेदो यस्य । तेनाप्यक्षुब्धस्येति यावत् । दूषणानामनुगतिर्य-स्मिन् । दोषवत्त्वात् । तादृशस्य विबुधैर्विशेषज्ञैरपि किं कर्तुं श-क्यम् । तादृशहृदयस्य दुर्ग्रहत्वात् । अथच श्रीरामस्याऽजिह्मगै-र्बाणैः क्रोधदृष्ट्या च दुष्करभिदस्य । भिदा=विदारणम् । अमैव

दूषणाख्यराक्षसानुगस्य खरनामराक्षसहृदयस्य देवैः किं कर्त्तुं शक्यम्। यः श्रीरामेणापि यत्नाज्जितस्तद्विजयस्य देवान्तरासाध्यत्वादिति भावः ॥ ३७५ ॥

काचित्सखीमाह—

खद्योतैर्बहुभिरपि स्फुटभूतैः प्रावृषि प्रकाशो न ॥
सखि! वस्तुतत्त्वमन्यद्भिन्नं च समानशब्दवाच्यत्वम् ३७६

"खद्योतो ज्योतिरिङ्गणः" इत्यमरः। प्रकाशो द्रव्यान्तरपरिग्रहहेतुः। अन्यदा त्वेकेनैव सूर्यात्मकेन खद्योतेनालोकोऽभूत्। अत एकपदवाच्यतामात्रेण तत्सादृश्यभ्रमो न कार्य इत्यर्थः। यद्वा कांचिदभिसारिकां प्रति इयमुक्तिः। एतैः प्रकाश्यताभावान्न भेतव्यमिति भावः ॥ ३७६ ॥

कश्चिन्नायिकामाह—

खर्वयता पर्वतमपि कुचकुम्भभुवोन्नतत्वेन ॥
इन्द्रपदमनुभवन्नपि शक्यस्तावद्भुजङ्गतां नेतुम् ॥३७७॥

खर्वयता=स्वनिष्ठोन्नतत्वप्रतियोगिकापकर्षाश्रयोन्नतत्वं कुर्वता इन्द्रोऽपि भुजङ्गतां कामुकत्वं नेतुं शक्यः। एतद्दर्शनेन तस्यापि सम्भोगेच्छासम्भवात्। कुम्भभुवा=अगस्त्येनापि विन्ध्यपर्वतं स्वपरिमाणापकृष्टपरिमाणं कुर्वता उन्नतत्वेन महत्त्वेन हेतुना इन्द्रपदस्थोऽपि नहुषः सर्पत्वं नीत इति पुराणविदः ॥ ३७७ ॥

काचित्सखीमाह—

खुरकोटिभिरिव मन्मथतुरगाणामाहतात्सहसा ॥
सखि! पश्य केतकवनात्परागनिकरान्परापततः॥३७८॥

मदनहयखुराभिहतादिव केतकसमुदायात्पततां रजोवृन्दानां मदनोद्दीपकत्वं व्यङ्ग्यम् । वाताद्यभिघाते कामहयखुराभिघातसम्भावनात् पातहेतूत्प्रेक्षा । तथाचैवंविधे समये मत्रासोद्यमोऽनुचित इति प्रियं प्रति ध्वनिः । यद्वा तत्र कृतसङ्केता कापि व्यापारान्तरानुरोधात्प्राप्तविलम्बा तत्र नायकगमनं कलयित्वा स्वगमनावश्यकत्वं व्यञ्जयति ॥ ३७८ ॥

कश्चिद्दुष्टसंसर्गनिवृत्त्यर्थमाह—

**खलहृदयसन्निविष्टा भूयोगुणशालिसमुदायाः ॥**
**अन्योन्यसंहता अपि दधते नचिरात्पृथग्भावम् ३७९**

भूयोभिर्गुणैः शोभमानानां समूहाः । दुर्जनहृदये भेद्यत्वज्ञानविषयत्वेन प्रविष्टाः सन्तः परस्परप्रीतिमन्तोऽपि (नचिरात्=शीघ्रमेव) पृथक्त्वं वहन्ति । तेन तेषां प्रणयविच्छेदोपायविधानात् । अथच खलं धान्यादिमर्दनस्थानं तन्मध्यप्रविष्टाः । बहुगुणानां शालीनां धान्यविशेषाणां सङ्घाः मञ्जरीदशायां मिलिता अपि मर्दनेन पृथगेव भवन्तीत्यर्थः । "खलं भूस्थानकल्केषु क्रूरे नीचे खलेऽधमे" इति विश्वः ॥ ३७९ ॥

कश्चित्प्रियामाह—

**खेलति पयोधरे तव समुन्नते प्रादुरस्ति हंसगतिः ॥**
**अतिसौरभविस्तारस्तारोल्लासो विजातीयः ॥ ३८० ॥**

पयोधरः=स्तनो मेघश्च । प्रसिद्धमेघसमयविपर्ययेणात्र वर्ण्यते । हंसगतिसदृशी गतिः । अनेन पद्मिनीत्वसूचनम् । "व्रजति मृदु सलीलं राजहंसीव तन्वी" इति रतिरहस्यात् । आतिशायितस्य (सौरभस्य) विस्तारः स्फुटत्वम् । तारयोर्नेत्रकनीनिकयोर्विलक्षणः कटाक्षरूप उल्लासः । तत्र (मेघसमये) तु हंसरसा-

लनक्षत्राणां विरह एवेति व्यतिरेकः ॥ ३८० ॥

काचित्सखीमाह—

खञ्जनयुगमिव भुवने रसरहितं न प्रपश्यामः ॥
तिरयति यद्रतिमेव हि शेवधिगर्भस्थलालाभे ॥३८१॥

खञ्जरीटयोर्निधिगर्भदेश एव रतमिति प्रसिद्धम् । तथाच वराहः—

"तस्मिन्निधिर्भवति मैथुनमेति यस्मिन्
यस्मिन्पुनर्वमति रत्नतलेक्षिका च ॥
अङ्गारतामुपदिशन्ति पुरीषणेऽस्य
तत्कौतुकाय नयनस्य खनेद्धरित्रीम् ॥"

तथाच निधिव्यतिरेकेण रतितिरस्कारात्तस्य रत्यपेक्षया निधावुत्कर्षज्ञानाद्रतिराहित्यमिति भावः ॥ ३८१ ॥

काचिन्नायिकामाह—

खण्डनमिव भेदासहमिदमुभयोः प्रेम युवयोर्यत् ॥
तेन विपक्षजनानामुल्लसति कथासु मूकत्वम् ॥ ३८२॥

विपक्षतिरस्कारः=खण्डनम् । अथच ग्रन्थविशेषः। भेदासहं परस्परमभेदावगाहित्वात् । तदपि सर्वपदार्थानां भेदखण्डकम् । अद्वैतपरत्वात् । विपक्षाणां=सपत्नीरूपाणां जनानाम् प्रतिवादिनां च । तथाच तत्रोक्तम्—

"शब्दार्थनिर्वचनखण्डनया नयन्तः
सर्वत्र निर्वचनभावमखर्वगर्वाः ।
धीरा ! यथोक्तमपि कीरवदेतदुक्त्वा
लोकेषु दिग्विजयकौतुकमातनुध्वम् ॥ ३८२ ॥"

इति खकारव्रज्या ।

कश्चित्प्रियाकुचशोभामनुभवन्नाह—

(१)गजवदनगण्डघर्षणलग्नमदद्रवजनीलिमामोदे ॥
मेरुशिखरे मृगमदादिग्धत्वत्कुचरुचिप्रचयः ॥ ३८३ ॥

नीलिमामोदपदयोर्द्वन्द्वं कृत्वा द्रवजान्तेन सह सप्तमीबहुव्रीहिः । तथाच शुद्धकुचयोस्तादृशमेरुशिखरासाम्येऽपि कस्तूरीलेपकालीनयोस्तयोर्यथोक्तमेरुशिखरसाम्यमेवेत्यर्थः ॥ ३८३ ॥

कश्चिद्विरही चन्द्रकरस्पर्शमसहमान आह—

गरसहितः सगरोऽजनि हालाहलमुज्जगार सिन्धुरपि ।
उग्रेणाप्यविषह्यं विषमिन्दुः सूत इत्युचितम् ॥ ३८४ ॥

सगरस्य राज्ञः पुत्रः समुद्रः तस्य चन्द्र इति प्रसिद्धम् । तत्र सगरो गर्भे सपत्नीदत्तगरयोगादिति स्पष्टं तस्य तत्साहित्यम् ।

"अन्यैरुपचितैस्तीव्रैरेकीकृत्य तु सूरिभिः ।
फलान्तरविधानाय क्रियते यद्गरं तु तत्"॥ इति वैद्यकम् ।

गरापेक्षयाभ्यधिकं शिवमात्रसहनीयं कालकूटं समुद्रोऽपि जनितवान् । एवमुग्रेण=तीक्ष्णप्रकृतिना शिवेनापि सोढुमशक्यं किरणरूपं विषं यच्चन्द्रोऽजनयत्तद्युक्तमेव । समुद्रेण सगरविषोत्कृष्टविषस्येव चन्द्रेणापि स्वजनकजन्यविषातिशयितस्य तस्य(२) प्रसवौचित्यादिति भावः ॥ ३८४ ॥

---

(१) का० रा० पु० पुस्तके इदं नास्ति । एतत्स्थाने—
गतिरतिविचित्रा लोकव्यवहाराणां निरीक्ष्यते सकला ।
यस्य पिता जगदीशो विनायकः सोऽप्यभिहितो यत् ॥
इति पद्यं वर्तते ।
(२) तस्य=विषस्य ।

कश्चिन्महात्मनां स्वभावमाह—

गच्छति गुणभूमानं जनकादपि पूर्वजादपि सशक्तिः ॥
समजनि यथा षडास्यस्तथैव षाण्मातुरोऽपि गुहः ३८५

शक्तिः=सामर्थ्यमायुधभेदश्च। षण्णां मातॄणामपत्यं षाण्मातुरः। कृत्तिकाभिस्तथात्वेन (१)स्वीकारात्। एवंच यथा पञ्चमुखाज्जनकादधिकमुखत्वं षडास्यत्वेन गुहः प्राप। एवं षाण्मातुरत्वेन द्वैमातुरादग्रजादपीति भावः ॥ ८५ ॥

(१)कश्चिज्जनात्समनिधोत्प्रेक्षप्रस्वानुरागो नायकज्ञानविषयत्वं कृतं इत्याह-

(२)गहनं महद्रहस्यं संवृ (प)त्य सदस्यसमुदायात् ॥
प्रत्यापयति प्रियतमसम्भोगं कञ्जनयनायाः ॥ ३८६ ॥

गहनं=प्रकारान्तरेण बोधयितुमशक्यम्। महत्=प्रकाशे सत्यपि नेष्टप्रभञ्जकम्। असन्निहिताद्गोपनकारित्वात्सदस्येति। एकस्मादपि तथात्वात्समुदायादिति। तद्गोपनस्यावश्यकत्वार्थं प्रियतमसम्भोगवैलक्षण्यम् ॥ ३८६ ॥

समानस्वभावानामेव सम्बन्धः श्लाघ्य इति कोऽप्याह—

गलगरयोरविभिन्नप्रकृतिप्रत्ययकभावमवधार्य ॥
सर्वज्ञनान्योन्यं संयोगो जनित इत्युचितम् ॥ ३८७ ॥

'गॄ निगरणे' इत्यस्याच्प्रत्यये कृते "अचि विभाषा" (८।२।२१) इति लत्वस्य व्यवस्थितविभाषया प्राण्यङ्गे विधिरेव विषे तु निषेध एव। एतावन्मात्रविशेषः। प्रकृतिप्रत्ययौ तुल्यावेव। अथच ययोः स्वभावो विज्ञानं च समानमेव

(१) तथात्वेन=अपत्यत्वेन।
(२) का० रा० पु० पुस्तके इयमार्या नास्ति।

तयोः सम्बन्धो युक्त इत्यभिप्रायवता भगवता कालकूटरूपगरस्य स्वगले स्थापनं कृतमित्यर्थः ॥ ३८७ ॥

कश्चिद्रूपवतां गुणवत्ता स्यादित्याह—

**गदता गुणवादस्त्विति रूपात्प्रायादिति परस्तात् ॥**
**जैमिनिना रूपगुणावव्यधिकरणाविति निरुक्तम् ३८८**

"रूपात्प्रायात्" ( पू० मी० अ० १ पा० २ अधि० १ सू० ११ ) इति सूत्रं "गुणवादस्तु" ( पू० मी० अ० १ पा० २ अधि० १ सू० १० ) इति सूत्रात्परतोऽर्थवादाधिकरणे [रूपं] पठ्यते। तत्र गुणवादः=तद्वत्ताप्रसिद्धिश्च प्रायेण रूपाद्भवतीत्येवमर्थतया सूत्रं योज्यते। तथा च सामुद्रिकम्—"यत्राकृतिस्तत्र गुणा वसन्ति" इति। "गुणवादस्तु" इति सूत्रस्य च "वायुर्वै क्षेपिष्ठा देवता" इत्यादयो गौणवृत्त्या क्षिप्रदेवताकं कर्म क्षिप्रमेव फलं ददातीति "वायव्यं श्वेतमालभेत" इति यागस्य स्तुतिपरा इत्यर्थः। "रूपात्प्रायात्"इत्यस्य तु "स्तेनं मनोऽनृतवादिनी वाक्" इत्ययं "हिरण्यं हस्ते भवति"इति विधेः स्तुतिपर इत्यर्थः। अत्यन्तप्रशस्तयोरपि वाङ्मनसयोरप्राशस्त्याच्च'न हि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुम्'इति न्यायेन हिरण्यस्तुतिरिति ॥ ३८८ ॥

कश्चित्प्रभातं वर्णयति—

**गर्भिण्यासीद्भास्वत्प्रेयस्यम्भोजिनी तदासङ्गात् ॥**
**कालिन्दी भृङ्गालीच्छलेन निर्याति तत एषा ॥३८९॥**

तदासङ्गात् पूर्वदिवसीयादिति बोध्यम्। अम्भोजिन्यां नायिकाव्यवहारप्रतीतेः समासोक्तिः। तस्याश्च नेयं भ्रमरपङ्क्तिः किंतु कालिन्दीति अपन्हुत्यङ्गत्वात्सङ्करः। यमुनापि सूर्यरमण्याः

संज्ञायाः प्रसूतेति प्रसिद्धम् ॥ ३८९ ॥

कश्चिदुभयोः प्रेमातिशयमाह—

गाढालिङ्गनकुतुकात्परस्परास्मिन्परस्पराभेदम् ॥
कलयद्भ्यां तद्बुद्धेःप्रमात्वमिव विस्फुटं विहितम्॥३९०॥

नायकेन नायिकायां तया च तस्मिन् अभेदेऽवगाह्यमाने नायकनिष्ठेन स्वप्रतियोगिकाभेदाश्रयत्वज्ञानेन नायिकानिष्ठ-ज्ञाने स्वप्रतियोगिकाभेदस्य नायकस्यानुयोगित्वेन बोधे समान-वृत्तिवेद्यत्वात्परस्पराभेदः प्रतिभातीत्युभयज्ञानविषयत्वात् अभेदस्य च कृतकत्वाक्षेपादुभयोः प्रमात्वं सूचितमित्यर्थः॥३९०॥

कश्चित्प्रियामिदमाह—

गायन्ति किञ्चिदुच्छ्वसदम्भोरुहकोरकान्तरालगताः॥
निजनिर्गमरविकिरणप्रवेशगाथामिव भ्रमराः ॥३९१॥

सम्यक्कृतदविकासाद्गमनप्रतिबन्धसूचनाय-किञ्चिदिति । निर्गमान्तप्रवेशान्तयोर्द्वन्द्वः । तथाच प्रच्छन्ननायिकतया मद्विर-हस्य, स्वगेहगमनेन प्रसिद्धनायकसामानाधिकरण्यस्य वायमव-सर इति व्यङ्ग्यम् ॥ ३९१ ॥

कश्चित्सुजनमाह—

(१)गिरिराजसुत! न तावत्स्वरूपमात्रेण पक्ष उपयुक्तः ॥
परमात्मगौरववशात्त्वं विनिमज्ज्यापि पालयसि ॥३९२॥

(१) अत्र का० रा० पु० पुस्तके—

गाम्भीर्यं जीवनमपि मरुकूपानां च पिशुनानाम् ॥
केवलमायतिभाजः परकीयगुणस्य निगरणाय ॥

इत्यधिकं वर्तते । गाम्भीर्यम्=अगाधता दुर्बोधं च । जी-वनम्=जलं वर्तनं च । आयतिः=दैर्घ्यम् उत्तरकालश्च ।गुणः=रज्जुः सौन्दर्यादिश्च ।

सुतान्ता मैनाकसम्बुद्धिः । स्वरूपमात्रेण=कार्यानुपधानेन । पक्षः=पत्रं सहायश्च । गौरवं=गुरुत्वं महत्त्वं च । विनिमज्ज्य=समुद्रान्तर्लीनो भूत्वा । पक्षे कुतश्चिदपकृष्टो भूत्वा । तथाच उड्डयनादितत्कार्यविरहस्याविशेषेण पक्षाभावेऽपि यद्यपि क्षतिर्नास्ति तथापि स्वमाहात्म्यादेव रक्षसीति भावः ॥ ३९२ ॥

काचित्प्रियमाह—

**गीर्वाणराजमहिषी पुलोमजायाः सपत्न्यसौ प्राची ॥**
**तत्सक्ते सति दयिते क्रुधारुणं वहति विधुवदनम् ॥ ३९३ ॥**

महिषीपर्यन्तेन सपत्नीत्वमुपपादितम् । ( तत्सक्ते= )तस्यां पुलोमजायामासक्ते । तथाच यदि त्वमप्येवं विधास्यसि तदा ममापीयमेव गतिरिति भावः । यद्वा कृतापराधे नायके शृण्वति सखीं प्रति नायिकाया उक्तिः । विषयसाम्यान्ममापि कथमेवं न स्यादिति भावः ॥ ३९३ ॥

कस्याश्चिदर्थे सखी नायकमाह—

**गुणमिलिता रागमयी वंशावष्टम्भतः स्थिरीभूता ॥**
**अन्तर्दधती सा त्वां शुष्यति तापेन पटकुटीव ॥ ३९४ ॥**

पटकुटी=वस्त्रमयं गृहम् । गुणाः=सौन्दर्यादयो रज्जवश्च । प्राचुर्ये मयट् । ननु स्वयमेव कथं सहसा नायातीत्यत आह—वंशेति । कुलजत्वेन तदनुरोधादनुरागसत्त्वेऽप्येवं कर्तुमशक्ता । पक्षे वेण्ववष्टम्भेन वितता । अन्तः=मनसि मध्ये च । तस्या अप्यभ्यन्तरे केनचिदवस्थानात् ॥ ३९४ ॥

महतामपि कामेन विक्षोभो भवतीत्याशयवान्कोऽप्याह—

**(१)गुरुवदनप्रतिबिम्बान्वयेन गौर्याः कुचद्वयं भाति ॥**
**अन्तर्धृतसशरासनपञ्चाशुगमार्गणौघमिव ॥ ३९५ ॥**

---

(१) इयमार्या का० रा० पु० पुस्तके नास्ति ।

कश्चिद्दशाविशेषे प्रियां पश्यन्नाह—

**गुलिकाधनुर्गुण इव स्मरस्य मध्यप्रकाशमानबिलः ।**
**स्फुरति द्विफाललग्नो ललाटबिन्दोरलकसङ्घः ॥३९८॥**

पाषाणादिगुटिकाक्षेपसाधनं गुलिकाधनुरिति प्रसिद्धम् । तत्रोभयतो मौर्वीद्वयम् , मध्ये क्षेपसमये गुलिकानिधानार्थं सूत्रादिमयं बिलं भवति । ततश्च भालभूषणीभूतबिन्दोरुभयतः पतितोऽलकसमूहः तदीयमौर्वीत्वेन सम्भाव्यते । एतेन तस्य मदनोद्दीपकत्वसूचनम् ॥ ३९८ ॥

कश्चित्प्रातराह—

**गुञ्जां मुखेन दधतस्तरणिमयूखप्रसङ्गपुनरुक्ताम् ॥**
**पश्य विनिर्यान्त्यलयो मध्याद्राजीवमुकुलस्य ॥३९९॥**

गुञ्जां=शब्दविशेषम् । तन्मुखानां श्यामवर्णतया निर्गमनसमयसमासक्तसौरमयूखसम्बन्धेन गुञ्जाफलसादृश्याद्भ्रान्त्युदयात् पुनरुक्ताम् द्विविधगुञ्जाधारणात् । पश्य मृगो धावतीतिवत् एतन्निर्गमनस्यैव दर्शनक्रियायां कर्मत्वेनान्वयः । यद्वा तान्पश्येत्यध्याहारेण वाक्यार्थः ॥ ३९९ ॥

काचित्सङ्केतस्थानं सूचयन्ती सखीमाह—

**गुल्मविवृद्धिनिरन्तरजठरं सखि ! काननं तदिदम् ॥**
**निष्कुन्थतीव विचरद्द्विरेफगुञ्जापदेशेन ॥४००॥**

गुल्मा=वंशादयः । "अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः । उक्तं च—"गुल्माः सङ्घातजन्मान एकरूपा नलादयः" । पक्षे रोगविशेषः गुल्मः । निष्कुन्थतीवेति तिरस्कारव्यञ्जनम् ॥ ४०० ॥

काचित्सखीमुपनायकगुणानाह—

**गूढचरणा भिदोज्झितदृक्श्रुतयो जिह्मगतिभाजः ॥**
**नवभोगशालिनोऽमी कथ्यन्ते सहचरि! भुजङ्गाः॥४०१॥**

भुजङ्गाः=कामुकाः सर्पाश्च। गूढं जनान्तरैरवेद्यं चरणमाचारो येषाम्। पक्षे चरणं=पदम्। भिदया भेदेन त्यक्ता दृक् श्रुतिश्च येषाम्। सर्वदा एकरूपानुरागा रहस्यरक्षकाश्च। पक्षे भेदरहिता दृष्टिः श्रोत्रं च येषाम्। चक्षुःश्रवस्त्वात्। तेषां गोलकस्यैव इन्द्रियद्वयाश्रयत्वात्। तदुक्तम्—"चक्षुःश्रवसां गोलकं चक्षुःश्रोत्राधिष्ठानम्" इति। जिह्मा लोकोत्तरा गतिर्मार्गः। पक्षे वक्रगमनाः। भोगः=सम्भोगः सर्पफणा च ॥४०१॥

काचिदुपपत्यनुरागादिदमाह—

**गृहपतिरयं हुताशः समयान्तरमात्रचिन्तनीयफलः ॥**
**विधिमात्रगौरवबलात्सायं प्रातश्च परिचर्यः ॥४०२॥**

गृहपतिपदेन स्वानुरागानास्पदत्वसूचनम्। हुता नाशिता-आशा उपपतिमिलनेच्छा येन। तत्प्रतिबन्धकत्वात्। अथ च गृहपतिः=(यजमानः) तत्संयुक्तो गार्हपत्यरूपो हुताशो वह्निः। साम्प्रतिकफलाभावात्—कालान्तरेति। फलं=सम्भोगादिः स्वर्गश्च। तत्राप्यप्रामाण्यशङ्कासूचनाय—चिन्तनीयेति। सन्निहितफलत्वे तत्सत्त्वासत्त्वनिर्णयः स्यादतो मात्रेति। विधिः="मम वाचमेकमना जुषस्व" इत्यादिर्विवाहकालीनः। तस्य गौरवं स्वयं तदुल्लङ्घनेऽपि अन्यैरनुल्लङ्घितत्वेन ज्ञानसम्पादनावश्यकत्वम्। पक्षे विधिः "अग्निहोत्रं जुहोति" इत्यादिः। गौरवं=तदभावेन प्रत्यवायबोधकत्वम्। तथाच तदानीमेवानवसरः सङ्केतस्येति भावः ॥ ४०२ ॥

कश्चिद्गुणवानाह—

गृह्णन्ति गुणाः सुदृढा एव परान्वारणानिव मदान्धान् ॥
अदृढास्ते लूतावन्निजबन्धायैव पर्यवस्यन्ति ॥४०३॥

गुणा=विद्यादयस्तन्तवश्च । दृढाः=प्रतिवादिनिराकरणसमर्थाः । पक्षे स्पष्टम् । गृण्हन्ति=वशीकुर्वन्ति बध्नन्ति च । लूताया इव लूतावत् "तत्र तस्येव" (५।१।११६) इति षष्ठ्यन्ताद्वतिः । यथा लूतातन्तवो भङ्गुरतरास्तद्बन्धनमेव कुर्वन्ति । एवं विचारासमर्थगुणा अपि तदपकर्षमेव जनयन्तीति भावः । यद्वा अन्यनायिकामपहाय तत्सक्ते प्रिये सखी नायिकामाह ॥४०३॥

कस्याश्चित्कन्यादशायामेव कुत्राप्यनुरागं काचित्सूचयति—

गृह्यककलापिनि बलाद्दलयति भुजङ्गभ्रमात्कचकलापम् ॥
मेनापुरतो जयति व्रीडाप्रायप्रमोदभृद्गौरी ॥ ४०४ ॥(१)

"गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते" इत्यमरः । तेन विश्वाससूचनम् । एतादृशमयूरेण मातुरग्र एव पन्नगभ्रान्त्या कबरीसमाकर्षणे क्रियमाणे मयूरस्य नीलकण्ठसंज्ञतया प्रियतमाभेदारोपात्तत्कृतकेशविस्रंसनाभिमानादानन्दः, मातृसन्निधाने तादृशानुसन्धानाच्च लज्जेति भावः । लज्जाहर्षयोः सन्धिः ॥४०४॥

( कश्चित्कस्याश्चिदुपपत्यनुरागातिशयमाह— )

गेहपतावायास्यति दयिततमे च प्रवत्स्यति गृहिण्याः॥
तनुतोदयेन तत्क्षणमनर्थबीजं समर्थितप्रायम् ॥४०५॥

( गेहपतिपदेन केवलं गृहस्वाम्येव न तु प्रिय इत्यनुरागानाश्रयत्वसूचनम् । आयास्यतीति शत्रन्तात्सप्तमी । एवं

(१) इयम् अग्रेतनी च आर्या का० रा० पु० पुस्तके नास्ति ।

प्रवत्स्यतीत्यत्रापि। दयिततम=उपपतिः। तमपा तस्मिन्प्रेमातिशयो बोध्यते। तनुता=कृशत्वम्। अनर्थस्य मृतिरूपस्य बीजं कारणम्। समर्थितप्रायम् न तु समर्थितमेव। भाविप्रियतमप्रवासोद्देश्यकशोकजन्यकृशताया दर्शनेन तत्प्रवासानन्तरं प्रायोऽकथनीयावस्थाऽस्याः सम्पत्स्यते इति सम्भाव्यते इति भावः) ॥ ४०५ ॥

प्रियविरहेऽपि तद्दर्शनसमये प्रियसंयोगमाप्नुवतोः स्वनेत्रयोरेव दर्शनं क्रियताम् तत्संयुक्तदर्शनस्यापि सुखावहत्वादित्यादर्शयन्तीं सखीं काप्याह—

(१)गोलकरूपं चक्षुर्यदि तदलब्धप्रियाङ्गसंयोगम् ॥
तदतीन्द्रियं यदि तदा मुकुरकुलेनापि किं कार्यम्॥४०६॥

गोलकमेव चक्षुरिन्द्रियमिति नास्तिकाः। तद्भूरस्यतीन्द्रियमिति तार्किकादयः। आद्ये प्राप्यकारित्वात्तद्संयुक्तस्यैव चाक्षुषत्वात् तत्संयोगाश्रयत्वमेव नास्ति। अन्त्ये तु न ( प्रत्यक्षं सम्भवतीति भावः ) ॥४०६॥

---

( १ ) का० रा० पु० पुस्तके—

गोत्रविभेदो युक्तः सहस्रनयनस्य सुन्दर ! तवायम्।
यद्दम्भोलिकमधुनान्यथाशयं वहसि तच्चित्रम् ॥

इत्यधिकं वर्तते। गोत्रस्खलितं प्रियं प्रति नायिकाया उक्तिः। गोत्रविभेदः=गोत्रस्खलनं पर्वतभेदनं च। सहस्रनयनस्य=सहस्रशब्दो बहुत्वपरः। नयनशब्दस्यानुरागे लक्षणा। तथा च अनेकनायिकानुरक्तस्येत्यर्थः। पक्षे शक्रस्य। अदम्भः=छलशून्योऽपि। अलिकम्=अनृतम्। "अलिकशब्दो ह्रस्वदीर्घमध्य" इति राजदेवः। आशयमिति च्छेदः। छलरहितस्याप्यलीकाभिप्रायवत्त्वमाश्चर्यजनकमिति भावः। पक्षे दम्भोलिर्वज्रम् तद्रहितं शयं=पाणिम्।

काचिदभिसारिकेदमाह—

**गौतमि ! सञ्जनितशतानन्दे ! रमणीयदेहलते ! ॥**
**उचितं वासवदेवाश्रितासि यद्दयितमुत्सृज्य ॥४०७॥**

गौतमी=गोदावरी । तत्सम्बुद्धिः । संजनितः शतसङ्ख्याक आनन्दो यया । उपपतिसमागमाधिकरणत्वात् रमणीयदेहा लता यस्याम् । तेन निकुञ्जसम्पत्तिः । वासेन गृहेण तुल्यं वासवत् । भर्तारमुत्सृज्य मया श्रितासि । तत् युक्तम् । पक्षे गौतमीपदमहल्यापरम् । उत्पादितः शतानन्दो मुनिर्यया । तस्य तत्पुत्रत्वात् । रमणीया देहलता यस्याः। वासवरूपं देवं श्रितासि गौतममपहाय । "द्वितीयाश्रिता०" (२ । १ । १४) इति समासः । "अहल्यायै जार" इति श्रुतिदर्शनात् ॥ ४०७ ॥

काचिद्रहस्यवार्ताभेदकं केलिशुकमाह—

**गौरमुखत्वादुचितं तव कीर ! समीकदयितत्वम् ॥**
**किन्तु शुकत्वानुचितं रागसमुद्भावकमुखत्वम् ॥४०८॥**

"गौरोऽरुणे सिते पीते" इति विश्वः । अथच गौरमुखो=मुनिविशेषः । समीकं=युद्धम् । तेन रहस्यवार्ताप्रकाशने सपत्न्यादिकलहोदयात् । अथच गौरमुखस्य समीकाख्यमुनिशिष्यत्वात्तत्प्रियत्वमर्हम् । पक्षे शुको=व्यासात्मजः । रागो=रक्तत्वं विषयासङ्गश्च । शुकस्य नीरागत्वाद्रागवत्त्वमेवानुपपन्नम् । सति तु तस्मिन् गौरमुखत्वोदयादुक्तरीत्या समीकप्रियत्वं युक्तमेवेति भावः ॥४०८॥

काचित्प्रियाभिमतां सखीदमाह—

**गङ्गायां प्रतिफलितं गौर्यास्तद्भालपद्मरागेऽस्याः ॥**
**जयति वपुः कृतसलिलानलसङ्गमिव श्रमेर्ष्याभ्याम् ॥(३)**

---

( ३ ) गण्डस्थलीं विपाण्डुं सन्दधती करकिसलयेन ॥
तामरसान्तरसंश्रितचन्द्रविलोकाद्भुतं तनुषे ॥

तत्पदं गौरीपरम् । अस्या इति गङ्गापरम् । प्रियसम्भोगप-रिश्रमेण गौरीवपुषि जलान्तर्गतत्वम्, ईर्ष्याविशेन गङ्गावपुषि अ-मर्षेऽपि तद्दहनतादात्म्यकपद्मरागप्रवेश उत्प्रेक्ष्यते । एवं नायि-कान्तरे प्रियानुरागदर्शने सपत्नीनां सन्तापातिशय एव स्या-दिति दुःसहत्वमेव सूचितम् ॥ ४०९ ॥

कश्चित्सत्पुरुषमाह —

**गन्धद्विप ! तव शक्ता नैव विपक्षद्विपाः पुरोभवितुम्॥**
**तत्सान्निध्यनिबन्धननिकर्षशङ्का स्थितैव मन्दानाम्४१०**

"यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः ।
तं गन्धवारणं विद्यान्नृपतेर्विजयावहम् ॥"

ततश्च गजान्तराणां त्वदग्रोपसर्पणसामर्थ्यमेव नास्ति । एतज्जानन्तस्तु यद्येनं विपक्षगजा अभियुञ्जीरन् तदास्य ज-यः स्यान्नवेति संशयेन पक्षे तवापकर्षमपि न सम्भावयन्ती-त्यर्थः ॥ ४१० ॥

इति गकारव्रज्या ।

---

गन्धारजा सुरेखा ऽऽसीमन्तात्पाण्डुपूर्वसहजात्ते ॥
जनयत्यङ्गजमङ्गीकृतविजयाग्रीयवैभवं जगति ॥
इत्यार्याद्वयं का० रा०पु० पुस्तकेऽधिकं वर्तते ।

गन्धारजेति । प्रियां प्रति कस्य चिदुक्तिः । गन्धारः=सिन्दूरं देशभेदश्च । "गन्धारः सिन्दूरे रागदेशयोः" इति विश्वः । पाण्डु-पूर्वसहजात्=पाण्डुगुणः पूर्वं सहजः स्वाभाविको यस्मिन् । आसी-मन्तात्=सीमन्तमभिव्याप्य स्थिता । पक्षे सीमन्तपर्यन्तं शोभनरे-खावती । यद्वा असुरेखासीमन्तात् इत्येकं पदं पाण्डुपूर्वेत्यस्य विशे-षणम् । असुरेखायाः प्राणरेखायाः सीमन्तभूतात् प्राणप्रियादित्यर्थः। पाण्डोः पूर्वः अग्रजः सहजो भ्राता धृतराष्ट्रः तस्मात् । अङ्गजः=कामः पुत्रश्च। अङ्गीकृतेति। धृतविजयश्रेष्ठचिह्नम् । पक्षे अङ्गीकृतं=हृतं विजयस्य= अर्जुनस्य अग्रीयः पूर्वजो युधिष्ठिरस्तस्य वैभवम्=ऐश्वर्यं येन तम् ।

कश्चित्प्रातः प्रियामाह—

**घटमानमम्बुजस्य स्तबके बाले ! निभालय भ्रमरम् ॥**
**शल्यमिव तत्पलाशान्योन्यविभागाय कृतमन्तः॥४११**

कमलकोरकोपरि समासीनो भ्रमरस्तद्विकाशार्थं पत्राणां परस्परविभागाय मध्ये निखन्यमानो लोहशङ्कुरिव दृश्यत इत्यर्थः । तथाच यत्र यस्यानुरागः स तत्र विलम्बासहिष्णुतया सज्जत्येवेति ममापि त्वयि समासक्तिरुचितेति व्यङ्ग्यम् ॥४११॥

काश्चिद्रतान्तावस्थायां प्रियामाह—

**घर्मोदबिन्दुभिस्तव करम्बितं भाति वदनमिदम् ॥**
**मुक्ताजालकतिलकितमुदन्वतोऽन्तः सुधांशुबिम्बमिव१२**

"मन्थौदन०" ( ६ । ३ । ६० ) इत्यादिनोदकशब्दस्योदादेशः । "करम्बो मिश्रिते वान्तो भान्तस्तु दधिसक्तुषु" इति विश्वः । मुक्तानां स्वेदबिन्दूनां च बिम्बप्रतिबिम्बभावः । समुद्रान्तर्गतत्वं तु चन्द्रविशेषणं तत्र मौक्तिकसंयोगोपपादनार्थमेवोपात्तम् । अतो मुखे तादृशविशेषणाभावेऽपि न दोषः । स्वेदस्य प्रकृते घर्माजन्यत्वेऽपि तज्जन्यस्वेदसाधारण्यात् घर्मेत्युक्तम् । अभिसारगमनादिसमयेऽप्येतदुक्तिसङ्घटनार्थं तदिति ध्येयम्४१२

कश्चित्प्रियादर्शनमुदित आह—

**घनविशदारुणकरया सम्पन्नपयोधरोदयया ॥**
**प्रणयिन्या घनसमयश्रियेव चेतः समुच्छ्वासितं ॥४१३**

घनमत्यन्तं स्वच्छौ रक्तवर्णौ करौ यस्याः । एतेनोत्तमत्वसूचनम् । तथाच सामुद्रिकम्—

"नेत्रौष्ठजिह्वाचरणकरं रक्तं भवेद्यदि ।
नरो भवेन्नृपो नारी राजपत्नी भवेद्ध्रुवम् ॥" इति ।

पक्षे मेघमध्ये विश्रन्तास्तिरोधीयमाना आरुणाः सूर्यसम्बन्धिनः करा किरणा यस्याम् । स्पष्टमन्यत् ॥ ४१३ ॥

इति घकारव्रज्या ॥

सकलामपि निशं मानगृहीतायामेव नायिकायां प्रभातवेलासम्पत्तौ काप्याह—

**चरणायुध इति विदितो विद्वद्भिस्ताम्रचूडजनः ॥**
**प्रहरति मनस्विनीनां हृदयानि परं गिरैवायम् ॥४१४॥**

अप्रामाण्यकल्पनावारणाय-विद्वद्भिरिति।तद्विरोधवारणाय बहुवचनम्। ततश्च चरणायुधेन चरणेनैव प्रहारः कार्यः। अयं तु प्रातःकालज्ञापनेन वचसैव तासां प्रहारं करोति दुःखजनकत्वादित्यर्थः। किंवा प्रातः प्रियविरहदूना काचिदिदमाह ॥ ४१४ ॥

दूती नायकमाह—

**चपलीकरोषि हृदयं त्वं तस्याः कुवलयश्यामः ॥**
**रससम्भृतान्तरात्मा मुदिर इव ज्योतिरर्कस्य ॥४१५॥**

कुवलयेत्यादिकमुभयानुगतम् । रसः=शृङ्गारो जलं च। "घनजीमूतमुदिर–" इत्यमरः । चपलीकरोषि=स्वविषयकाभिलाषाश्रयं करोषि। अथच "चञ्चला चपला अपि" इत्यमरः । विद्युद्रूपं करोषि। मेघान्तर्गतं सौरं ज्योतिरेव विद्युद्रूपेण भासत इति ज्योतिषशास्त्रम् ॥४१५॥

प्रतिसन्देशं गृहीत्वाऽऽगता दूती तदनुरागे संशयानं नायकमाह—

**चक्षुस्त्वदीक्षणोत्सुकमाकर्णितभवदुदन्तवृन्देन ॥**
**तस्याः श्रोत्रेण समं मिलितुमिव तदन्तिकं याति॥४१६॥**

अन्योऽपि यस्य दर्शनमिच्छति तद्वृत्तान्तवेदिना सह प्रथमं सङ्घटन इति भावः। अत्र मिलितुमित्यत्र मिलनं सौहृदेन किञ्चित्कार्यानुरोधरूपविशेषपरम्। अतो मिलनतदन्तिकगमनयोरभेद इति न शङ्क्यम्। एतेन सौन्दर्यमपि सूचितम्। अनेन त्वन्मिलनोपायपर्यालोचनपरा कथं निषेधं विधास्यतीति ध्वनितम्॥ ४१६॥

कश्चिदधरं पातुमिच्छन्नाह—

**चमसमिव हारियोजनमधरं तव सरसमिन्दुमुखि!॥**
**विहितामलकर्माणो निर्व्याजं सर्व एव लिप्सन्ते॥४१७॥**

हारि मनोहरं योजनं सम्बन्धो यस्य। सरसं मधुरत्वात्। विहितममलं पुण्यरूपं कर्म यैस्तादृशाः। कर्मपदस्योभयार्थत्वात्। लिप्सन्ते=पातुमिच्छन्ति। अथच सोमरसवन्तं हारियोजननामकं चमसं=सोमपात्रविशेषं सर्व एव ऋत्विजो भक्षयन्ति। "अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते" इति श्रुत्या हारियोजनचमसस्य सर्वैर्भक्षणं कार्यमिति (पूर्वमीमांसायाः) तृतीयाध्याये ( पञ्चमे पादे नवमेऽधिकरणे ) निर्णीतम्॥ ४१७॥

काचित् दूती नायिकामाह—

**चामीकरपङ्केरुहमुकुलं यत्रावभाति कुचदम्भात्॥**
**तन्मानसं सुतनु! ते विगाहते धन्य एव जनः॥४१८॥**

"चामीकरं जातरूपम्" इति सुवर्णपर्यायेऽमरः। मानसं चित्तमेव मानसं सर इति परम्परितरूपकम्। "पुण्यवान् धन्य" इत्यमरः। विगाहनं=प्रेमाविषयीभावः स्नानं च। यस्तव हृदयं प्रविशति स एव धन्य इत्युक्त्या नायकस्य त्वत्प्रणयार्थित्वमिति तस्या गुणकीर्तनं च व्यज्यते। पूर्वार्द्धगम्या-

पन्हुतिरूपकयोरङ्गाङ्गिभावात्सङ्करः । एकपदोपादानेन रूपकोल्लाससम्भवेऽपि धर्मोपन्यासपुरःसरस्य तस्याभ्यर्हितत्वादित्यर्थः ॥ ४१८ ॥

कश्चित्सखायमाह—

**चापाचार्यकमिव सा कुर्वाणा कुसुमविशिखस्य ॥**
**सविलासवेल्लितभ्रूर्वशंवदत्वं मनो नयति ॥ ४१९ ॥**

आचार्यस्य भाव आचार्यकम्=अध्यापकत्वम् । भरतः—

"स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ।"

(सविलासं) वेल्लिता कम्पिता भ्रूर्यया । एतेन कुञ्चिताख्यं कर्म सूचितम् ।

"मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते ।

निकुञ्चितं तु कर्तव्यम्" इति भरतोक्तेः । यद्वा स्निग्धदृष्ट्या नायकदर्शनात्तदनुरोधेनोत्क्षेप एव वेल्लनम् । तथाच शार्ङ्गदेवः— "अत्रैकभ्रूसमुत्क्षेपमाहुः कीर्तिधरादयः ।" इति । भ्रुवोस्तच्चापाकारत्वात्तद्वेल्लनेन कामस्य धनुर्विद्यामिव शिक्षयतीत्युत्प्रेक्षया तस्य मनोवशीकरणशक्तिर्व्यज्यते ॥ ४१९ ॥

कश्चित्स्नानोत्तीर्णां प्रियामाह—

**चातक इव तव कुन्तलबलाहकाभ्यन्तराद्गलितान् ॥**
**वरवर्णिनि ! वारिकणान्पिबन्नवाप्नोमि मुदमुच्चैः ॥ ४२० ॥**

पिबन्=पश्यन्नास्वादयंश्च । चातकोपमया स्वस्य तन्मात्रगतिकत्वं व्यज्यते । बलाहकोपमया केशानां घनत्वसूचनात् तदन्तर्गतजलस्य चिरकालपर्यन्तं गलनं सूच्यते ॥ ४२० ॥

चाक्षुषमपि च स्पार्शनमेकासामनुमितिश्च शाब्दं च ॥
अत्यन्तनिरवकाशं मानसमप्यस्मदीयं तु ॥ ४२१ ॥

········॥ ४२१ ॥

कश्चिन्नायिकामाह—

चापलतानमिता तव यावद्भ्रूर्युज्यते सह दृशा मे ॥
वरवर्णिनि ! वैसारिणकेतोरपि कर्णवीरुधा तावत्॥४२२

"मीनो वैसारिणोऽण्डजः" इत्यमरः । चापलस्य=विलासजन्यस्पन्दाविशेषस्य तानं=विस्तारमिता=प्राप्ता भ्रूर्यावन्मम चक्षुषा युज्यते तावदेव नमिता=दृढतरमाकृष्टा कामस्य चापलता=धनुर्वल्लिरपि कर्णलतयाऽतियोगमाप्नोति । तत्समकालमेव मद्भेदादित्यर्थः ॥ ४२२ ॥

( कश्चित्प्रियतमामाह— )

चाम्पेयमालिकोरसि तव तनुभासैव लम्भिताभिभवम्॥
मिलितापि मीलितेयं मिलिन्दमालेन्द्रनीलगुलिकाभिः ॥

(तनुभासा=शरीरकान्त्या । मीलिता=अभिभूता । मिलिन्दमाला=भ्रमरपङ्क्तिः । अत्र इन्द्रनीलमणिहारविशिष्टनायिकादेहेऽलिपटलसम्बद्धचम्पकमालाया अभेदेन भानात् सामान्यालङ्कारः। उक्तं च-अलङ्कारकौस्तुभे-"स्वगुणसजातीयगुणाश्रयैकरूप्यं तु सामान्यम्" इति । तेन च कान्त्यतिशयो व्यज्यते ॥४२३॥ )

काचिद्विदेशस्थनायके सन्देशमाह—

चाप इव सुन्दर ! त्वं वैदूर्यस्यैकबन्धुरसि ॥
येषां त्वमक्षिपथगः सफलं तज्जीवितं मन्ये ॥ ४२४ ॥

वैदूर्यं=विदूरस्य भावो विप्रकृष्टत्वम् । तस्यैकबन्धुः सर्वदा विदेशावस्थानात् । पक्षे वैदूर्यमणेः सदृशो लक्षणया । "वैदूर्यं

बालवायजम्'' इत्यमरः। ''बन्धुप्रख्यसुहृदादि'' इति सदृशार्थेषु कविकल्पलतायाम्। येषामिति। अस्माकं तु त्वद्दर्शनाभावाद्व्यर्थमेतदिति भावः। चाषदर्शनमपि सफलमिति प्रसिद्धिः ॥४२४॥

काश्चित्प्रियामाह—

**चिकुरकलापान्तरगाः करुणभवास्ते चकासति स्तबकाः॥**
**अर्द्धेन्दुसायका इव मौर्व्या मदनेन योजितास्त्वरया ॥**

करुणस्य मुकुलान्येव केशेषु ग्रथ्यन्ते इति सम्प्रदायः। धनुरभिमुखं बाणयोजनौचित्येऽपि त्वरातिशयेन केवलं गुणेनैव योजितत्वात्तथोत्प्रेक्षा। एतेन तद्दर्शने कामस्यान्यवेधे त्वरा भवतीति द्योत्यते। अत्रोपमाशङ्का न कार्या। अर्द्धचन्द्रसायकमात्रेण तात्सिद्ध्या मौर्वीयोजितत्वरूपसम्भावनोपयुक्तविशेषणवैयर्थ्यापत्तेः ॥ ४२५ ॥

काचिदभिसारसमयमाह—

**(१)चिररुचिरचिररुचिश्च प्रोत्साहयतो निकुञ्जगमनाय ॥**
**चरमा घनेन जनिताऽचरमा पुनरपघनेन दयितस्य ॥४२६॥**

चिरकालादुत्पन्ना रुचिरिच्छा। अचिररुचिः=विद्युत्। प्रकाशेन गमनानुकूलत्वात्। ''अपघनोऽङ्गम्'' ( ३ । ३ । ८१ ) इति निपातितः। स्वरूपतः कारणतश्च विरोधेऽपि द्वयोरेककार्यानुकूलत्वमिति चित्रमभिसारोल्लासितामित्यर्थः ॥ ४२६ ॥

---

(१) इयमार्या का० रा० पु० पुस्तके नास्ति। एतत्स्थाने—

चिरतरमिह दोषाणामासङ्गाद्भवति तेजसो हानिः।
जाड्यास्पदतां भजतो हिमसमयस्येव पिशुनस्य ॥

इति वर्तते।

काचित्सखीदमाह—

चिक्षेप यं प्रदीपे कुवलयकर्णावतंसमेणाक्षी ॥
स तदन्तरात्मनि पतन्मनोभुवो विशिख इव रेजे ॥४२७॥

अवतंसपदेनैव सिद्धे कर्णपदं सन्निधानप्रतीत्यर्थम् । तदुक्तं काव्यप्रकाशे—

"कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
सन्निधानादिबोधार्थम्" ( उ० ७ का० ५८ ) इति ।

"प्रदीपकलिकाकारम्" इत्युक्तेस्तत्र दीपसाम्यम् । वस्त्रापहरणलज्जया दीपनिर्वापणेच्छा । तथाच भरतः—

"नार्यास्त्वपहृते वस्त्रे दीपाच्छादनमेव च" । इति ।

उत्प्रेक्षया नायकस्य तदुत्तरमत्यन्तमदनोद्दीप्तिः सूच्यते॥४२७॥

काश्चित्प्रियामाह—

चिन्वाना वञ्जुलजाः करप्रवालेन सुमनसः सुतनु! ॥
तासां तदीयपल्लवविश्लेषदशामपन्हुते भवती ॥४२८॥

"स्त्रियः सुमनसः पुष्पम्" इत्यमरः । करं प्राप्यापि अशोकपल्लवविभागस्तासां(१) न जातः। त्वत्करस्यापि तथात्वादित्यर्थः। अत एव चिन्वानेत्यनेनैव सिद्धे न करग्रहणवैयर्थ्यम् । वस्तुतो जातेऽपि तद्विभागे तदनुपलक्षणसूचनाय—अपन्हुते इति । अत एव नेयं विशेषोक्तिः । ज्ञानाभावेऽपि कार्यस्य जातत्वात् । किन्तु रूपकध्वनिः ॥ ४२८ ॥

काश्चित्कटाक्षं स्तौति—

चित्रीयत एव मनो निभालनादप्यपाङ्गरागाणां ते ॥
वैलक्षण्येन पुनस्त्वदपाङ्गः सुहृदनङ्गस्य ॥ ४२९ ॥

(१)अत्र तत्पदेन सुमनसां परामर्शः ।

सर्वावयवानां लोकोत्तरगुणशालितयाऽद्भुतजनकत्वेऽपि कटाक्षस्य ततोऽप्युत्कृष्टविस्मयजनकत्वम् । अपगतमङ्गं यस्यापाङ्ग इति व्युत्पत्त्या तस्यानङ्गसमानधर्मकतयाऽङ्गान्तरापेक्षया मन्मथसम्बन्धोत्कर्षादिति भावः ॥ ४२९ ॥

कांचित्स्मयमानां कुलवधूं प्रिय आह—

**चीनासिचयाञ्चलेनापिहितादधराद्विनिर्यान्ती ॥**
**अतिनिस्तुषेव पयसो धारा तव भाति हासितश्रीः ॥४३०॥**

मुखमात्रस्य हास उत्तमस्वभावः । कुलजां प्रक्रम्य—"स्मयते सा निगूढं च वाक्यं चाधोमुखी वदेत्" इति भरतोक्तेः । हासितलक्षणमाह भरतः—

"उत्फुल्लाननेत्रं तु गण्डैर्विकसितैरथ ।
किञ्चिल्लक्षितदन्तं च हासितं तद्विधीयते" ॥

"स्मितहसितं ज्येष्ठानाम्" इत्यपि तेनोक्तम् । चीनपदं प्रक्रम्य "व्रीहिभेदेंऽशुकान्तरे" इति विश्वः । वस्त्रान्तरात्पतनेन शुद्धं दुग्धमिव भातीत्यर्थः ॥ ४३० ॥

नायकः सहचरमाह—

**चुम्बितलोचनवल्लभाबिम्बाधरचुम्बनेन धृतनैल्यम् ॥**
**तस्या वीक्ष्य स्तनमुखमालीभिः सिष्मिये निभृतम् ४३१**

चुम्बिते नेत्रे नायिकासम्बन्धिनी येनेति समासोऽत्र । एतेनाधरस्य कज्जलसंयुक्तत्वसूचनम् । तादृशप्रियाधरकर्तृकेण स्तनकर्मकचुम्बनेन स्तनयोर्मुखस्य नीलतामालोक्य तस्या गर्भधारणशङ्कया प्रमोदात्सख्यो हासिता इति भावः । तस्यास्तथाज्ञानेन लज्जोत्पत्तिवारणाय—निभृतमिति । स्तनमुखनीलत्वं दोहदचिह्नम् ॥ ४३१ ॥

काश्चिन्नायकसमादृतनायिकाद्वेषपरां हितैषिणी शिक्षयति—

चूडामणीकृतायाः स्पर्द्धाबन्धेन चन्द्रलेखायाः ॥
अधिकेतकि परमेशितुरनादरं स्पष्टमुल्लसति ॥४३२॥

कुटिलतया चन्द्रलेखासादृश्यम् । "नाऽक्षतैरर्चयेद्विष्णुं न केतक्या महेश्वरम्" इति निषेधादनादरः । पक्षे चन्द्रलेखात्वमाल्हादकत्वादिना । चूडामणीकृतत्वमतिपुरस्कृतत्वात् । एतेन प्रभुप्रिये वैरं न कार्यमित्युपदेशः सेवकानां दर्शितः ॥४३२॥

काचिन्नायिकार्थं कंचिदिदमाह—

चेतसि सन्नपि सुन्दर ! संयोग इवात्मना साकम् ॥
प्रत्यक्षविषयभावं दधासि न त्वं कदाचिदपि तस्याः ४३३

मनसि वर्तमानोऽपि ज्ञानविषयत्वात्कदापि तच्चक्षुर्गोचरे नावतरसीत्यनुचितम् । आत्ममनःसंयोगोऽपि ज्ञानहेतुभूतः सन्नपि अतीन्द्रियतया प्रत्यक्षो न भवतीति भावः । तथाचात्यन्तानुरक्ता यथा त्वां प्राप्य कृतार्था स्यात्तथा विधेयमिति हृदयम् ॥ ४३३ ॥

काश्चित्प्रियामाह—

चेले सति परवर्तिनि पुंवद्भावं न लभते स्त्री ॥
ह्रस्वत्वं प्रत्युत सा यायादिति शुद्धरीतिरियम् ॥४३४॥

"चेलं वसनमंशुकम्" इत्यमरः । परवर्तिनि=अङ्गबहिर्भूते सति लज्जया पुरुषायितं न लभते । किंतु तथाकृते तस्या अपकर्ष एव भवतीति शुद्धानां रीतिर्नतु रसज्ञानाम् । "न विनाम्बरमोचनम्" इत्युक्तेः । तादृशरतेन तस्या उत्कर्षोदयाच्च । अथ च चेलपदे कुत्सितार्थके परतः सति स्त्रीलिङ्गान्तं पदं पुंवत्त्वं न भजति किन्तु ह्रस्वत्वमेवेति शब्दसाधुत्वार्था रीतिः । विदुषिचेली-

त्यादौ "घरूपकल्पचेलड्ब्रुव० ( ६ । ३ । ४३ ) इत्यादिवचनेन पुंवद्भावं बाधित्वा ह्रस्वत्वस्यैव विहितत्वादिति भावः॥४३४॥

काचित्खण्डिता दूरान्नायकं पश्यन्ती सखीमाह—

(१)चन्दनचर्चितपरिमलमनिलस्य दवीयसोऽपि विघ्रोति॥
कुसुमान्तरात्ससम्भ्रममापतयालुर्द्विरेफसमुदायः॥४३५॥

दवीयसो=दूरतरस्य। घ्राणसंयोगे तत्प्रत्यक्षस्याप्युत्पत्तेः। अन्तरं=मध्यम्। तेन पुष्पं विहायेति लभ्यते। सौरभसाम्यवारणाय ससम्भ्रममिति। एकस्यान्यथापि गमनसम्भवात्समुदाय इति। अथच चन्दनलतासादृश्यात्काचिन्नायिका।

"परिमलो विमर्दे च स्यान्मनोहरगन्धवत्।

रतोपमर्दविकसद्देहरागादिसौरभे" इति विश्वः। अत एव—

परिमलरुचिराभिर्न्यक्कृतास्तु प्रभाते युवतिभिरुपभोगान्नीरुचः पुष्पमालाः" (स० १० श्लो० २७)इति माघः॥ ४३५॥

काश्चिद्रतिसामग्रीं सज्जयन्तीं नायिकामवलोकयन्नाह—

चम्पककलिकां सूचीशिखया ग्रथनाय विध्यन्त्या॥
निर्यातितमिव वैरं रतिप्रतीपेषु दीपेषु॥ ४३६॥

ग्रथनाय=मालारूपत्वसिद्धये। सूच्यग्रेण चम्पककोरकभेदनेन नायककर्तृकस्वाङ्गदर्शनादिलज्जया रतप्रतिबन्धात्तत्प्रतिकूलेषु प्रदीपेषु वैरशुद्धिरिव कृतेत्यर्थः। एतेन मौग्ध्यं सम्भोगेच्छा च

---

(१) का० रा० पु० पुस्तके नास्ति। एतत्स्थाने—
चन्दनलते! विकसता विष्वद्रीचा परिमलेन।
न क्षणमात्रमपि त्वं वहसि वियोगं भुजङ्गवरैः॥
इति वर्तते।

ध्वन्यते । "बाला नूतनसङ्गमे रतिकरी सान्द्रान्धकारे भवेत्" ( पञ्चसायके २ सायके श्लो० १५ ) इति कामशास्त्रम् । फुल्लेषु दीपसाम्याभावात्कलिकेति । तस्याः प्रदीपाभेदप्रतीते रूपकध्वनिः ॥ ४३६ ॥

इति चकारव्रज्या ।

काचिद्विस्रब्धनवोढावृत्तमाह—

छद्मनिमीलितनयना प्रियपाणिस्पर्शपुलकितकपोला ॥
रक्षति च मुग्धभावं मानयति च मान्मथीमाज्ञाम् ॥४३७॥

प्रबोधदशायां दयितकरानपसारणे मुग्धतायाः तदपसारणे च कामाज्ञाया व्याघातः स्यात् । व्याजेन नयननिमीलने तु इयं निद्रया मत्करं नापास्यतीति नायकेन ज्ञानान्मौग्ध्यरक्षा तत्स्पर्शसुखानुभवाच्च कामानुज्ञापालनमिति उभयमपि सम्पन्नमिति भावः । एतेन लज्जामदनयोः समबलत्वं व्यञ्जितम् ॥ ४३७ ॥

तादृशरूपरहितायामपि कस्यांचिदनुरज्यमाने नायके काप्याह—

छायाया बाहुल्ये लिङ्गान्तरमाह पाणिनिर्युक्तम् ॥
हृदयवशीकरणं खलु विलक्षणादृष्टसंसाध्यम् ॥४३८॥

हृदयानुरागोत्पत्तिमात्रेण शोभाबाहुल्यं नानुमेयम् तस्य प्राग्भवीयादृष्टविशेषादेवोत्पत्तेः । अतस्तदर्थं लिङ्गान्तरम् अन्य एव हेतुरन्वेष्य इत्यभिप्रायेण "छाया बाहुल्ये" ( २ । ४ । २२ ) इति सूत्रं प्रणीतमित्यर्थः । तत्रानुरागातिरिक्तो हेतुरिति शेषं दत्त्वा तदेव योजितम् । तदर्थस्तु बहुवचनान्तकिञ्चिच्छब्दोत्तरवर्तिनश्छायापदस्य तत्पुरुषे स्त्रीलिङ्गातिरिक्तं क्लीबलिङ्गं भवति । यथा इक्षूणां छाया इक्षुच्छायमित्यादौ ॥ ४३८ ॥

काश्चिदल्पगुणोऽप्यऽकिञ्चित्कर एवेत्याह—

छिदुरेण गुणगणेन व्याप्तं येषां सदा हृदयम् ॥
तेषां मृणालकानां मुखमुद्राजीवमित्युचितम् ॥ ४३९ ॥

छिदुरः=अस्थिरः । कर्मकर्तर्ययं प्रयोगः । विस्तरो नैषधभावप्रदीपे । गुणाः=तन्तवो विद्यादयश्च । हृदयं=मध्यमात्मा च । मुखम्=अग्रं वदनं च । उद्गतं राजीवं कमलं यत्र तथा । अथ च आजीवं=जीवनपर्यन्तं मुखस्य मुद्रा=सङ्कोचः । प्रतिवादिभिः सममुद्ग्राहासामर्थ्यात् ॥ ४३९ ॥

कश्चिन्नायिकामाह—

छुरिकेव भृशनिशाता करिणीवोन्नमदुरोजकुम्भतटा ॥
निपुणं निरूप्यमाणा प्रिये! त्वमसि धेनुका सत्यम् ॥४४०॥

"धेनुकं करणे स्त्रीणाम्" इति विश्वः । इदं च बन्धमात्रमत्रोपलक्षयति । तदस्त्यस्याः तदभिज्ञत्वादिति धेनुका । मत्वर्थे अच्प्रत्ययः । तादृगसि । निशाता=तीक्ष्णा । मानावसरे क्रोधनत्वात् । छुरिकाप्यसिधेनुका भवति । "छुरिका चासिधेनुका" इत्यमरः । उरोजौ स्तनावेव कुम्भौ । पक्षे उरोजतुल्यौ कुम्भौ । करिण्यपि धेनुका भवति । "करिणी धेनुका वशा" इत्यमरः ॥ ४४० ॥

इति छकारव्रज्या ॥

काश्चित्प्रकृतिर्जन्मान्तरेऽप्यनुबध्नातीत्याशयवानाह—

जन्मान्तरेऽपि नूनं तदभाववतां न तत्सङ्गः ॥
समजनि दिगम्बरः किल रूपेऽन्यत्रापि दुर्वासाः ॥४४१॥

तत्पदं प्रकरणवशाद्बुद्धिस्थतत्तद्वस्तुपरम् । यस्यैकजन्मनि यः पदार्थो नास्ति तस्य स जन्मान्तरेऽपि न भवत्येव

THE

# CHOWKHAMBA SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 347

# आर्यासप्तशती

पर्वतीयश्रीविश्वेश्वरपण्डितविरचिता

तत्कृतयैव टीकयाऽपेता ।

नेपालदेशीय-

विष्णुप्रसादभण्डारिणा

संशोधिता ।

# ARYASAPTASATI

By

PARVATIYA SRI VISVESVARA PANDIT.

With a commentary by the author,

*Edited by* Vishnu Prasada Bhandari,

*of Nepal.*

FASCICULUS III—३.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1925.

## Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

कदाचिद्भवति चेत्तदा साधीयान्नैव भवति । यतो दिगम्बरतया वस्त्रसामान्याभाववतो भगवतः शिवस्यापि अवतारान्तरे दुर्वासस्त्वमेव जातम् । दुर्वासा=मुनिः । अथच दुष्टं वासो यस्य स दुर्वासाः । तथाच वासःसत्त्वेऽपि सम्यग्वासोलाभो न जात एवेति भावः ॥ ४४१ ॥

कंचित्खलं स्वसमानशील एवासक्तं दृष्ट्वा कोऽप्याह—

**जडहृदयानि विगाहितुमेवंविध एव पारयति नूनम् ॥**
**अग्राहि सिन्धुमथने विबुधैरपि मन्दरक्षितिभृत्॥४४२॥**

जडानां=मूर्खाणामन्तःकरणं जड एव विगाहितुं=ज्ञातुं शक्नोति । अथच डलयोरैक्याज्जलमध्यानि जड एव प्रविशति । यतो विबुधैर्देवैः । अथच विज्ञैरपि । समुद्रमथनार्थं मन्दराचल एव पुरस्कृतः । तस्याचेतनत्वेन जडहृदयतया जलरूपसमुद्रप्रवेशसामर्थ्यात् । तेषां च विबुधतया विपरीतशीलत्वेन तदभावादिति भावः ॥ ४४२ ॥

काचित्स्वैरिणी सखीमाह—

**जयति स पत्युरसामञ्जस्यादितिसूत्रयित्वा यः ॥**
**सम्बन्धानुपपत्तेश्चेत्याहाध्यक्षितात्मतत्त्वोऽपि ॥४४३॥**

प्रत्यक्षीकृतब्रह्मतत्त्वेनापि व्यासेन द्वितीये—"पत्युरसामञ्जस्यात्" ( अ० २ पा० २ अधि० ७ सू० ३७ ) इतिसूत्रानन्तरं "सम्बन्धानुपपत्तेश्च" (अ० २ पा० २ अधि० ७ सू० ३८) इति सूत्रितत्वात् । पत्युः=भर्तुः=असामञ्जस्यात् =अपकृष्टरूपवत्त्वेनानर्हत्वात्, सम्बन्धस्य=तत्सम्भोगस्यानुपपत्तेश्च स्वाभीष्टनायकसम्भोग एव कार्यं इति तत्तात्पर्याधिगमात्तस्यात्यन्तरसिकत्वेन

सर्वोत्कर्ष इत्यर्थः। सूत्रद्वयं तु पाशुपतमतनिरासार्थकम्। (१) तथाहि–ईश्वरो नोपादानं नियामकत्वात्। यन्नियामकं तन्न तदुपादानं यथा कुलालादिर्घटादेः। अत ईश्वरो निमित्तमेव। श्रुत्यापि नेश्वरसिद्धिः। ईश्वरसिद्धौ तदुक्तत्वेन तत्प्रामाण्यं तत्प्रामाण्ये चेश्वरसिद्धिरित्यन्योन्याश्रयात् ॥ ४४३ ॥

काचित्पथिकाभिप्राया सखीमाह—

(२)जरति गृहे सखि! भवति द्वारैक्येनापि किं भयसमाधिः।
चाक्षुषमात्रनिरोधनफला हि वृतयः करापास्याः ॥ ४४४ ॥

एकद्वारे गृहे चौरादिभ्यो रक्षा कर्त्तुं शक्यत इति न मन्तव्यम्। यतो वृतीनां जीर्णतया तद्द्वारेणापि प्रवेशः सम्भवतीति यथाश्रुतार्थः। प्रसिद्धमार्गेण प्रवेशानवाप्तावपि करेण वृतिभेदं कृत्वा मत्सकाशमागन्तव्यमिति व्यङ्ग्यार्थः ॥ ४४४ ॥

नायिकान्तरमपहाय तस्यामासक्ते नायके पुनरन्यासक्तिं कुर्वति काप्याह—

जहदप्येकं दोषं दोषाभीष्टोऽपरं तमाप्नोति ॥
कौटिल्यमपि विमुञ्चन्वहति कलङ्कं कलानाथः ॥४४५॥

दोषा अभीष्टा यस्य। पक्षे दोषाणां=रात्रीणां प्रियः।

---

(१) प्रधानं परमाणवो वा जगदुपादानमिति तन्मतम्। दूषणं तु पत्युरीशस्योपादानत्वमेवानुपादानानुमानत्वस्य असामञ्जस्यात्=दुष्टत्वात्। तदेवाह–सम्बन्धानुपपत्तेश्चेति। उपादानत्वाभावरूपसाध्यस्य पक्षीकृते ईश्वरे सम्बन्धानुपपत्तेः। प्रथममीश्वरस्यैवासिद्धत्वादाश्रयासिद्धेः। न च श्रुत्यैव तत्सिद्धिः। जगदुपादानतयैव श्रुतित ईश्वरसिद्ध्या तदभावानुमाने बाधात्। इयं टिप्पणी आदर्शपुस्तकस्था।

(२) इयमार्या का० रा० पु० पुस्तके नास्ति।

अपूर्णचन्द्रस्य कुटिलतारूपो दोषः। कलापूर्त्यां तद्विमोकेऽपि कलङ्करूपदोषान्तराभ्युदयादिति भावः। एतेन "यः सकृत्पातकं कुर्यात्कुर्यादेव ततः परम्" इति न्यायः सूचितः ॥ ४४५ ॥

कश्चित्प्रातर्वर्णयति—

**जालकपदार्थयोगः प्रत्यूषे भवति कमलमुकुलानाम् ॥**
**किंचोच्छ्वसितपलाशान्तरालनिर्यद्दृगलियोगात् ४४६**

किञ्चपदमीषदर्थकम्। "किञ्चाञ्चितभ्रूलतम्" इत्यादिदर्शनात्। ईषद्विभज्यमानपत्रान्तरमार्गेण बहिः प्रेक्षमाणानां रात्रौ मुकुलान्तर्गतानां भ्रमराणां सम्बन्धेन एषां जालकत्वं सम्पन्नम्। जालमार्गेण केनचिद्विलोकनादिति भावः। "प्रत्यूषोऽहर्मुखं कल्यम्" इत्यमरः। "जालं गवाक्ष आनाये क्षारके दम्भवृन्दयोः" इति विश्वः ॥ ४४६ ॥

कश्चिद्वर्षासु प्रियामाह—

**जाम्बूनदवीरुदिव स्तम्भे लिखिता महेन्द्रनीलस्य ॥**
**सौदामिनी नवीने बलाहके वितनुते कुतुकम् ॥४४७॥**

परस्परसम्बन्धेन परस्परशोभोत्कर्षात् कुतुकम्। इन्द्रनीलबलाहकयोर्बिम्बप्रतिबिम्बभावः। तथाचावयोरपि परस्परयोग उचित इति व्यङ्ग्यम्। यद्वा काञ्चिच्चपलचित्तां नायिकामधिकृत्य कोऽप्याह। पूर्वार्द्धे व्यतिरेकदृष्टान्तः। यथा नीलमणिस्तम्भगतसुवर्णद्रवनिर्मितलता स्थायितया चिरकालं कौतुकं करोति। तथा मेघलग्ना सौदामिनी न करोति। काकुप्राधान्यात्। एवंच प्रशस्तनायके तादृश्य एव स्थिरा भवन्ति न तु तद्विपरीता इति भावः ॥ ४४७ ॥

कश्चिन्नवोढावृत्तमाह—

(१)जाह्नव्या इव भव्या नव्या या रीतिरव्याजा ॥
यद्यमुनामिलनादनु दधाति वैदेहसंयोगम् ॥ ४४८ ॥

प्रयागावच्छेदेन यमुनासंयोगं पूर्वमनुभूय वैदेहस्य=मिथिलादेशस्य संयोगं भागीरथी लभते इति रीतिः। नवीनयुवतिरपि अमुना=नायकेन मिलनात्=नायककर्तृकसंयोगात् अनु=पश्चादेव देहसंयोगं दधाति। प्रथममतिभयात्स्वयंपरिरम्भानारम्भादिति भावः। वैशब्दोऽत्र निपातः। नच तद्वैयर्थ्यं श्लेषोपपादकत्वात्। यदीति असन्देहे सन्देहः। 'शास्त्राणि चेत्प्रमाणं स्युः' इत्यादिवत्। आश्लेषवैमुख्यस्यानुरागविरहाननुमापकत्वसूचनार्थम्–अव्याजेति ॥ ४४८ ॥

---

(१) का० रा० पु० पुस्तके इत आरभ्य आर्यात्रयं नास्ति। तत्स्थाने—

जाम्बवतीव नतभ्रूर्निरुपाधि निरूप्यमाणेयम्।
या सौरतनयजननी श्यामा माधुर्यरसपूर्णा ॥
जिह्रेति न कस्य मनस्त्वामभिवीक्ष्योत्तिलोत्तमातुलिताम्।
सर्वोत्तमासि सुन्दरि ! यस्मात्त्वं तत्तदवयवेषु ॥
इति पद्यद्वयं वर्तते।

सौरतेति। सौरताः=सुरतसम्बन्धिनो ये नयाः प्रकाराः तज्जननी। पक्षे सौरेः कृष्णस्यायं सौरः यः तनयः=सुतः साम्बाभिधः तस्य जनयित्री। अथवा सुर एव सौरः। स्वार्थेऽण्। सूरः=सुभटः। अन्यत् पूर्ववत्। सूरशब्दस्तालव्यादिर्दन्त्यादिश्च। "सूरश्चारुभटे सूर्ये" इति विश्वः। श्यामा=षोडवार्षिकी कृष्णवर्णा वा। माधुर्येति। माधुर्यरसेन पूर्णा माधुर्येण रसेन चेति वा। पक्षे मधुरायां भवा माधुराः तत्र साधुर्माधुर्यः कृष्णः तस्मिन् रसेन=अनुरागेण पूर्णा। "मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः" इति विश्वः। मायाः श्रियः धुर्य इति वा।

काचित्सपत्नीं कस्यचिदर्थे प्राह—

**जागर्ति न नागरजो रागोऽयं भाल एव तव बाले ! ॥**
**किं त्वस्मिन्नप्ययमिति बहलयति कुतूहलं हृदये॥४४९॥**

नागरजः=( नागस्य रजः ) सिन्दूरं तस्य राग इति षष्ठीसमासः । अस्मिन्नपि=नागरजोरागेऽपि । अयं=नागरजो रागः नागराद्विदग्धाज्जातो नागरजः रागोऽनुराग इति पदद्वयम् । नागरजोरागे नागरसमवेतरागाभेदारोपाद्भालाश्रयत्वमद्भुतसम्पादनात्कुतकमिति भावः । तथाच त्वद्विषयकरागादेव त्वत्सम्बन्धिनि तत्रानुरागोत्पत्त्या त्वद्विषयकानुरागातिशयशालिनि तस्मिन्सर्वथापि त्वयोपेक्षा न विधेयेति तात्पर्यम् ॥ ४४९ ॥

काचिन्मुग्धायाः प्रोषितभर्तृकाया वृत्तमाह—

**जिह्रियति रेखाभिर्गणनायां प्रियवियोगदिवसानाम् ॥**
**युगपत्प्रोषितपतिकप्रतिवेशिन्यैव तन्नयति मुग्धा४५०**

स्वयं रेखान्यासपूर्वकं दयितवियोगदिनानि सङ्ख्यातुं लज्जमाना समानसमयप्रोषितभर्तृकायाः प्रतिवेशिन्याः सम्बन्धिनीभिरेव यथोक्तरेखाभिर्मनसा स्वप्रियप्रवासदिवसान् गणयति । एकरेखाभिर्निर्वाहात्तन्त्रत्वम् ॥ ४५० ॥

काश्चित्प्रियामाह—

**जीवं समाकुलयति त्वन्मुखपीयूषरश्मिरयम् ॥**
**अतिरमणीयां तारां तरलीकृत्यात्मसङ्गेन ॥ ४५१ ॥**

कटाक्षविजृम्भणेन त्वन्मुखमन्तरात्मानं मदीयं विक्षोभयति । चन्द्रोऽपि तारासंज्ञां गुरुभार्यां स्वसमासक्तां कृत्वा जीवं=बृहस्पतिं समाकुलितवानिति पुराणेषु स्पष्टम् । अत्र आत्ममुखकनीनिकासु गुरुचन्द्रताराणामारोपः । तत्रापि ( आत्म-

गुर्वोः ताराकनीनिकयोः ) उभयोरेकपदोपस्थापितत्वं मुखचन्द्रयोस्तु भिन्नपदगम्यत्वमिति विशेषः ॥ ४५१ ॥

कश्चित्प्रावृषं वर्णयति—

जीमूतव्यपदेशाद्गगनेन शिवस्य तनुविशेषेण ॥
चन्द्रमुखि! सङ्गृहीता कृत्तिः स्तम्बेरमस्येयम् ॥४५२॥

आकाशं शिवस्य मूर्तिविशेष इति स्पष्टम् । ततश्च शिवस्य गजचर्मवसनतया तद्विशेषेण गगनेनापि मेघच्छलेन गजचर्म परिहितमित्यपन्हुतिः । "इभः स्तम्बेरमः पद्मी" इत्यमरः । "स्तम्बकर्णयोरमिजपोः" ( ३ । २ । १३ ) इत्यच् । "हलदन्तात्" ( ६ । ३ । ९ ) इति सप्तम्या अलुक् ॥ ४५२ ॥

कस्याश्चित्सखी नायकमाह—

जीवनयत्नेनेव त्वया तदिच्छानधीनेन ॥
निर्गतिरथ प्रवेशनमस्याः प्राणस्य तन्यते सततम् ४५३॥

(तदिच्छानधीनत्वं=) नायिकेच्छानधीनत्वम् । तद्धि प्रियस्यापि ( तव ) विप्रलम्भपीडया प्राणनिर्गमनं त्वत्प्रणयाशया च पुनस्तत्प्रवेशनम्(करोति) । जीवनयत्नो=जीवनतो यत्नोऽपि इच्छानधीनः । प्रयत्नान्तरस्येच्छाजन्यत्वेऽप्यस्यादृष्टविशेषाद्विनैवेच्छां समुत्पत्तेः । सोऽपि प्राणस्य निर्गमप्रवेशौ करोति । तेन प्राणपञ्चकसञ्चारोत्पत्तिरिति सिद्धान्तात् । एतेन मरणावस्थाया जातप्रायत्वसूचनम् । वैरस्याधायकत्वेन साक्षात्तस्यानभिधेयत्वात् । तदुक्तं साहित्यदर्पणे—

"रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ।
जातप्रायं तु तद्वाच्यं मनसाकाङ्क्षितं तथा" ( प० ३ का० १९३ ) इति ॥ ४५३ ॥

काचिद्दूती नायकमाह—

(१)जृम्भायामम्भोरुहनयनाया भवदवेक्षणभवायाम् ॥
पुलकोदञ्चितकञ्चुकसन्धिभिराधायि चटचटाशब्दः ॥

कञ्चुकबन्धनभ्रंशजन्यैः शब्दैर्जृम्भाकालयोग्याङ्गुलिच्छोटिकाशब्दो दत्त इति भावः ।

"क्षुतोत्पतनजृम्भासु आयुः प्रक्षीयते नृणाम् ।
पार्श्वस्थैस्तत्र कर्तव्यो जीवोत्तिष्ठाङ्गुलिध्वनिः" ॥ इति सम्प्रदायोक्तेः ॥ ४५४ ॥

दूती नायकमाह—

जैगीषव्यमिव त्वां देवलदृग्वृत्तिरिव सुतनुः ॥
यत्र प्रयाति पश्यति तत्रैव पुरःस्थितं सहसा ॥४५५॥

भावनाविशेषेण सर्वत्रापि त्वामेव पश्यतीत्यर्थः । अनेन वस्त्वन्तरविशेष्यकचाक्षुषभ्रमो विवक्षितः । तदुक्तं खण्डनकृता "भावनाबलजश्च क्वचिदालोकादिधर्मिकप्रियाद्याश्रयधर्मारोप" इति । चक्षुःसन्निकृष्टे आलोकादौ प्रियाप्रियभावनोपनीतधर्माणामारोपः । एवं च योग्यवस्त्वन्तरग्रहे तत्रैव आकाशादौ च तद्गतालोकस्य भ्रम इत्यर्थः । देवलोऽसित आब्रह्मलोकात् यत्र गतस्तत्र प्रागेव गतं जैगीषव्यं दृष्टवानिति गदापर्वणि कथा ॥ ४५५ ॥

कश्चित्प्रियामाह—

जैमिनिनेवानीश्वरजगता त्वदपाङ्गभङ्गेन ॥
चैतन्यमपि सुराणामीषत्करमेव परिहर्तुम् ॥ ४५६ ॥

---

१ का० रा० पु० पुस्तके इयमार्या नास्ति ।

(१) (अनीश्वरजगता=)स्वनिपातसहनासमर्थजनेन त्वत्कटाक्षेण देवानामपि चैतन्यपरिहारः सुकरः । तन्मोहजननसामर्थ्यात् । अनीश्वरम् ईश्वराकर्तृकं जगत्=क्षित्यादिकं यस्य तादृशेन ईश्वरानङ्गीकर्त्रा जैमिनिनापि देवतानां चैतन्यं निराकृतं शब्दरूपदेवतास्वीकारात् । देवताविग्रहप्रतिपादकानामर्थवादादीनामन्यपरत्वेन प्रमाणान्तरानवगततद्विग्रहतात्पर्याभावेन देवताविग्रहपक्षस्य तेनानङ्गीकारादिति भावः ॥ ४५६ ॥

इति जकारव्रज्या ॥

काश्चिदशोककुसुमोच्चयनलीलां पश्यन्नाह—

झणदकृत कङ्कणगणो वञ्जुलविटपं विनमयन्त्याः ॥
तत्किसलयातिशयितं स्वाश्रयमालक्ष्य मुदित इव ४५७

पुष्पोच्चयार्थमशोकशाखां नमयन्त्या नायिकाया वलयोत्करः परस्पराघातेन कूजितं कृतवान् । तत्र स्वाश्रयभूतं तत्पाणिम् अशोकपल्लवापेक्षया द्युतिमत्तरमवलोक्य तज्जन्यप्रमोदभरो हेतुत्वेनोत्प्रेक्ष्यते । एतेन स्वोत्कर्षवत् स्वाश्रयोत्कर्षोऽपि संमदमादधातीति सूचितम् ॥ ४५७ ॥

काश्चित्सङ्केतस्थानं सूचयन्नाह—

झिल्लीरुतापदेशान्मन्दिरमेतद्विरौतीव॥
कालातिक्रमपरिगलदवयवशैथिल्यवेदनाविधुरम् ४५८

अतिजीर्णतया सर्वाङ्गाणां परस्परसंयोगशैथिल्यजन्यपीडयेव रोदितीत्यर्थः । झिल्लीशब्देन तस्य शून्यत्वमुक्तम् ।

"व्याधितव्यपदेशेन शून्यागारनिवेदनैः ।

---

(१) अनीश्वरं जगत् यस्येति बहुव्रीहिर्बोध्यः ।

कार्यः समागमो नृणामेषु प्रथमसङ्गमे ॥"

इति भरतोक्तेः ॥ ४५८ ॥

इति ञव्रज्या ॥

काश्चित्प्रियामाह—

टङ्कैः परिणतसुरगजदशनैः कनकाद्रिवप्रेषु ॥
स्तनयोस्तव प्रशस्तिर्वरवर्णिनि ! भाति लिखितेव ॥४५९॥

"तिर्यद्दत्तप्रहारस्तु गजः परिणतो मतः ।" इति हलायुधः । टङ्क इति प्रकम्य—"टङ्कणे ग्रावदारणे" इति विश्वः । अन्यस्यापि जयिनः कनकपट्टादौ टङ्केनोत्कीर्य्य प्रशस्तिं लिखन्तीति भावः । एतेन स्तननिरूपितसादृश्याभिमतेषु मेरुशिखरेषु तादृशकुम्भसम्बन्धिगजविषाणानां प्रशस्तिलेखनोपायत्ववर्णनात् वस्तुतस्तेषामुभयेषामपि स्तनसादृश्यं नास्तीति व्यञ्जितम् ॥४५९॥

इति टव्रज्या ॥

कश्चिन्मानिनीमाह—

डिण्डिम इव कुसुमायुधनिदेशघोषणाविधिप्रहतः ॥
सहचरि ! चारु निरूपय जीमूतो नूतनः स्वनति ॥४६०॥

निदेश=आज्ञा, तस्य घोषणं=तदुल्लङ्घनविधायिनामनर्थोत्पत्तिबोधनार्थं प्रख्यापनं, तदर्थं ताडितः । एतेन त्वयापि मानवशात्तदाज्ञोल्लङ्घनं न कार्यम् अन्यथा निद्राच्छेदादिबहुविधदुर्दशापत्तेरिति सूचितम् । चारु=एतादृशार्थानुसन्धानपूर्वकमित्यर्थः ॥ ४६० ॥

काचिद्यमुनातीरं सङ्केतस्थानं सूचयन्त्याह—

डिण्डीरपिण्डपाण्डुरमवलोकय यामुनं स्रोतः ॥
निजनीरभवनिकुञ्जप्रसूनसन्तानकीर्णमिव ॥ ४६१ ॥

"डिण्डीरोऽब्धिकफः फेन" इत्यमरः । निजपदं प्रवाहपरम् । प्रसूनपदेन सामान्यतः शैत्यप्रतीतिरिति सम्प्रदायः । फेनस्य कुञ्जच्युतपुष्पतादात्म्योत्प्रेक्षा ॥ ४६१ ॥

इति डव्रज्या ।

कश्चिन्नवयौवनामाह—

ढौकित इह मनसि तवागताय मदनाय यौवनेन मुदा ।
हाटकसम्पुटकोऽयं वरतनु ! वक्षोरुहव्याजात् ॥ ४६२॥

मदनाधिकारिणा तव तारुण्येन प्रथममेव स्थलपरिष्कारायं त्वत्कलावतीर्णेन पश्चादागताय प्रभुस्थानीयाय कामाय उपहारीकृतः सुवर्णसमुद्गक एवायं न तु स्तन इति अपन्हुतिः । "समुद्गकः सम्पुटक" इत्यमरः । एतेन तयोर्महत्त्वकाठिन्यव्यञ्जनम् । अत्र भरतः—

"पीनोरुगण्डजघनस्तनाधरं कर्कशं रतिमनोज्ञम् ।
सुरतं प्रति सोत्साहं प्रथमं तद्यौवनं विद्यात् ॥" इति ।

उपहारदानेन मदनागमस्य नवीनत्वभानात्प्रथमयौवनं व्यञ्जितम् ॥ ४६२ ॥

इति ढव्रज्या ।

चञ्चलनायकां कांचित्सखीदमाह—

तरलेन स्तनकलशादुपलब्धस्तव बहिर्भावः ॥
सद्वृत्तैः पुनरेभिस्तत्सङ्गो मौक्तिकाविशेषैः ॥ ४६३ ॥

मध्यमणिना हारोपान्तस्थतया तथा कुचसंयोगो न प्राप्तो यथा मौक्तिकैः । एवं चपलवृत्तिना त्वदाश्लेषसुखं न प्राप्तम् । किंतु सत्=प्रियानुकूलं, वृत्तं=चरित्रं येषु । तेनैव । व्यञ्जनामात्रेण तादृशबोधसत्त्वात् । तत्र प्रसयार्थबहुत्वावगमानावश्यकत्वात् । तथाच भरतः—

"अतीतभावातिगमात्तथातिप्रियसेवनात् ।
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते॥" इति ॥४६३॥

काचिदातपोत्कर्षं सङ्केतस्थानं च सूचयन्तीदमाह—

**तटसम्भववानीरप्रतिबिम्बनिकुञ्जमासाद्य ॥**
**नैदाघदाहदुःस्थः पूरो विश्राम्यतीव रेवायाः ॥ ४६४ ॥**

(जलौघः स्वप्रति)बिम्बितवेतसनिकुञ्जान्तरे ग्रीष्मजन्यातपविनोदार्थमिव तिष्ठति । तथाच शीतस्वभावस्य जलस्याप्येवंविधावस्थायां त्वमपि तत्र किंचिन्निदाघविपदमतिवाहयेति ध्वनितम् ॥ ४६४ ॥

काश्चित्प्रियामाह—

**तरुणिमनिदाघसमये तवातिमुक्तोऽपि ताम्यति सुगात्रि!**
**केवलमहानि सततं वर्द्धन्ते कामविलसितानि ॥४६५॥**

तरुणिमेति तरुणत्वपदापेक्षया कुमारं वयः(१) प्रतीयत इति काव्यप्रकाशे(२)। स एव निदाघः। विषयानवाप्तौ तापकरत्वात्। (अतिमुक्तः=) मुक्तावस्थां प्राप्तः क्षीणकषायोऽपि, ताम्यति=त्वद्रागोत्कर्षेण मदनपारवश्यं लभते । न विद्यते हानिरपचयो यत्र एवं यथा स्यात्तथा । मदनाविजृम्भितानि=तद्व्यापारा वर्द्धन्ते । उत्तरोत्तरं तदुत्कर्षात् । ग्रीष्मेऽपि अतिमुक्तो=वासन्ती म्लायति । वसन्ते पुष्पोदयात् । काममसन्तं विलसितं स्थितिर्येषां तादृशानि अहानि=(दिनानि) वृद्धिं यान्तीत्यर्थः ॥ ४६५ ॥

कश्चित्प्रियां प्रशंसन्नाह—

**नलिनेतरां मलिनतामलिनीरन्ध्रा दधाति नलिनीयम्॥**
**भवदवलोकनादिवसावधि नीलावरणगुण्ठिताङ्गीव ४६६**

---

(१) अत्र 'सुकुमाराक्षरतया नवं वयः' इति पाठोऽपेक्षितः ।

(२) चतुर्थोल्लासे "तरुणिमनि कलयति" इत्यत्रेत्यर्थः ।

( तलिनेतराम्=अधिकाम् ) "तलिनं विरले स्तोके" इति विश्वः। अलिभिर्भ्रमरैर्नीरन्ध्रा=छिद्ररहिता। संवृतेति यावत्। पद्मिन्यास्तव एतदपेक्षया तत्तन्निमित्तसौन्दर्यातिशयात्स्वापकर्षेण लज्जया सर्वानगुणानिव संवृत्यतिष्ठतीत्यर्थः। इयमिति प्रत्यक्षवदुक्त्या दूराच्चथादर्शनाद्भ्रमरणां तत्र निश्चलावस्थानेन तत्स्थानस्य निर्जनत्वलाभात्सङ्केतस्थानमेतदिति व्यज्यते ॥ ४६६ ॥

कश्चिन्मदनस्य लज्जानिरासकत्वं पश्यन्नाह—

**तनुतरमरुदान्दोलितदुग्धोदधिवीचिबिन्दुसिक्ताङ्ग्याः॥**
**करतलपिहितप्रियतमवामदृशो जयति विहरणं लक्ष्म्याः॥**

स्थूलजलावयवानामागमनवारणाय-तनुतरेति मरुद्विशेषणम्। तादृशस्थूलावयवोपनयनशक्त्यभावादर्थतो बिन्दूनां तनुत्वं लभ्यते। "आन्दोलितकचापले" इति कल्पद्रुमे। वामपदेन दृष्टेश्चन्द्रमयत्वसूचनम्। ततश्च तस्याः स्वपितुर्दुग्धसागरस्य भ्रातुश्च चन्द्रस्य सकाशेऽपि रमणमिति लज्जाविरहः सूचितः ॥ ४६७ ॥

वसन्तोत्सवे जनसमाजमिश्रितायां कस्यां चिद्व्याजेन चूर्णक्षेपे केनाचित्कृते दूती तमाह—

**तस्यां गौरगुणायां वरवर्णिन्यामनतिवरम्भायाम् ॥**
**त्वद्दत्तचूर्णयोगाद्रागविशेषः समुल्लसति ॥ ४६८ ॥**

"स्याद्वरवर्णिनी लाक्षाहरिद्रालोचनासु च" इति विश्वः। स्त्रीपक्षे पूर्वं व्याख्यातम्। गौरगुणत्वं हरिद्रायाः पीतवर्णत्वात्। नायिकायास्तु स्वच्छत्वात् पीतत्वादेव वा। "नवकुवलयकान्तिः कापि चाम्पेयगौरी" ( रतिर० जात्यधिकारे परि० १

श्लो० १२) इति कामशास्त्रात् । हरिद्रायामपि सुधयाऽऽरुण्य-मुत्पद्यते ॥ ४६८ ॥

कांचित्प्रियसंयुक्तां नायिकां दृष्ट्वा सहचरी प्राह—

**तरुणालिङ्गितकाया सुमनःसमुदायसिद्धसौरभ्या ॥**
**उद्भिन्नपत्रलेखा हरति मनो वीरुदिव बाला ॥ ४६९ ॥**

"लताप्रतानिनी वीरुत्" इत्यमरः । तरुणेनाऽऽलिङ्गितः कायो यस्याः । पक्षे तरुणा=वृक्षेणेति तृतीयान्तं पृथक् पदम् । तुल्यमन्यत् । सुमनसां=विदग्धानां समूहे सिद्धं=सर्वसंमतं सौन्दर्यं यस्याः । पक्षे पुष्पसमूहेऽत्यन्तसुगन्धयुक्ता । "सौरभ्यमाहुः सौगन्ध्ये चारुत्वे गुणगौरवे" इति विश्वः । (उद्भिन्ना=)स्फुटीभूता पत्रलेखा कस्तूर्यादिलिखिता यस्याः । पक्षे पत्राणां पङ्क्तिर्यस्याः । "तिलकं पत्रलेखा च भवेत्सुभ्रुवि भूषणम्" । इति भरतः । "पत्रलेखा पत्राङ्गुलिरिमे समे" इत्यमरः ॥ ४६९ ॥

सखी नवोढामाह—

**(१)तस्य त्वयि तव तस्मिन्नन्तःकरणं सदैव संसक्तम् ॥**
**विमुखयासि सुमुखि!कस्मात्तो दृशं तेन दृश्यमानापि ॥**

---

(१) का० रा० पुस्तके इयमार्या नास्ति । एतत्स्थाने—

तरणिं तेजोमणिभुवमधिरुह्य रसेन दण्डजुषम् ।
अवगाहतेऽतिकुतुकात्प्रभुरिव गगनार्णवं रुचां व्रातः ॥

इत्यार्या वर्तते । तरणिः=सविता नौश्च । तेजोमणिभुवं=उत्तमतेजसां निधिम् । पक्षे अर्णवस्य विशेषणम् । तस्य रत्नाकरत्वात् । यद्वा तरणिविशेषणम् । तेजोमणीनां-दीप्तिमद्रत्नानां भूः=स्थानं यस्मिन् । रत्ननिर्मितोपवेशनस्थानविशिष्टमित्यर्थः । रसेन=रागेण । दण्डः=सवितुः पारिपार्श्वकविशेषः नौदण्डश्च । "माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः" । इत्यमरः ।

तदन्तःकरणस्य त्वयि समासक्तिसमानकालीनैव त्वदन्तः-करणस्य तस्मिन्समासक्तिः । तथा तच्चक्षुषस्त्वयि समासक्तेः समानकालीना त्वच्चक्षुषस्तस्मिन्समासक्तिरपि युक्ता। बाह्यकर-णस्य चक्षुषोऽप्यन्तःकरणसाधर्म्यस्य युक्तत्वात् ॥ ४७० ॥

प्रातः प्रियभवनादायान्तीं कांचित्सखीदमाह—

**तल्पीभूते व्योमनि सुरमिथुनक्रीडया पतितः ॥**
**सुतनु! निभालय केतकपल्लव इव भाति खण्डेन्दुः ॥४७१॥**

रतिक्रीडायामन्यत्र पतनासम्भवात्–तल्पीभूते इति। स्व-प्रत्यक्षोपपत्तये–व्योमेति । अन्येषां तदसम्भवात्–सुरेति । क्रीडाया रतिरूपत्वलाभाय–मिथुनेति । (पल्लव इति) कर्णा-वतंसादिरूपो ग्राह्यः । एतदुक्तेर्वर्षातिरिक्तसमयपरतयार्थाच्च-न्द्रस्य विच्छायत्वसूचनम् ॥ ४७१ ॥

काचिदिदमाह—

**तव भारती कणभुजः परावत ! नः श्रुतिं प्राप्ता ॥**
**शब्दं तिरस्करोति व्यक्तं समवायमेकतां नयति ॥४७२॥**

कणभुजः=तण्डुलादिकणाशनस्य । पक्षे मुनिविशेषस्य वैशे-षिकसूत्रकर्तुः। शब्दं=रतिकूजितम्।( तिरस्करोति=)अभिभवति। अतश्च समवायं=सुरतम्, एकताम्=अविच्छेदं नयति । अन्यथा कूजितस्य जनान्तरश्रवणशङ्कया तदैकरूप्यानुपपत्तेः । अत्र सी-त्कृतादेः सारूप्यादभिभवः । यत्कामशास्त्रम्—

"मुञ्च पीडय गृहाण जीवय
त्राहि हा धिगिति सीत्कृतं विदुः ॥
तच्च लावककपोतकोकिला—
हंसकेकिसदृशैः रुतक्रमैः ॥" ( रति० प० १० श्लो० ५४ ।

५५ ) इति ।

कणादस्यापि सूक्तिः शब्दं तिरस्करोति । प्रत्यक्षानुमानयोरेव प्रमाणत्वाङ्गीकारेण शब्दस्यानुमानान्तर्भावेन पृथक्प्रमाणत्वानभ्युपगमात् । एवं समवायसम्बन्धोऽप्येक एवेति वैशेषिकाः ॥ ४७२ ॥

कस्यचिदन्तर्दुष्टस्य वृत्तान्तमाह—

**तस्यान्तरं हलाहलमलिनं यो बहिरतीव सरसोऽपि ॥**
**अन्तर्दधाति कठिनं मैनाकमिवाम्भसां राशिः ॥४७३॥**

बहिरिति सरसत्वाभिनयसूचनम् । कठिनं=दयाहीनम्, अन्तः=मनो दधाति।पक्षे अन्तरित्यधिकरणशक्तिप्रधानमव्ययम्। मैनाकस्य कठिनत्वं पर्वत्वात् । समुद्रोऽपि बाहिरत्यन्तं जलमयः । हलाहलवत् मालिनम् असत्कार्यासक्तत्वात् । समुद्रस्यापि मध्यं हलाहलेन कालकूटाख्यविषेण मालिनमेवेत्यर्थः ॥ ४७३ ॥

कश्चिद्गात्रप्रसाधनपरां प्रियामाह—

**तपनीयमिति निधत्से वलयं वरगात्रि! पाणितामरसे ॥**
**किमिति पुनः सन्तनुषे पद्मिनि हिमवालुकां त्वस्मिन् ७४**

"कार्तस्वरचामीकरकर्बुरतपनीयनामानि" इति हलायुधः। तपनस्येदमिति व्युत्पत्त्या सूर्यसम्बन्धेन वलयस्य तत्प्रियरक्तोत्पलसंयोगार्हत्वात् । हिमवालुका=कर्पूरः । अथच कमलिन्यां तुषारपरागस्पर्शस्य म्लानिहेतुत्वादनौचित्यमित्यर्थः ॥ ४७४ ॥

कश्चिदतिरहस्यं गोप्यमित्याह—

**तस्मिन्सोऽनुद्भूतो यस्यासाधारणो हि यो विषयः ॥**
**रूपादि चक्षुरादेस्तथाहि न कदाचिदध्यक्षम् ॥४७५॥**

यो विषयो यस्याऽसाधारणः=तन्मात्रग्राह्यः, स तत्रानुद्भू-

तः=अप्रकाश एव भवति।चक्षुरादीनामसाधारणो विषयो रूपादिः स तत्रानुद्भूत एवेति तस्य न प्रत्यक्षम् । चक्षुरादिनिष्ठं रूपादिकमनुद्भूतमिति सिद्धान्तः । उद्भूतत्वं प्रत्यक्षप्रयोजकसामान्यविशेषः तदभावोऽनुद्भूतत्वमित्येके । अनुद्भूतत्वमेव जातिः तदभाव उद्भूतत्वमित्यन्ये ।। ४७५ ।।

काञ्चिद्भाविसङ्केतस्थानाभावशङ्कयानुशयानां सखीदमाह—

**ताम्यसि किमिति विमुग्धे! विहाय सोमोद्भवां सरितम्॥**
**तत्रापि ते सहचरी भविता सूर्योद्भवैव सरित्॥४७६॥**

"सोमोद्भवा नर्मदा सोमवश्यंपुरूरवोवतारिता" इति स्वामी ।सूर्योद्भवा=यमुना । सोमसूर्यपदाभ्यां तुल्यकक्षत्वं सरित्पदेनैकधर्मावच्छिन्नत्वं च दर्शितम् । एतेन सोमापेक्षया सूर्यस्याधिक्यवत् एतदीयनिकुञ्जाद्यपेक्षया तदीयानामप्यतिसन्ताप इति सङ्केतस्थलाभावशङ्कया मा ग्लासीरिति सूचितम् ॥४७६॥

काचित्सखीदमाह—

**तावन्मानोत्कर्षः स्फुरति पदार्थान्तरेषु दृष्टेषु ॥**
**यावत्स्वात्मा प्रेयान्दर्शनविषयो न सम्भवति ॥४७७॥**

यावत्प्रियो दर्शनपथं नावतरति तावदेव मानः स्थिरो भवति । तद्दर्शने तु झटित्येवापसरतीति भावः । अथच यावदात्मा न विभाव्यते तावदेव पृथिव्यादीनां परिमाणमुत्कृष्टं भवति । तस्य तु परममहत्परिमाणवत्तया ज्ञाने सति महतामपि तेषामवच्छिन्नपरिमाणानामल्पतैव ज्ञायते । अथवा कोऽपि परमार्थज्ञ आह । "तदेतत्प्रेयो वित्तात्प्रेयः पुत्रात्" इत्यादिप्रामाण्यादतिप्रिय आत्मा यावन्न साक्षात्क्रियते तावदेव वस्त्वन्तरेष्वादरो भवति । तदुत्तरं तु सर्वं तुच्छमेव प्रतिभाति । "किमिच्छन्कस्य कामाय शरीरमनु सञ्ज्वरेत्" इति श्रुतेरित्यर्थः ॥४७७॥

काञ्चिद्दुराशयामभिलषति नायके काप्याह—

तामरसान्तर्वृत्तिं कृतवृतिमालीभिरतिपलाशाभिः ।
भ्रमरीमीच्छितुमनसां श्रमः समस्तोऽपि विफल एव ४७८॥

तां=दुष्टत्वेन प्रसिद्धाम् । अरसा=रसहीना, अन्तर्वृत्तिः= मनोव्यापारो यस्याः । पक्षे तामरसस्य=कमलस्याभ्यन्तरे वर्तमानाम् । मुकुलिततदन्तर्गतत्वात् । एवं स्वभावतो हेयत्वमुक्त्वा दुर्मिलतामाह—कृतेति । पलाशं=राक्षसमतिक्रान्ताभिः ततोऽपि क्रूराभिः सखीभिः संवृताम् ।पक्षेऽत्यन्तं मिथःसंलग्नाः पलाशाः= पल्लवा यासु तादृशीभिः(आलीभिः=)अर्थात्पत्रपङ्क्तिभिः संवेष्टिताम्। यथा मुकुलान्तर्गतत्वविशिष्टभृङ्गीदर्शने श्रमस्तदसम्भवाद्व्यर्थः तथैतद्दर्शनेऽपि । फलाभावस्याविशिष्टत्वात् । भ्रमरीपदेन कथञ्चिन्मिलितापि त्वामपहायान्यत्र रक्ता स्यादिति सूचितम् ॥४७८॥

काञ्चित्प्रिय आह—

ताटङ्कमौक्तिकमिवाद्य रतनु ! नक्षत्रपङ्क्तिरियम् ॥
किमपि परिष्कुरुते तव शब्दग्रहसाधनं गगनम्॥४८९॥

ताटङ्कः=कर्णाभरणविशेषः । शब्दसाक्षात्कारहेतुभूतमाकाशं, श्रोत्रेन्द्रियमिति यावत् । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वात् । आकाशे तारकाणामवस्थानादत्रापि विशेष्याभेदेन तत्सम्भवौचित्यात् । तद्भूषणार्थं लग्नानि नक्षत्राण्येव न तु मौक्तिकानीत्यपन्हुतिः ॥ ४७९ ॥

कश्चिदाह—

तात्पर्यमकलयन्तोऽनालोचितविशदभाष्यगिरः ॥
अपरिचितदीधितमहालोका न्यायाद्बहिः प्रजल्पन्ति ॥

एवंविधा लोका अयुक्तमेव प्रलपन्तीत्यर्थः । तात्पर्यं=

पराभिप्रायः। अनालोचिता एव विश्रान्त्यो=हृदयङ्गमा,अभाष्या=अवाच्या गिरो येषाम् । आपातरमणीयवाक्या इति यावत्। अपरिचितौ दीधितिः=तेजो, महः=उत्सवश्च यैः। क्रूरसुकुमारोक्तिसमयानभिज्ञा इत्यर्थः। अथ चैवंभूता न्यायशास्त्राद्बहिरेव वदन्ति। तात्पर्यं=वार्त्तिकटीका। अपरिभाविता विशदाः स्वच्छा भाष्यस्य गिरो यैः। दीधितिः=शिरोमणिग्रन्थः। महान्=सर्वोत्कृष्ट, आलोको=मिश्रग्रन्थश्च। तुल्यमन्यत्। एतदज्ञानात् न्यायपदार्थव्युत्पादनानधिकारात्॥ ४८० ॥

अनभिज्ञप्रवादेन गुणमय्यामपि कस्यांचित्सन्दिहानं नायकं सखीदमाह—

**तापीति प्रौढातपसन्तापित! मास्म भूरितो विमुखः।**
**वञ्जुलनिकुञ्जसद्मसु विश्रम्य गुणं विभोत्स्यसे तस्याः॥**

तापस्येयं हेतुत्वसम्बन्धेनेति तापी। तापजनिकेवि यावत्। एतादृशज्ञानेन तापीसंज्ञां नदीमपहायान्यत्र मा यासीः। यतो वेतसनिकुञ्जभवनेषु विश्रम्यैतस्याः शैत्यं साक्षात्करिष्यसि। अथच आतपपदेन साधर्म्यात्कामग्रहणम्। इयं तापयतीति प्रवादमात्रेणात्रानादरो मा भूः। यतः सङ्केतस्थानेष्वेतद्वैलक्षण्यमनुभूयैव ज्ञास्यसीति भावः॥ ४८१ ॥

भाविविश्लेशशङ्कादुःस्थः प्रियो नायिकामाह—

**ताटकयेव पतन्त्या रामेषुहतिच्युतासृगरुणाङ्ग्या॥**
**अरुणकरमिश्रया भूः सुतनु! तमोलेखयाक्रान्ता॥४८२॥**

प्राभातिकातपसंवलितध्वान्तपङ्क्तिः श्रीरामबाणाभिघातगलितरुधिररञ्जिताङ्गराक्षसीसदृशी इत्यर्थः। रुधिरसूर्यकराणां बिम्बप्रतिबिम्बभावः। ताटकोपमयोक्तरीत्या भयहेतुत्वं व्यङ्ग्यम्।

पतन्ती इत्यनेन प्रथमं भूमिनभसोस्तमःसमुदायरूपैकतायाः सम्प्रति मध्ये प्रकाशे विच्छिन्नत्वमिति सूच्यते ॥ ४८२ ॥

काश्चित्प्रियामाह—

तापिच्छनीलचिकुरां रसपरिपूर्णां सुगम्भीराम् ।
प्रावृट्कालनदीमिव न कुतश्चिद्भङ्ग एति त्वाम् ॥४८३॥

तमालवन्नीलाः । पक्षे तमालस्वरूपा नीलाश्चिकुरा यस्याः। व्याख्यातप्रायमन्यत् । भङ्गः=पराजयस्तरङ्गश्च । यथा वार्षिकनद्यां तरङ्गयोगो भवति न तथा त्वयि पराभवयोगः । सर्वत उत्कृष्टतया किञ्चिदपेक्षापकर्षानुपपत्तेः । आर्थे सादृश्ये श्लिष्टविशेषणको व्यतिरेकः । "तेन तुल्यं—" ( ५ । १ । ११५ ) इति तुल्यार्थवतिप्रयोगाव ॥ ४८३ ॥

काश्चिदिदमाह—

तिग्मकरो जलशोषावहोऽपि तोषाय जलजानाम् ॥
नहि जनकजन्यवैरप्रीत्योर्नियतं समानविषयत्वम्४८४॥

तिग्मकरपदेन जलशोषत्वहेतुप्रदर्शनम् । जल-जलजपदाभ्यां द्वयोर्जनकजन्यत्वबोधनम् । एवंच पद्मजनकजलविरोधिनोऽपि सूर्यस्य पद्मसौहृददर्शनाज्जनकस्य प्रियद्वेष्यावेव पुत्रस्य तादृशौ भवेतामिति नियमो नास्तीत्यर्थः ॥ ४८४ ॥

काश्चित्कृष्णाभिसारिकां सखीदमाह—

तिरयसि तनुं मृगमदजम्बालेनाभिसाररसिके! किम् ।
न विशेषो विज्ञाने रूपादपि सौरभादपि वा ॥४८५॥

"निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ" इत्यमरः। देहप्रभावितानिर्गमनवारणाय कस्तूरीकर्दमालेपः क्रियते तेन परेषां ज्ञानं माभूदिति । तच्च मृषैव । एवमपि तदीयसौरभेण प-

रम्परया तदनुमानसद्भावादित्यर्थः । एवंच यद्यपि चाक्षुषानुमितिरूपयोर्ज्ञानयोर्विशेषोऽस्त्येव । तथाप्यत्र स्वरूपमात्रभेदस्यानुपयुक्ततया उभयथापि गोपनं न भवत्येवेत्याशयेन विशेषाभावोक्तिः ॥ ४८५ ॥

कश्चित्तस्याः कामशास्त्राभिज्ञतां दर्शयन्प्रियामाह—

**तिलतण्डुलितं बाले! दधासि मुक्तेन्द्रनीलहारं त्वम् ॥**
**स्मितमुखकान्तिकदम्बं नीरक्षीरायमाणं तु ॥ ४८६ ॥**

मुक्तेन्द्रनीलमालयोरामिश्रणेऽपि पृथक्त्वेन ज्ञानार्हत्वाद्रूपसाम्याच्च तिलतण्डुलाकारत्वम् । स्मितकान्तेः स्वमुखकान्त्या सहात्यन्तसादृश्याद्विवेकेन ज्ञानानर्हतया नीरक्षीरसाम्यम् । एतेन तदुभयसंज्ञपरिरम्भाभिज्ञत्वं व्यज्यते । तथा च रतिरहस्ये—

"असकृदतिविगाढाश्लेषलीलां वितत्य
जनितजघनबाहुव्यत्ययं स्पर्धयेव ।
मिथुनमथ मिथोऽङ्के लीयते निश्चलाङ्गं
निगदति तिलपूर्वं तण्डुलं तन्मुनीन्द्रः ॥
अभिमुखमुपविष्टा योषिदङ्केऽथ तल्पे
रचितरुचिरगाढालिङ्गनो वल्लभश्च ।
प्रसरदसमरागावेगनश्यद्विचारौ
विशत इव मिथोऽङ्के क्षीरनीरं तदाहुः ।"

( आलिङ्गनाधिकारे प० ६ । श्लो० ८ । ९ ) ॥ ४८६ ॥

कश्चिदिदमाह—

**तितउ यथा बहुरोकं मण्डलमिन्दोः समुल्लसति ॥**
**लग्नान्यपघस्य तले विरहिमनांसि प्रयान्ति तच्चित्रम् ४८७**

यद्यपि "चालनी तितउः पुमान्" इत्यमरस्तथापि "स-

क्तुमिव तितउना पुनन्त" इति मन्त्रे "तितउ परिवर्म्म भवति" इति भाष्यकारप्रयोगात् क्लीबत्वमपि प्रामाणिकम् । "छिद्रं निर्व्यथनं रोकम्" इत्यमरः । पक्षे रोकः=दीप्तिः । चालन्या हि मध्यपतिता एव सूक्ष्मभागा निःसरन्ति । अस्य तु तलसंयुक्तान्यपि मनांसि निर्गच्छन्तीत्याश्चर्यम् ॥ ४८७ ॥

सखी नायकमाह—

**तिक्तायतेऽपि नितरां मधुरमशेषं विषयजातम् ॥**
**पित्तेनेव नितान्तोष्मणा वियोगेन तव तस्याः ॥४८८॥**

मधुरं=रम्यमपि, विषयजातं=चन्द्रचन्दनादि, तिक्तायते । द्वेषविषयत्वात् । पित्तदोषेणापि मधुरतममपि रसजातं खण्डगुडादि तिक्तवत् भासते । रसस्य द्रव्यभेदेन भेदात्–अशेषमित्युक्तम् । पित्तस्य दाहकत्वेन नितान्त ऊष्मा यस्मात् । विरहपक्षेऽप्येवम् । एतेन विषयनिवृत्तिरूपा षष्ठी दशा सूचिता । भरतेन त्वयमुद्वेग इत्युक्तः–

"आसने शयने वापि न तिष्ठति न हृष्यति ।
नित्यमेवोत्सुका च स्यादुद्वेगस्थानमेव तत्"इति ॥ ४८८ ॥

काचित्खण्डिता नायकमाह—

**तिलकमलक्तकजं ते सुन्दर! भालं विभूषयति ॥**
**मदनार्द्धचन्द्रमस्त्रमिव मम हृदयविदारणासक्तम् ॥४८९॥**

प्रतिनायिकाचरणप्रणामलग्नतद्यावकभवं तिलकम् । "तमालपत्रतिलकचित्रकाणि विशेषकम्" इत्यमरः । तिलकपदेन भूषणार्थतया परमादरविषयत्वसूचनम् । मदीयहृदयभेदलग्नं शोणितं कामस्यार्द्धचन्द्राकारबाणमिवेत्युत्प्रेक्षया हृदयविदार-

णस्य तद्दर्शनानन्तरकालीनत्वेऽपि कार्यकारणयोरेककालोत्पत्तिकत्वमतीत्याऽतिशयोक्तिध्वनिः ॥ ४८९ ॥

स्वयंदूती पान्थमाह—

तीरे तरणिसुतायास्तमालवीथियमुल्लसति ॥
किमिति त्वरया दूरादध्वग! नावं गवेषयसि ॥४९०॥

कालिन्दीतीरलग्नतमालमालायां तद्भ्रान्त्या तत एवारभ्य तदुत्तरणकामुकेन पथिकेन नावो गवेषणं कृतम् । तत्र तद्भ्रमखण्डनेन इत एव तरणोपायो नापेक्षित इति प्रतिपाद्यते । "गवेष-स्तर्कमार्गणे" इति कल्पद्रुमः । अत्र भ्रान्तिमान् व्यङ्ग्यः ॥४९०॥

हीनगुणस्योत्कृष्टगुणसन्निधौ स्वयमेव हानिर्भवतीत्यभिप्रायेण कोऽप्याह—

तुलयितुमनसा विधिना धृतौ तुलायां निदाघशीतकरौ ॥
जिह्रियदिवात्र चरमस्तामपहायाचिरान्निरगात् ॥४९१॥

तुला=राशिविशेषः परिमाणपरिच्छेदोपायश्च । करपद-स्योभयत्रान्वयः । जिह्रियदिति 'ह्री लज्जायाम्'इत्यस्य शतृप्रत्यये रूपम् । लज्जमान इव । चरमः=शीतकरः । तुलां विमुच्य शीघ्रमेव निर्गतः । सूर्येण तत्र मासपर्य्यन्तमवस्थानात् चन्द्रेण तु स्वल्पकालमेवेति भावः ॥ ४९१ ॥

काचित्क्षुद्रनायकसङ्गनिवृत्त्यभिप्रायेणाह—

तुच्छसमागमने सति न भवत्युज्जीवनं किमपि ॥
इति तात्पर्यवता सखि! पाणिनिना त्वागमो विहितः॥

"छे च" (६ । १ । ७३) इति सूत्रेण तुगागमो वा विधीयते इत्यस्यान्यथाप्यभिप्रायः कथ्यते । तुकारस्य छकारस्य च सम्बन्धे सति उकारस्य जीवनं स्थितिर्न भवति । "उपदेशेऽज-

तुनासिक इत्" ( १ । ३ । २ ) इति इत्संज्ञया तस्य लोपात् । अथ च तुच्छजनस्य सङ्गमे सति उज्जीवनं न भवति । किन्तु दुःखकदर्थनया मृतप्रायतैव । एतादृशार्थस्य तुगागमविधानेनैव लाभात्तथैव विहितम् । अन्यथा तिगागमादिकमप्यकरिष्यत् । रूपसिद्धेः साम्यादित्यर्थः ॥ ४९२ ॥

सखी नायकमाह—

**तुम्बुरुरिव सुन्दर! किं मधुरक्वणितां कलावतीमेताम् ।**
**अङ्कारोहणयोग्यां प्रयुयुक्षसि मध्यमग्रामे ॥ ४९३ ॥**

तुम्बुरुः=गन्धर्वविशेषः । कलावती=चतुःषष्टिकलाभिज्ञा वीणाभेदश्च । "महती नारदस्यापि तुम्बुरोस्तु कलावती" इत्यभिधानात् । मध्यमाख्यो ग्रामः=स्वरसमूहः । पक्षे मध्यमकक्षायां किं गणयसि । उत्तमतयैतदनादरस्यानुचितत्वादित्यर्थः ॥ ४९३ ॥

काचित्सङ्केतस्थानात्कञ्चिदपसारयितुमाह—

**तुषगणसम्भृतमेतद्विपिनं किमितीह धार्मिक! भ्रमसि ।**
**एतादृशि स्थले हि द्वापरपरवर्तियुगवासः ॥ ४९४ ॥**

तुषो=विभीतकः । धार्मिकपदेन तस्य परिहर्तव्यत्वसूचनम् । द्वापरादुत्तरवर्ती युगः=कलिः । अस्य कलिद्रुमतया छायादिविश्रामानर्हत्वात् । अथ च सन्देहपरवर्ति=तद्राहितं, युगं=मिथुनं, तस्यैव वासः=स्थितिः । तथा च दोषपरिहारार्थमितः प्रदेशादपगम्यतामित्यर्थः ॥ ४९४ ॥

काश्चित्प्रियामाह—

**तुन्दपरिमृजमिदं ते मुखरुचिपानाच्चकोरकुलम् ॥**
**राकायामपि चन्द्रज्योत्स्नापानाय नो यतते ॥४९५॥**

"तुन्दशोकयोः परिमृजापनुदोः" ( ३ । २ । ५ ) इति कप्रत्ययः । "मन्दस्तुन्दपरिमृज" इत्यलसपर्यायेऽमरः । पानाय=पानं कर्तुम् । चन्द्रक्षयकाले एतद्रुचिसमास्वादनस्यैव गतित्वात्तासां माधुर्यातिशयाच्च कादाचित्कापकृष्टमाधुर्यकचन्द्रिकापानप्रवृत्त्यभाव इत्यर्थः । एतेन सर्वदोपजीव्यमपहाय तदन्यत्र प्रेक्षावन्तो न प्रवर्तन्त इति सूचितम् ॥ ४९५ ॥

कश्चित्प्रियामाह—

तुङ्गतया तव कुचयोरचलकुलमधःकृतोन्नतिकम् ॥
उपहसति सपदि विन्ध्यो धूतमदमात्मावनतिकाले ॥

यदा विन्ध्य एवागस्त्यवचनेनावनतिं प्राप्तस्तदानीमस्योन्नतिह्रासो जात इति पर्वतान्तराणां मद आसीत् । सम्प्रति तु त्वदीयस्तनोन्नत्या सर्वपर्वतानामौद्धत्यविरहे जाते स्वोपहासकानां तेषामुपहासं विन्ध्यः करोतीत्यर्थः । एतेन यद्विपदि येषामानन्दस्तदापदि तस्यापि स्यादिति सूचितम् ॥ ३९६ ॥

कश्चिदत्यन्तमेकजातीययोरप्युत्कर्षापकर्षौ पश्यन्नाह—

१तुहिनगिरिमधरयन्नपि शिरसि भवो वहति तुहिनकरम्
द्रव्याल्पत्वमहत्त्वे मृषा कलैव प्रकर्षाय ॥ ४९७ ॥

पर्वते हिमस्य भूयस्त्वेऽपि तद्वृत्तित्वेन तमधरीकृत्य=स्वापेक्षयाऽधोगतं विधाय स्वल्पतरहिममपि चन्द्रं शिरसि शेखरतया भगवान् दधाति । अतः कलयैव प्रकर्षो लभ्यते । तत्र चन्द्रस्य कलारूपत्वात् । पक्षे कला=विद्यादिः । न तु द्रव्यवत्तामात्रेणेत्यर्थः । यद्वा बहुद्रव्यामपि नायिकामनादृत्य कस्यांचिदतिविदग्धायामनुरज्यमाने नायके काचिदेवमाह ॥४९७॥

(१) एतदादि आर्याद्वयं का० रा० पु० पुस्तके नास्ति ।

काचिच्छठनायकं प्रकृत्याह—

तुषिता एव वसन्तस्त्रिदिवेऽपि निर्जरा अपि ते ॥
येषां रसार्धगणना सततं प्रख्यायते लोके ॥४९८॥

रसस्याऽर्द्धमेव येषां जनेन गण्यते, न त्वत्यन्तरसिकत्वं प्रणयविच्छेदात्। ते निर्ज्जरा=युवानोऽपि, स्वर्गे वसन्तोऽपि तुषिताः=तुषसदृशा अनुपादेया एव। उच्चपदारूढा अप्यनादर्त्तव्या एव। अथ च रसपदेन षट्, अर्द्धं च तदीयमेव, तेन त्रितयलाभः। तथाच "अङ्कानां वामतो गतिः"इति रीत्या षट्त्रिंशत्सङ्ख्या सम्पद्यते। तत्सङ्ख्या ये गण्यन्ते ते स्वर्गस्था निर्जरा=देवाः, तुषितसंज्ञा एवेत्यर्थः॥ ४९८ ॥

सखी नायकमाह—

तूर्णं वासागारात्प्रयातुमनसो नतभ्रुवः कबरीम् ॥
कर्षन्नाभासितरां कामसुहृद्राम इव यमुनाम् ॥ ४९९ ॥

"उशन्ति शयनस्थानं वासागारं विशारदाः"। इति हलायुधः। नवोढात्वेन ततः प्रयाणेच्छा। गमने प्रकर्षश्च तस्याः कामविकारानुमापकत्वेन तद्विषयकानादरानुत्पादकत्वस्वरूपः। कबरीकर्षणं तु तद्धारणेच्छया। कामसुहृत् तत्साम्यात्। पक्षे कामपालत्वात्। यद्वा नायकस्य कामशास्त्राभिज्ञतया नायिकास्वभावज्ञानेन मद्विद्वेषेण गच्छतीति ज्ञानानुदयात्॥४९९॥

काचित्प्रियमाह—

(१)तृणतामनायि सत्यं स्मरस्त्वया सुभग! रूपेण ॥
अमरोऽपीतरथा कथमलभत शलभत्वमुग्रदृग्वह्नौ ५००॥

---

(१) एतदादि तिस्र आर्याः का० रा० पु० पुस्तके न सन्ति। तत्स्थाने—

तृणत्वं=हीनता अप्रकृष्टरूपत्वं च। दाहायोग्यत्वमाह–अम-रोऽपीति। इतरथा=तृणत्वाभावे। शलभस्तृणत्वेनैव दाहं प्राप्तः। तृणत्वस्याऽमरत्वाभावव्याप्यत्वादिति भावः। यद्वा विरहिणी भवनोपनीतं प्रियं प्रत्याह। एतेन गुणकीर्तनदशा सूच्यते। "चतुर्थे गुणकीर्तनम्" इति भरतात्। तत्स्वरूपमपि तेनैवोक्तम्—

"अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षणैः।

नास्त्यन्यः सदृशस्तेनेत्येतत्स्याद्गुणकीर्तनम्" इति॥५००॥

कस्यचिदर्थे दूती नायिकामाह—

**तृंहन्ति विजयमिव तं गुरुरतिभिदुरोरुहाभोगः।**
**अभिगाङ्गेयोऽपाङ्गः कर्णौ नालीकशाली वा॥ ५०१॥**

विजयम्=अर्जुनमिव, तं=नायकं, तृंहन्ति=पीडयन्ति। गुरुः=महान्। भिदं=भेदमतिक्रान्तोऽतिभित्। अत्यन्तसंहित इति यावत्। यद्वाऽत्यन्तं भिनत्तीति तथा। उरोरुहौ=स्तनौ। आभोगः=परिणाहः। गां=भूमिम् अभिलक्ष्य। गेयो=वक्तुमर्हः। प्रसिद्धविच्छित्तिविशेष इति यावत्। अपाङ्गः=कटाक्षः। नालीकं=कमलम्। उत्तंसस्वर्णत्वात् कर्णे तत्संयोगः। पक्षे गुरुः=द्रोणः। अतिभिदुरा=अत्यन्तभेदनशीला। वज्रमतिक्रान्ता वा। "कुलिशं भिदुरं पविः" इत्यमरः। उरवो महान्तः शूरास्तान् हन्ति उरुहा आभोगो यस्य। महावीरवध-

---

तृंहन्ति कर्णलग्ना विनिमज्जन्तो दुरुद्धराद् हृदयात्।
चरतनु! तव दृग्भङ्गा विशिखविशेषा अनङ्गस्य॥
तृष्णाभरेण तप्तो विहितसुधारसतिरस्कारम्।
बिम्बाधरं प्रियाया जातु पिबेयं कणेहत्य॥
इत्यार्ये स्तः।

समर्थ इति यावत् । अभि=भयरहितं यथा स्यात्तथेति क्रियाविशेषणम् । गाङ्गेयः=भीष्मः । नालीको=बाणः । "नालीकं शरखण्डेऽब्जे नालीकः शरशल्ययोः" इति विश्वः ॥ ५०१ ॥

क्वचिद्भ्रमप्रेमभ्यामेव कार्योत्पत्तिरिति कोऽप्याह—

तृषितं पिबति मदाम्भो हेरम्बस्य द्विरेफनिकुरम्बम् ।
प्रतिबिम्बितहैमवतीनयनपयोजेऽप्यसद्विसंवादम् ॥५०२॥

लम्बोदरमदजलप्रतिबिम्बिते गौरीनेत्रे कमलभ्रमेण मधुपानमिच्छतां भ्रमराणां दानप्राप्त्यैव मधुप्राप्तिसम्पत्त्या उभयविधप्रवृत्तेरपि सम्वादित्वमिति भावः । एतेन परमेश्वरसम्बन्धिनि भ्रममूलकप्रवृत्तेरपि साफल्यमिति व्यज्यते ॥ ५०२ ॥

काश्चित्प्रियां पश्यन्नाह—

तृप्तिं काङ्क्षदिवाक्षिद्वयमनिमेषं वराननां पिबति ॥
विरतिभयादानन्दं निमेषकपटात्प्रवेशयत्यन्तः ॥५०३॥

प्रथमं तद्दर्शनोत्कटेच्छया दर्शनप्रतिबन्धकनिमेषनिरासेन दृष्टुं, ततस्तज्जन्यानन्दभरेण तृप्तत्वाद्दर्शनविच्छेदो माभूदिति निमेषः कृतः । तेनाभ्यन्तराभिमुखावच्छिन्नप्रेरणयाऽऽनन्दस्यान्तर्गमने पुनस्तद्दर्शनं स्यादिति भावः । एतेन रागिस्वभावो वर्णितः । तथा चोक्तम्—'अहो कष्टं किमिति सृष्टिरेवं न बभूव यत्सर्वदैव भोक्तुः सामर्थ्यमतृप्तिश्च भोग्यानां चाक्षय' इति॥५०३॥

काश्चित्सखीदमाह—

तेजस्वी श्यामतनुस्त्वदपाङ्गो धृतसुदर्शनो हरिवत् ॥
नीतः स्मरेण शरतां पुरविजयस्पर्द्धयेव गिरिशस्य ॥५०४॥

त्रिपुरवधाय हरेण विष्णुर्बाणः कृत इति पुराणप्रसिद्धम् । अतस्तद्वैरिणा कामेनापि पुरस्य=नगरजनस्य विजये=स्वाधीन-

त्वे कर्तव्ये तत्समानधर्मा त्वदपाङ्ग एव बाणीकृत इत्यर्थः। तेजस्वित्वं चक्षुरिन्द्रियस्य तैजसत्वात्। पक्षे महानुभावशालित्वात्। श्यामत्वमुभयत्र समानम्। सुदर्शनं=शोभनं स्वभावसूचनसमर्थमवलोकनम्। पक्षे सुदर्शनम्=चक्रम्। हरिवदित्यत्र "तेन तुल्यं क्रिया चेद्वतिः" (५। १। ११५) इति वतिप्रत्ययः ॥५०४॥

कश्चिन्मनस्वी प्राह—

(१)तेषां पीतवतामपि सुधारसं दुर्लभं सहृदयत्वम् ॥
ये स्वीयविपक्षजनच्छायामादाय कार्यमीहन्ते ॥५०५॥

स्वविरोधिनः समाश्रयेण ये नीतिमात्रशरणाः स्वकार्यं साधयितुमिच्छन्ति तेषामुक्तगत्या सुधारसलाभेऽपि न सहृदयत्वपर्यवसानम्। मायया देवरूपमाश्रित्य सुधामास्वादितवतोऽपि सैंहिकेयस्य शिरश्छेदेन हृदयराहित्यस्य वृत्तत्वादिति ध्वनिः। "न लोकाव्यय—" (२। ३। ६९) इत्यादिना खलर्थप्रत्यययोगे कारकषष्ठीनिषेधेऽपि शेषे षष्ठी बोध्या। यद्वा सहृदयत्वेन सह तेषामित्यस्यान्वयः। दुर्लभत्वं च तद्विशेष्यकप्रमाप्रकारत्वसम्बन्धेन। तादृशाः सहृदया इति प्रमाया असम्भवादिति भावः ॥ ५०५ ॥

कस्याश्चिन्मुग्धायाः प्रौढाङ्गनाभ्योऽपि सौभाग्यातिशयं सूचयन्ती सखीदमाह—

तोषयति निर्जरान् या धृतकुसुमैवापरैव सा वीरुत् ॥
सञ्जातस्तबकैव प्रीणयितुं पद्मिनी क्षमते ॥ ५०६ ॥

निर्जरा=देवा युवानश्च। कुसुमं=पुष्पं रजश्च। स्तबका=गुच्छा लक्षणया स्तनौ च। कोरकैर्देवार्चननिषेधेऽपि पद्मकोरकैस्तदभावेन तस्या मुकुलोत्पत्तिदशायामेव देवताप्रीतिसम-

(१) का० रा० पु० पुस्तके नास्ति।

र्थत्वादिति भावः । "कलिकाभिस्तथा नेज्यं विना चम्पककुड्मलौ" इति वचनात् ॥ ५०६ ॥

काञ्चिन्नायिकाया गुणातिशयमाह—

**तौषारतैजसैरियमारब्धा कैश्चिदवयवैर्विधिना ॥**
**साक्षात्करणीयगुणा समयं तत्तत्प्रतीपमासाद्य ॥५०७॥**

शैत्यप्रतिकूले ग्रीष्मसमयेऽस्याः शैत्यगुणस्य उष्णत्वप्रतिकूले च शीतसमये उष्णत्वस्य साक्षात्करणात् तद्विरुद्धसमये तज्जातीयसर्वोपरमौचित्यात् । एतद्वैपरीत्येन विजातीयत्वसूचनाय—कैश्चिदिति । शीतोष्णावयवान्तरवृत्तिगुणविलक्षणगुणवद्भिरित्यर्थः ॥ ५०७ ॥

कश्चित्प्रियामाह—

**तन्तुभिरतिप्रभूतैः पटेन तेऽलम्भि गात्रसंस्पर्शः ॥**
**ताः सप्ततन्तुमात्रप्राप्यस्पर्शास्तु रम्भाद्याः ॥ ५०८ ॥**

रम्भाद्या=अप्सरसः । बहुतन्त्वारब्धेन वस्त्रेण त्वदङ्गस्पर्शः प्राप्तः । तास्तु सप्ततन्तुमात्रप्राप्यस्पर्शाः । "अप्सरस एव जाया भूत्वोपशेरते" इति महाभाष्यादिदर्शनात् । "सप्ततन्तुर्मखः क्रतुः" इत्यमरः । अथच सप्तसङ्ख्यास्तन्तवः सूत्राणि, एतदभिन्नत्वेन यज्ञाध्यवसायः । तथाच व्यतिरेकः स्पष्ट इति भावः ॥ ५०८ ॥

इति तकारव्रज्या ।

कश्चिद्ग्रीष्मं वर्णयति—

**दवपावकावलीढा दृश्यन्ते भूभृतां प्रस्थाः ॥**
**तस्याः स्तनभ्रमादिव कामेन प्रहितवह्निशराः ॥५०९॥**

"दवदावौ वनारण्यवह्नी" इत्यमरः । आद्ये षष्ठीसमासः । द्वितीये कर्मधारयः । अवलीढपदेन आस्वाद्यत्वोत्तराऽत्यन्तव्या-

ग्निसूचनम् । वह्निशरा=आग्नेयास्त्रयोजितबाणाः । एतेन तस्यां मदनविद्वेषसूचनाद्विप्रलम्भातिशयो द्योत्यते ॥ ५०९ ॥

कस्याश्चित्पतिव्रतायाः प्रशंसामाह—

**दमयन्तीति सपत्न्यो वेदयमरुन्धतीत्यतिथिवर्गः ॥**
**शीतेति हृदयदयितो गुरुलोकः सर्वमङ्गलेत्येताम् ॥५१०॥**

दमयन्ती=भैमी । अथच दमयन्ती=मानमुपशमयन्ती । तासां मानतिरस्कारेण तथा ज्ञानम् । दमयन्तीति शतृप्रत्ययविचारो नैषधभावप्रदीपे द्वितीयसर्गे उक्तः । अरुन्धती=वशिष्ठस्त्री । अथच न रुणद्धीति तथा । अतिथिः=सत्कारपरत्वात् । शीताशब्दो जानक्यां तालव्यादिरपि । "शीता नभस्सरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च" इत्यजयात् । अथचानन्दजनकतया शीतत्वम् । "शर्वाणी सर्वमङ्गला" इत्यमरः । पक्षे सर्वमेव मङ्गलं यस्याः । सल्लक्षणसम्पन्नत्वादित्यर्थः । अयं च—

"निमित्तभेदादेकस्य वस्तुनो यदनेकधा ।
उल्लेखनमनेकेन तमुल्लेखं प्रचक्षते" ॥

इति केषांचिन्मते उल्लेखालङ्कारः । काव्यप्रकाशानुसारिणां त्वतिशयोक्तिभेद एवेति प्रपञ्चितमलङ्कारकौस्तुभे ॥ ५१० ॥

गुरुकुलवासिनः कस्यचिद्विरहावस्थां नायिकायां काचिन्निवेदयति—

**दहराकाशस्तमहाजीवमपोह्यैव तन्निधो ! बोध्यः ॥(१)**
**इति वाचमौपनिषदीं विशदीकुरुते समिद्दीधाम् ॥५११॥**

(१) 'अपोह्यैव' इत्यत्र 'अपास्यैव' इति पाठः का० रा० पु० पुस्तके ।

चन्द्रदर्शनोद्दीपितविरहवेदनयाऽसकृदुपालम्भदानेऽन्येषां तत्प्रकाशः स्यादतो "दहर उत्तरेभ्यः" ( अ० १ पा० ३ अधि० ५ सू० १४ ) इत्यधिकरणसिद्धान्तश्लेषेण वारंवारमुपालभते । "अथ यदिदं ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश" इत्यादिवाक्ये आकाशपदं ब्रह्मपुरपदसामर्थ्याज्जीवपरमिति न शङ्क्यम् किंतु तमपहाय तमहा=अज्ञाननाशकः तद्विधो ब्रह्मैव बोध्यः । "ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः"। इति स्मृतेः । "यावान्वा आकाशस्तावानेषोऽन्तर्हृदय आकाश" इति सर्वापेक्षमहत्त्वस्योपाधिपरिच्छिन्ने जीवेऽनुपपत्तेरिति तस्यार्थः । पक्षे विधो इति चन्द्रसम्बुद्धिः । राका=पौर्णमासी तया शस्तम्=उत्कृष्टं महस्तेजो यस्य तादृशस्त्वं बोध्यो=ज्ञानाविषयीभूतः सन् अपोद्य=बाधं कृत्वा मदीयमात्मानं दह=सन्तापयेति क्रोधादुक्तिः ॥ ५११ ॥

काश्चित्प्रियामाह—

दर्पं दलयसि दृग्भ्यां न कृशोदरि! केवलं मृगस्य दृशोः॥
मेचकतया कटाक्षच्छटाभिरप्येतदीयदर्पस्य ॥ ५१२ ॥

केवलं स्वनयनशोभया मृगस्यैव दर्पं नापहरसि । किंतु कटाक्षधारानीलिम्ना मृगदर्पस्य कस्तूरिकाया अपि दर्पं हरसीत्यर्थः । कटाक्षाणां केवलश्यामत्ववर्णनमपि सम्प्रदायः । "कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति" इत्यादिदर्शनात् ॥५१२॥

कश्चिच्छ्रीकृष्णसौन्दर्येण गोपीनां मर्यादोल्लङ्घनमाह—

दधिमुखहरिणा जुष्टो मधुरम्यः सेव्यते वनोद्देशः ॥
जनकसुताभिनिवृत्तैस्तारापत्यानन‌प्रियतमौघैः ॥५१३॥

दधिमुखसंज्ञेन हरिणा=वानरेण । पक्षे बाल्येन दधिभोजितया तन्मुखेन कृष्णेन। मधुः=मकरन्दो वसन्तश्च । जनकसुता

=सीता, ततोऽभिनिवृत्तैः=तद्वार्तां गृहीत्वा प्रत्यागतैः। पक्षे पितॄन् पुत्रांश्च अनादृत्योपयातैः। ताराया अपत्यमङ्गदस्तन्मुखैः। प्रियप्रवाहाणां गिरिवासित्वाद्वानराणाम्। पक्षे तारापतिश्चन्द्रस्तत्तुल्यमुखीनां प्रियतमानां गोपीनामोघैः समूहैः। सीतान्वेषणोत्तरमागतैर्हनुमदादिभिरङ्गदाज्ञया सुग्रीवपालिते मधुवने मधु भक्षितमिति सुन्दरकाण्डे कथा। अत्र गोपीसख्याद्युक्तौ प्रकृताप्रकृतश्लेषः। कालान्तरीणस्वैरिण्युक्तौ तु प्रकृतद्वयश्लेष इति विवेकः॥ ५१३॥

काश्चिदुद्दीपकमाह—

**दमनकवैभवजनिता पारेवाक्सौरभस्य धारेयम्॥**
**अपि मरुतामन्तरगा स्वाभिमतं पार्थिवं भजते॥५१४॥**

दमनको=वृक्षभेदः। पारेवाक्=वर्णयितुमशक्या। मरुतां=वायूनाम्, अन्तरगा स्वाश्रयावयवोपनायकत्वात्। (स्वाभिमतम्=) स्वग्राहकं, पार्थिवं=घ्राणेन्द्रियं भजते। तज्जन्यसाक्षात्कारविषयत्वात्। अथच दमनकसंज्ञस्य मुनेर्वरदानादुत्पन्ना सौरभस्य=रमणीयत्वस्य धारा दमयन्ती मरुतामिन्द्रादीनामिष्टापि स्वसम्मतं पार्थिवं नलसंज्ञमेव राजानं वृतवतीति ध्वन्यर्थः॥५१४॥

काञ्चित्स्वकीयाविमुखं नायकं तत्सखीदमाह—

**दक्षोऽसि सुभग! सत्यं न सतीमेनां यदाद्रियसे॥**
**अद्भुतमेकमिदं यद्वहसितरामर्द्धचन्द्राङ्कम्॥ ५१५॥**

दक्षप्रजापतिरपि सतीसंज्ञां स्वकन्यां यज्ञभूमौ नादृतवानिति प्रसिद्धम्। परन्तु अर्द्धचन्द्राख्यनखक्षतचिह्नं नायिकान्तरसमागमज्ञापकम्। दक्षस्त्वर्द्धचन्द्रचूडामणिं शिवमपि नादृतवानिति व्यतिरेकः॥ ५१५॥

काचिदवधिदिने प्रियागमसंशयात्सखीमाह —

दयिततमस्योज्जीवनहेतोः प्राणस्य वैष सखि ! ॥
आगमने गमने वा दिवसः समुपैत्यवधिरद्य॥ ५१६ ॥

जीवनहेतुत्वं तस्य तत्सङ्गमाशया प्राणापरित्यागात् प्राणस्येवेत्यर्थः । "वा स्याद्विकल्पोपमयोः"इति विश्वः । प्राण-पक्षेऽपि "इन्द्रियेभ्यः पराः प्राणा"इत्युक्तेः प्रियतमत्वम् । जीवन-हेतुत्वं प्राणशरीरसंयोगस्य तथात्वात् तदनागमने मरणमेव भविष्यतीत्यर्थः । न चाऽद्येत्यस्याप्यस्मिन्दिने इत्यर्थात् अद्य दिवस उपैतीत्यन्वयः स्वस्य स्वावृत्तेरिति वाच्यम् । दिनाव-च्छेदककालोपाधीनां बहुविधत्वेन दोषाभावात् ॥ ५१६ ॥

दुष्टोपकारोऽपि हितायेत्याशयवान् कोऽप्याह —

दारुण एष विपाको युक्तो यद्दहति मालिन्यम् ॥
स्वयमेव बहलजिह्वःप्रथमं समर्दापि कृष्णवर्त्मा यत्॥५१७

दारुणो=दुःसहः । विपाकः=परिणामः । मालिन्यं=कार्यक्षतिकृ-तम् । बहुजिह्वो यथोक्तविपर्ययकारित्वात् । कृष्णवर्त्मा=मलिना-चारः । समर्दापि=पदस्थः कृतः । अथच दारुणः=काष्ठस्य श्यामत्वरूपो विपाको युक्तः । यत् सप्तजिह्वः कृष्णवर्त्मा=वह्नि-र्ज्वालितः । तत्संयोगेन दाहे सति श्यामत्वोदयात् ॥ ५१७ ॥

कश्चित्स्वाभिप्रायमाह —

दाडिममोहात्कीरास्त्वय्येव प्रत्युताभिधावन्ति ॥
बाहूल्लनविशदितवक्षोजं कलमगोपि माखिस्था:५१८

शालिभक्षणात् शुकवारणार्थे भुजोत्क्षेपे क्रियमाणे स्तनप्र-काशात्तद्विशेष्यकदाडिमभ्रान्त्या तत्रैव शुकाः समापतन्तीति स्वनिष्ठानर्थोपनिपात इति प्रत्युतशब्दार्थः । तथा चावयोर्निर-

न्तरं सम्भोग एवोऽज्जृम्भतां शालिहानेरप्रयोजकत्वादिति व्यङ्ग्यम् ॥ ५१८ ॥

काचित्सती कदाचिदुपागतं नायकमाह—

दाक्षिण्यमप्यवाप्य त्वमुपेतः सुखयसि प्रिय ! माम् ॥
अम्भोजिनीं विवस्वानिव चन्दनसङ्गतः सुरभिः॥५१९॥

दाक्षिण्यं=लोकानुरोधमात्रम् । चन्दनस्य=नायिकान्तराङ्गानुलेपनस्य । (सङ्गतः=सम्बन्धात्) सूर्योऽपि दक्षिणदिग्वर्तित्वं प्राप्य । चन्दनसङ्गतः सुरभिः मलयाचलसम्बन्धात् ( सुगन्धिर्मनोज्ञो वा ) । कमलिनीं विकाशयत्येव । एतेनानन्यगतिकानां कदाचिदिष्टप्राप्तिरपि सुखहेतुरिति सूचितम् ॥ ५१९ ॥

कश्चित्प्रियामाह—

दासीकृतं विलोचनयुगलेन तवारविन्दकुलम् ॥
सुतनु! निभालय किञ्चित्समुद्यतं रसमुपाहर्तुम् ॥५२०॥

एतद्दर्शनेन तव प्रीतिरुत्पद्यतामित्यर्थः । दासस्यापि जलाहरणं धर्मः । युगलकुलशब्दाभ्यां द्वयोरपि बह्वपेक्षयोत्कर्षसूचनम् । च्विप्रत्ययेन ताभ्यामेव तथा कृतं न तु पारम्पर्यागतं तेषां दासत्वमिति सूचितम् ॥ ५२० ॥

काञ्चिद्गुरुजनपरोक्षमुद्धतां काप्याह—

दिवसकृतितप्यमाने यमुने! त्वमनुद्धतां गतिमकार्षीः॥
घनापिहिते पुनरस्मिन्नुत्कलिकोल्लिखिततीरासि॥५२१॥

यमुने इति सूर्यकन्यात्वसूचनम् । तदा जलशोषाद्गतेर्मन्दत्वम् । तस्मिन् मेघच्छन्ने तु तरङ्गभिन्नतटासि । अथच दिवसकृतिः सदाचारपरत्वेन प्रकाशकत्वात् । तप्यमाने इति तद्भयसूचनम् । यमुने इति स्वभावमलिनत्वसूचनम् । विनयव्यञ्ज-

नार्थे गतेर्मान्द्यम्। घनमत्यन्तं पिहिते=दूरस्थे सति। उत्क-ण्ठया उल्लिखितं ज्ञानविषयीकृतं तीरं यया। सङ्केतस्थानतया तदेव मुहुः स्मरसीति भावः॥ ५२१॥

कश्चित्प्रियामाह—

दिङ्मातङ्गा विधिना भवदीयगतिस्तनोरुशोभायाः॥
लेशाश्रयावयवका इत्यर्थविवक्षया विहिताः॥ ५२२॥

यत्र किञ्चिदर्थमुक्त्वा तदधिकोऽर्थः सूचयितुमिष्टस्तत्र दिगिति लिखन्तीति सम्प्रदायः। ततश्च दिग्गजा इति दि-ग्रूपा गजा इति। त्वद्गतिस्तनोरूणां शोभाया लेश एतद्गतिकु-म्भकरेषु तिष्ठति। वस्तुतस्त्वद्गत्यादौ एतदधिकशोभाप्यस्तीति सूचनाय निर्मिता इत्यर्थः। गतेर्गजावयवत्वाभावेऽपि गजस-मवायनिरूपकत्वसाधर्म्येण तथोक्तमित्यवधेयम्॥ ५२२॥

काचिन्नायिकामाह—

दीपयसि स्नेहभृतं रुचिरतरदशाविशेषमनलेन॥
तमपि मदनेन सुन्दरि! देहस्य म्लानिमावहता॥ ५२३॥

स्नेहेन=तैलेन भृतं पूर्णम्। दशा=वर्तिः। दीपयसि=दीपं करोषि। वर्तेर्वह्निमत्त्व एव दीपोत्पत्तिः। म्लानिः=दाहेन श्या-मत्वम्। नायकपक्षे (स्नेहभृतं=)प्रणयवन्तम्। भृतमिति क्विब-न्तस्य द्वितीयान्तम्। अतिरम्यो दशाविशेषो यौवनरूपावस्था यस्य। दशा=अदृष्टं वा। तत्सङ्गमौत्सुक्येन देहस्य म्लानिं= विषयान्तरासम्पर्कं कुर्वता मदनेन दीप्तं करोषीत्यर्थः॥ ५२३॥

कश्चित् द्यूतारम्भे प्रियामाह—

दीव्यन्त्यैव भवत्या विजयोऽस्ति विनिर्मितोऽक्षाणाम्॥
पणपूर्वकं कथमथ द्यूतारम्भः प्रवर्ततां तन्वि!॥ ५२४॥

दीव्यन्त्या=शोभमानया। अक्षाणां=मदिन्द्रियाणां, विजयः=स्वाधीनत्वम्। अथच दीव्यन्त्या=क्रीडन्त्या। अक्षाणां=द्यूताङ्गानाम्। एवंच ममाक्षाभावे कथं द्यूतं वैमनस्यात् सामग्र्यभावाच्च। द्यूतान्तरे पणस्यैव विजयोऽत्र त्वक्षाणामिति व्यतिरेकध्वनिः॥ ५२४॥

कश्चिन्नायिकामाह—

**दीधितयस्त्वदधरयोरधरत्वं बिम्बमुपनयन्ति॥**
**स्थितिमिच्छन्त्योऽत्र स्वाधारव्यभिचारपरिहारात्५२५**

"दीधितिमेकां मुक्त्वा रम्यनिधानं तु पुंस्येव" इति वररुचिः। त्वदधरवृत्तिशोभाविशेषलेश एव बिम्बफलेऽपि वर्तते। एवंच तस्य स्वाधारमपहायान्यत्र वृत्तौ व्यभिचारः स्यादतो बिम्बस्याप्यधरत्वं कृतम्। अधरपदेनात्र हीनत्वं विवक्षितम्। एवंच बिम्बवृत्तित्वेऽप्यधरत्वाभाववद्वृत्तित्वं नास्तीति न व्यभिचार इत्यर्थः। अत्राधरस्यानुपमत्वं व्यङ्ग्यम्॥ ५२५॥

पुरुषायितावस्थां कश्चिदनुसन्धत्ते—

**दूतीव भावमखिलं निवेदयन्ती विषज्य कर्णान्ते॥**
**दृष्टिस्तव सविलासं गतागतं वितनुते सुतनु!॥५२६॥**

भावम्=अभिप्रायं निवेदयन्ती स्वनिष्ठवैलक्षण्येन प्रत्याययन्ती। दूत्यपि रहस्यतया कर्णलग्ना भूत्वा वार्तां वदति। "यद्गतागतविश्रान्तिवैचित्र्येण विवर्त्तनम्" इत्युक्तरीत्या कटाक्षलाभाय-गतागतमिति। दूत्यास्तु उभयसमीपे स्पष्टम्। अत्र स्निग्धा दृष्टिर्विवक्षिता। तथाच सङ्गीतमीमांसायाम्—

"स्निग्धा विकाशिनी स्निग्धभङ्गुरा चतुरे भ्रुवौ॥
बिभ्रती साभिलाषोद्यदेकभ्रूस्तु कटाक्षिणी॥" इति॥५२६॥

काचिन्नायकाय विरहिण्यवस्थां निवेदयति—

दूरस्थमपि भवन्तं व्यनक्ति संस्कार आन्तरस्तस्याः ॥
बाह्यः स एव भवता जग्राह तदीयविग्रहवियोगम्॥५२७

संस्कारो द्विधा आन्तरो बाह्यश्च। आद्यो भावनारूपः। द्वितीयस्तु प्रसाधनरूपः। आद्यस्त्वां दर्शयति। भावनाबलेन चाक्षुषस्य मानसस्य च तत्साक्षात्कारस्य भ्रमात्मकस्योत्पत्तेः। द्वितीयस्तु त्वया सहैव देहाद्बहिर्भूत इत्यर्थः।

"क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका॥"

इति याज्ञवल्क्योक्तेः॥५२७॥

काचित्कस्याश्चिद्व्यक्तिमाह—

देवरतः सैष जनो लिप्सुर्लोकोत्तरां प्रीतिम्॥
न गणयति शिशिरमारुतवर्षनिदाघादिजनितरुजम्॥५२८

न गणयतीति। "ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः।" इत्यादिवचनात्। अथच देवरशब्दात्तत्सिः। पतिकनिष्ठभ्राता देवरः। लोकोत्तरामिति। रसस्य सविकल्पकनिर्विकल्पकोभयाग्राह्यतयाऽलौकिकताया आलङ्कारिकसम्मतत्वात्। शिशिरेत्यादिकमभिसरणकालीनम्॥५२८॥

(वर्षावृष्ट्या नदीतीररुहतरुनाशेन सङ्केतस्थानभङ्गात्खिद्यमाना काचित्सखीमाह—)

दैवेनेव तटिन्याः प्रतिकूलं धावता प्रवाहेण॥
उन्नतिभृतोऽपि सहसा सखि! शाखिगणाः समुत्खाताः॥

"दैवं दिष्टं भागधेयम्" इत्यमरः। शुभादृष्टवारणाय-प्रतिकूलेति। पक्षे कूलाभिमुखम्। धावतेत्युभयोरप्रतिहतत्व-

सूचनम् । उन्नतिः=उच्चता धनादिमत्ता च । शाखिनो=वृक्षा जनसमुदायवन्तश्च । समुत्खाता=निर्मूलिता नाशिताश्च । एतेन प्रावृषो वृद्धिसूचनम् ॥ ५२९ ॥

कांचिद्गुरुजनपरोक्षमुद्धतां काप्याह—

दोधूयतेऽतिभूयो वीरुदियं भीरु! मुक्तानाम् ॥
चम्पकदामनि लग्ना मनोभुवः सिन्धुवारदोलेव॥५३०॥

दोधूयते=कम्पते । दोधूयमानास्तिष्ठन्ति इति वैशेषिकादिप्रयोगदर्शनात् । कामिनीचम्पकमालयोर्बिम्बप्रतिबिम्बभावः । उत्प्रेक्षाख्यकविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारेण एकरतेच्छानिवृत्तिसमानकालीनान्यरतेच्छाधारस्य व्यञ्जनेन फलतो विशेषोक्तिध्वनिः ॥ ५३० ॥

कस्यांचिदापाततो रज्यमाने नायके काप्याह—

दोहाया इव यस्याः प्रथममुपक्रान्तबहुकलं चरणम् ॥
सुन्दर! पर्यवसाने तस्या नियतं कलापचयः ॥५३१॥

यस्या (चरणम्=) आचरणं, प्रथममेव प्रक्रान्ता बहवः कला यत्र तथा भवति तस्याः परिणामे कलाहानिरेव । पारमार्थिकतदनभिज्ञैव प्रथममाडम्बरप्रकाशनात् । तद्रहस्यविदस्तु क्रमेणैव कलां प्रकटयन्ति। दोहाख्यच्छन्दसोऽपि प्रथमचरणं बहुकलं त्रयोदशमात्रत्वात् । द्वितीयं त्वेकादशमात्रमिति कलाहानिरित्यर्थः ॥ ५३१ ॥

कश्चित्कामिनीनां विशेषमाह—

दोषं विनैव विभ्रममपि तेन फलोपधायिनीं च कृतिम्॥
सुवते बत तद्वाम्यं चरितेऽप्यासां न दृश्येव ॥ ५३२॥

दूषणरहितं विभ्रमं=चित्तवृत्त्यनवस्थानं "शृङ्गाराद्विभ्रमो मतः" इति भरतः । तेन च फलोपधायिनीम्=अव्यभिचा-

रित्वेन परवशीभावकरीम् । कृतिं=कटाक्षादिरूपाम्,सुवते=जनयन्ति । वाम्ये=सौन्दर्यं विलक्षणत्वं च । नहि दोषाभावे भ्रमः। न वा भ्रमजन्यप्रवृत्तेर्नियमेन फलसंवादः । अत्र त्वभेदाध्यवसानात्तदुभयमपीति चित्रम् । भ्रान्तप्रवृत्तेरपि कदाचित्संवादान्नियमलाभार्थमावश्यकत्वार्थे णिनिः(१) ॥ ५३२ ॥

कांचित् दूतीदमाह—

**दोलायसे यथा त्वं सुन्दरि! तथैव तदन्तरात्मापि ॥**
**अत आत्माभिन्नायां त्वयि तस्यानुपधिकः स्नेहः ५३३॥**

दोलायितत्वं दोलाखेलनकर्म । नायकात्मनस्तु तत्प्राप्तिजनकोपायपरम्परापरिशीलनपरत्वम् । एवंच त्वद्दोलायितेन तस्यापि तथात्वादुभयाभेदसिद्धौ त्वय्यात्मभूतायामनौपाधिकं प्रेम । तादृशप्रेम्णो विषयान्तरेष्वभावात् । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रवणादित्यर्थः ॥ ५३३ ॥

इति दकारव्रज्या ।

कश्चित्तदवस्थामनुभूयाह—

**धन्यास्त एव भुवने नीरागमनञ्जनं रसमयं ये ॥**
**ब्रह्मेव वरतनोर्वपुरीक्षन्ते मज्जनोत्तीर्णम् ॥ ५३४ ॥**

जलसम्बन्धेनानुलेपनाञ्जनयोरुन्मार्जनात् नीरागेत्यादिद्वयम् । जलमयमिति प्राचुर्ये मयट् । मज्जनोत्तीर्णं=स्नानक्षणाव्यवहितोत्तरकालीनम् । धन्यत्वं रमणीयविषयदर्शनात् । ब्रह्मापि नीरागम्=अभिनिवेशापरपर्यायविषयेच्छाहीनम् । अनञ्जनम्=अविद्यासम्बन्धहीनम् । तद्वतो जीवत्वव्यवहारात् । आनन्दमयमिति स्वरूपे मयट् । "आनन्दो ब्रह्मणो रूपम्"

(१) फलोपधायिनीम् इत्यर्थेत्यर्थः ।

इति श्रुतेः। मज्जनात्तापश्चसम्बन्धादुत्तीर्णम्। ईक्षणं साक्षात्कारः धन्यत्वं च। "एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत" इत्यादिवचनात् ॥ ५३४ ॥

कस्याश्चित्प्रियानुरागेणोद्धततामुदीक्ष्य काप्याह—

**धत्तूरकसुमनस इव तस्या मदहेतुनापि वन्द्यैव ॥**
**सविशेषमीश्वरेण प्रतिनिशि परिगृह्यमाणायाः ३३५॥**

यद्यपि "स्त्रियः सुमनसः पुष्पम्" इत्यमरेण (सुमनःशब्दस्य) नित्यबहुवचनान्तत्वमुक्तम्। तथाप्येकवचनान्तत्वमपि प्रामाणिकमेव "सुमनः सुमनःस्वपि" इति द्विरूपकोशात्। अत एव "वेश्या श्मशानसुमना इव वर्जनीया" (अं० ४ श्लो० १४) इति मृच्छकटिकम्। "मदोऽवलेपः सौभाग्ययौवनाद्यवलेपजः" (प० ३ श्लो० १४५) इति दर्पणः। पक्षे मदो=मत्तत्वम्। धत्तूरस्य तज्जनकत्वात्। सविशेषं नायकान्तरापेक्षवैलक्षण्येन। पक्षे तस्य शिवप्रियत्वात्। परिगृह्यमाणायाः=सम्भुज्यमानायाः। पक्षे स्वप्रियत्वेन मन्यमानायाः। (प्रतिनिशीति) "कनकानि कदम्बानि रात्रौ देयानि शङ्करे" इति वचनात् ॥ ५३५ ॥

कश्चित्प्रियामाह—

**धनुरात्मभेदहेतुः सुमनस एवापि वेध्यवेधकृतः ॥**
**सुतनु! मदनस्य चित्रं शिलीमुखा एव शिञ्जिनीभूताः॥**

आत्मनो भेदो=हतिरन्योन्याभावश्च। हेतुः=आश्रयः। सुमनसः=सहृदयाः पुष्पाणि च। शिलीमुखा=भ्रमरा बाणाश्च। उभयत्राभेदारोपः। तथा तस्मिन्नेव तद्वृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावविरहात् एकस्यैव वेध्यत्ववेधकत्वासम्भवात्, बाणानां च मौर्वीत्वानुपपत्तेरत्र तद्दर्शनमित्याश्चर्यम्। एतेन तस्य लोकोत्तरतया सर्वत्राप्रतिहतत्वं सूचितम् ॥ ५३६ ॥

कश्चित्प्रियामाह—

(१)धम्मिल्ले तव लग्ना विभाति मुक्तावलिस्त्रयी बाले! ॥
चित्तभुवः करवाले सज्जन्ती कीर्तिरिव जगज्जयजा ५३७

"धम्मिल्लः संयताः कचाः" इत्यमरः । मौक्तिकलता केशबन्धनार्था । धम्मिल्लस्य कामकृपाणाभेदेन तत्रस्थमुक्तावली जगज्जयोद्भूतकीर्तितादात्म्येन सम्भाव्यते । स्वहेतुतया तत्र कीर्त्यासङ्गः । "धवलिमा वर्ण्यते हासकीर्त्योः" (प०७का०२३) इति दर्पणे । एतेन त्वत्केशपाशेनैव कामः सर्वं जयतीति वस्तु व्यञ्जितम् ॥ ५३७ ॥

कश्चित्सहृदय आह—

धर्मोऽयमयुतसिद्धः सत्कवितानां च कामिनीनां च ।
कौटिल्यमपि च कान्तिर्माधुर्यं प्रौढिरौदार्यम् ॥५३८॥

अयुतसिद्धः=स्वाभाविकः । कौटिल्यम्=इष्टस्याप्यनादरानुष्ठानादि । एतेन प्रागुक्तो विब्बोकाख्यभावः (सूचितः । कान्त्यादिकमुक्तवान् ) भरतः—

"रूपयौवनलावण्यैरुपभोगोपबृंहितैः ।
अलङ्करणमङ्गानां शोभेति परिकीर्तिता ॥
विज्ञेया च तथा कान्तिः शोभैवापूर्वमन्मथा ।
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च ॥
अनुल्बणत्वं चेष्टाया माधुर्यमिति संज्ञितम् ।
चापल्येनानुपहतमौदार्यं प्रश्रयः प्रोक्तः ॥" इति ।

---

(१) धम्मिल्ले तव लग्ना मुक्तावलिवल्लरीयमुल्लसति ।
इति पाठः का० रा० पु० पुस्तके ।

पक्षे कौटिल्यं=व्यङ्ग्यार्थप्रायत्वम् । अन्यत्र भरतः-

"यन्मनःश्रोत्रनयनप्रह्लादजननं तथा ।
शब्दतत्त्वार्थयोगेन तत्कान्तमिति कीर्तितम् ॥
बहुशोऽपि श्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥
अनेकार्थविशेषैर्यत्सूक्तैः सौष्ठवसंयुतैः ।
उपेतमनतिग्राम्यैरौदार्यं तत्प्रकीर्त्यते ॥" इति ॥५३८॥

कस्याश्चिदर्थे प्रेषयन्तं नायकं सखीदमाह—

**धन्वतरिणेव रुजामपहरता सुभग! सा भवता ।**
**बाला सुधेव जीवनहेतुः करवर्त्तिनी विहिता ॥ ५३९॥**

रुजामपनयता परमाल्हादहेतुत्वात् । पक्षे वैद्यत्वेन रोगहरत्वात् । जीवनेत्युभयत्र स्पष्टम् । करवर्तिनी=स्वेच्छावशंवदा कृता । तथाच तस्यास्तवैवाधीनत्वात्किं तदर्थमस्मन्नियोगेन । धन्वन्तरिरपि अमृतं हस्तेनादायोत्पन्न इति पुराणविदः॥५३९॥

सखी नायकमाह—

**धत्ते सदा हृदि त्वामव्यधिकरणेन धर्मेण ।**
**तत्रापि त्वद्विरहः स्यादिति सुभगैतदाश्चर्यम् ॥५४०॥**

(अव्यधिकरणेन=) अव्यभिचारिणा त्वन्मात्रविषयकेण । (धर्मेण=) अनुरागेण । एवंच तादृश्यां त्वया सम्बन्धाकरणमयुक्तम् । अथच यत्र यस्तिष्ठति तत्र तस्याव्यधिकरणेन=प्रतियोगित्वसमानाधिकरणेन धर्मेणावच्छिन्नप्रतियोगिताकोऽभावो न भवति । घटवति भूतले घटत्वावच्छिन्नप्रतियोगिताकघटाभावाभावात् । व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्ववादिना घटवत्यपि वन्हित्वेन रूपेण घटाभावाभ्युपगमात् अव्यधिकरणेनेत्युक्तम् ॥ ५४० ॥

(१)धाम सुधामयमामयमातनुते हृदि रथाङ्गमिथुनानाम् ।
शक्तिर्व्यक्तिविशेषोल्लेखिन्यसतामिवापि सताम् ॥५४१॥

अन्योन्यानुरागमम्पाप्तपरस्परप्रमोदौ नायकौ सखीदमाह—

धारावाहिकमेतद्युवयोः सौहार्दपीयूषम् ।
लुम्पन्ति न द्विजिह्वा यथा तथाऽऽधीयतां यत्नः ॥५४२॥

पूर्वज्ञानान्यूनानतिरिक्तविषयकज्ञानानां तद्विजातीयज्ञानान्तरव्यवधानराहित्येनोत्पत्तिर्धारावाहिकत्वम् । धारारूपेणाविच्छेदेन वहनात् । दुर्लभत्वादिसूचनाय—पीयूषमिति । द्विजिह्वाः=खलाः सर्पाश्च । तैर्हि अमृतहरणोद्यमः कृत इति स्पष्टम् ॥ ५४३ ॥

भ्रमादसति स्थले गच्छन्तं कश्चित्कोऽप्याह—

धावसि मुधैव केतकसौरभमाघ्राय मधुप! मधु वाञ्छन् ।
व्यभिचारस्य निरूपकमिदमेवाधिकरणं हि तयोः॥५४३॥

सौरभं=गन्धः मृषाप्रसिद्धिश्च । पक्षे आघ्रायेति ज्ञानपरम् । मधुपेति मध्विच्छाध्रौव्यध्वननम् । तयोः=मधुसौरभयोः व्यभिचारस्य=तदभाववत्यपि तद्वृत्तित्वस्य । मध्वभाववत्यपि केतकीपुष्पे सौरभादिति भावः ॥ ५४३ ॥

काश्चित्प्रियामाह—

धिन्वन्ति प्रविशन्तस्त्वदपाङ्गा मानसं परमरालाः ।
उदयति पयोधरोन्नतिसमयेऽत्र तिरस्कृतेन्दुमुखे ॥५४४॥

"स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः । अभिभूतश्चन्द्रो येन तादृशं मुखं यस्मिन् । पक्षे अन्तर्हिता इन्दुमुखाश्चन्द्रादयो यस्मिन् । परम्=अत्यन्तम् । अरालाः=कुटिलाः । पक्षे पराः=

(१) आदर्शपुस्तके अस्या आर्याया व्याख्या नास्ति ।

श्रेष्ठाः मरालाः=हंसाः। मानसं=चित्तं सरोभेदश्च। धिन्वन्ति=प्रीणयन्तीत्यर्थः॥ ५४४॥

दुष्करकार्यसाधनमेव प्रतिष्ठाहेतुर्नतूत्कृष्टजातिमात्रमिति कोऽप्याह—

**धीवरतनयैव मुदं सा वहतु दुरापममरनारीभिः।**
**संयमदुर्गान्तर्गतमचुक्षुभद्या पराशरस्य मनः॥५४५॥**

"कैवर्ते दासधीवरौ" इत्यमरः। दुरापमिति। तादृशस्याप्सरोभिरपि क्षोभानुत्पत्तेः। संयमो=विषयप्रवृत्त्युपरमः। तस्य दुर्गत्वं दृढत्वात्। तेन अन्तः=प्रत्यगात्मन्येव गतं बाह्यविषयवैमुख्यात्। पक्षे दुर्गस्य मध्यप्रविष्टम्। तथाच ताभिरपि अनुत्पन्नक्षोभस्य सत्यवत्यैव क्षोभणात्सैवोत्कृष्टेति भावः॥५४५॥

कश्चिदधरमाधुर्यमनुभवन्नाह—

**धुरि मधुरिमधाराणामधीयते मधु मुधैव वैधेयाः।**
**बिम्बाधरं वधूनामभिदधति विशुद्धधीनिधयः॥५४६॥**

"मूर्खवैधेयबालिशाः" इत्यमरः। अधीयत इति 'इङ् अध्ययने' इत्यस्य लटि प्रथमबहुत्वे रूपम्। तथाचानभिज्ञव्यवहारापेक्षयाभिज्ञव्यवहारस्य बलवत्त्वात् प्रत्यक्षगम्याल्पत्वबाधेन शास्त्रगम्यचन्द्रादिमहत्त्ववदधरमधुरतेत्याशयस्यैव सिद्धिः॥५४६॥

काञ्चिदननुरूपनायके समासक्तां मत्वा सखीदमाह—

**धूम इवाधिकमलिनो दृङ्मिलितोऽप्यसुसहो नितराम्।**
**वन्हिशिखयेव स कुतः स्वव्याप्यत्वं त्वया नीतः॥५४७॥**

वैषम्यतावारणाय—अधिकेति। स्वरूपे तन्निषेधाय—दृङ्मित्यादि। वन्हीति तस्या उज्ज्वलत्वसूचनेन तत्सम्बन्धानर्हत्वद्योतनम्। व्याप्यत्वं=स्वाधीनत्वम्। तस्य त्वद्दास्येऽप्यन-

धिकारात् । वह्निनापि धूमः स्वव्याप्यत्वं=स्वाभाववदवृत्तित्वं नीतः । तस्य मलिनत्वं श्यामत्वात् । दृगिति धूमस्पर्शस्य गोलकावच्छिन्नत्वगिन्द्रियग्राह्यत्वात् ॥ ५४७ ॥

कश्चिदिदमाह—

**धृष्टत्वं रतिसमये कलयन्त्यसतीभिरप्यनाकलितम् ।**
**कुलपालिका विभाते ह्रियमेत्यविभाविता नवोढाभिः ॥**

"कुलस्त्री कुलपालिका" इत्यमरः । रतिक्षणेऽसतीभ्योऽप्युत्कृष्टत्वाद्धृष्टत्वम् । अन्यदा तु नूतनस्त्रीभ्योऽप्यतिशायिनीं लज्जां बिभर्तीत्यर्थः । तथाचैतदधिकवैलक्षण्यानुभवानुरोधेन नान्यत्र प्रीतिरुचितेति भावः ॥ ५४८ ॥

कश्चिद्वेश्यास्वभावमाह—

**धृत्वापि हृदि मुहूर्त्तं शिशिरप्रकृतीनपि व्युदस्यन्ति ।**
**तत्तद्विषयेष्वरसा विरहिण्यो वारवनिताश्च ॥ ५४९ ॥**

हृदि=वक्षसि मनसि च । धृत्वा=संयोज्य । पक्षेऽनुरागदर्शनार्थं ज्ञात्वा । शिशिराः=क्रूरभिन्नाः शीताश्च । अरसा=विषयनिवृत्तिदशाप्राप्तत्वात् । पक्षे धनमात्रेच्छावत्त्वात् । यदाह भरतः—

"अर्थहेतोस्तु वेश्यानां प्रियो वा यदिवाऽप्रियः ।
उत्पद्यते नरो नित्यं मुक्त्वा दिव्यनृपस्त्रियः" इति ॥५४९॥

इति धकारव्रज्या ।

काचित् दूतीदमाह—

**न वहसि कमपि विकारं न मायया यासि सम्वलनम् ॥**
**अत एव तस्य जीवस्त्वदभेदं वहति चितमस्कः॥५५०॥**

विकारं=वचनाकारादिवैपरीत्यम् । माया=व्याजः । नि-

रुपाधिप्रणयवत्यां त्वयि तस्य स्वाभेदज्ञानं युक्तमेव। अथच यस्य विकारो नास्ति, अविद्यासम्बन्धोऽपि नास्ति तादृशं ब्रह्मैव। जीवात्मापि तस्यैवाभेदं वहति। अविद्यावच्छिन्नस्य ब्रह्मणो जीवतया वितमस्कत्वे=अविद्यानिवृत्तौ ब्रह्माभेद एव।

"अविद्या संसृतिर्बंधो मनोमोहो मलं तमः।

इति सङ्करजालस्य नामान्येतानि राघव॥" इति वशिष्ठः॥ ५५० ॥

कश्चिदस्थिरप्रणयं सखीदमाह—

नल इव सुन्दर! बध्नास्यालिमहार्यप्रकारभेदेन।
मुञ्चस्यनन्यगतिकामपि चैनां निपतितां गहने ॥५५१॥

अहार्येण=निरसितुमशक्येन। (प्रकारभेदेन=) पारदारिकाधिकरणे कामशास्त्रप्रसिद्धेन प्रकारविशेषेण। आलिं=मत्सखीनायिकां बध्नासि=स्वाधीनतां नयसि। नलसंज्ञः कपिरपि अहार्याणां=पर्वतानां प्रकारभेदेन=विजातीयसंस्थानेन आलिं=सेतुं बद्धवानिति रामायणे स्पष्टम्। सर्वविदितानुरागतया अनन्यगतिकाम् अत एव गहने कष्टे निपतितां च त्यजसि। नलसंज्ञो राजापि वने भैमीं त्यक्त्वा गत इति भारतम्। नलपदं पूर्वोत्तरार्द्धयोः कपिराजवीरसेनतनयोभयपरम्॥ ५५१ ॥

काञ्चित्कामीत्याह—

नर्मदयापि भवत्या बहुरसयापीहितमनर्हम्॥
अनुकूलमनुसरन्ती यदिदं प्रतिकूलमपि यासि ॥५५२॥

नर्म=क्रीडा तद्ददातीति नर्मदा। "नर्मदः केलिसचिवे नर्मदा सरिदन्तरे" इति विश्वः। (बहुरसा=प्रभूतानुरागा)

स्वानुकूलगमनोद्यतापि प्रतीपमनुसरसीत्यनुचितम्। नद्यपि बहु-जला अनुकूलं=कूलाभिमुखं यदा याति तदा प्रतिकूलमपि यात्येव। अनुप्रतिशब्दयोर्लक्षणादौ समानार्थत्वादिति भावः॥५५२॥

सखीदमाह—

नमयति वदनं वक्षोरुहमामृशति प्रिये बाला॥
हेमाम्बुजमुकुलोपरि तामरसादुभुतमुदीक्षितुमिवेयम्॥

प्रियकर्तृकस्तनस्पर्शनजन्यलज्जाहेतुकवदनप्रह्वीकरणं सुवर्णपद्मकोरकोर्ध्वगतरक्तोत्पलकोरकदर्शनार्थतया सम्भाव्यते इति फलोत्प्रेक्षा। स्तनस्य मुकुलेन करस्य कोकनदेन साम्यम्। तथाच तत्स्पर्शस्यापि तत्रापूर्वतया सुखविशेषजनकत्वं सूच्यते॥५५३॥

सखी काञ्चिदिदमाह—

नखरेखोल्लिखितं ते हृदयमवेक्ष्यैतदुन्नीतम्॥
इह समये कुसुमेषुर्वहति पलाशाशुगानेव॥ ५५४॥

नखक्षतानां पलाशमुकुलाकारत्वात्तद्वति हृदये पलाशबाणभेद इति सम्भाव्यते। ततश्चेतनाधीनतयैषां कामक्षिप्तत्वसिद्धौ तद्वृत्तां विना च क्षेपासम्भवात्तत्सिद्धिरित्यभिप्रायेण—वहति पलाशेत्याद्युक्तम्। अनेन किंशुकानामन्यापेक्षया स्मरोद्दीपकत्वातिशयसूचनम्॥ ५५४॥

मुग्धायाः सखी नायकमाह—

नवयौवनेन तनुता दत्तावयवाय मध्यमायाऽस्याः॥
पर्यापिता तनौ सा भूयो भवदीयविप्रलम्भेन॥५५५॥(१)

---

(१) अत्र का० रा० पु० पुस्तके—

नयनस्पन्दप्रत्ययनिर्धारितवल्लभागमया।
नवसुदृशा भूषाणां मिषतः सूत्राण्यभञ्जिषत॥

इत्यधिकं वर्तते।

तनुता शरीरवृत्तिधर्मो न त्ववयववृत्तिः। स च यौवनेन मध्याय दत्तः। तत्र कृशत्वोदयात्। त्वद्विरहेण तु पुनरपि तस्य शरीरवृत्तित्वमेव कृतम्। सर्वावच्छेदेन तत्र कार्श्योदयादिति भावः। कस्यचित्पदं हृत्वा केनचिदन्यस्मै दाने पुनरन्येनाऽस्मा एव दानप्रतीतेः समासोक्तिः॥ ५५५॥

कस्यचित्प्रियानुरागमुदिता सखीदमाह—

**नाभीसरसि विभाति प्रियपाणिः कोकनदवदयमस्याः॥**
**रोमावलीलतायां योऽकलयत्पल्लवस्य रुचिम्॥ ५५६॥**

मुग्धाया विश्वासनार्थं प्रथमं रोमलताप्रदेश एव करव्यापारे क्रियमाणे औचित्यवशात्किसलयमिवादृश्यत। तदुत्तरं किञ्चिद्विश्रम्य नाभौ तथात्वे तु सरःसदृशतया तत्र रक्तोत्पलवदाभातीत्यर्थः। अकलयदिति दर्शना····

"विश्रब्धायाः स्त्रियाः कार्यमङ्गमत्यङ्गवीक्षणम्।
अन्यथा क्रियमाणं तत्तदुद्वेगाय जायते॥"

इति कामशास्त्रम्॥ ५५६॥

काञ्चिन्मृषैव कुप्यन्तीं हितैषिणी सखीदमाह—

**नामान्तरेण तदिदं न्यक्करणं प्रणयरेखायाः॥**
**यदविप्रियेऽपि दयिते तदुक्त्या प्रत्यवस्थानम्॥५५७॥**

"जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया।
उक्त्वैवं योऽन्यथा कुर्यात्तद्विप्रियमिति स्त्रियाः॥"

इति भरतः। तस्याऽभावोऽविप्रियम्। तत्रापि विप्रियाभावेऽपि। यद्वा न विद्यते विप्रियं यस्य कर्तृत्वसम्बन्धेनेति बहुव्रीहिणा दयितविशेषणम्। विनैवापराधं तस्यापराधभ्रमात्कलहकरणे प्रेमविच्छेद एव स्यादिति भावः॥ ५५७॥

कश्चित्प्रियामाह—

नासालङ्कृतिमौक्तिकयुगलं तव भाति गर्भमाणिक्यम् ॥
रदनवसनस्पर्द्धादोषाद्बन्दीत्वमिव नीतम् ॥ ५५८ ॥

मध्यग्रथितरक्तमाणि मुक्ताफलद्वयं नासाभरणवर्ति दन्तस्पर्द्धया विशेष्यस्य अधरस्पर्द्धया च विशेषणस्येति द्वयोरपि बन्धनं कृत्वा तत्समीपे स्थापितमिति सम्भाव्यते । कनकसूत्रगुम्फितयोरधरस्पर्शात् । एतेन "वरं विरोधोऽपि समं महात्मभिः" इति न्यायेन महत्स्पर्द्धयापि सुखमेव स्यादिति भावः । ॥५५८॥

कश्चित्प्रियामाह—

नालीकिनीति नलिनीत्यपि विदिता पद्मिनी सम्यक् ॥
धत्तव बाहुमृणालप्रहिताम्बुजसायकेन विद्धोऽहम् ५५९

नालीकं पद्ममस्त्यस्यास्तथा । "नालीकिनी पुटकिनी" इति पर्यायेषु हारावली । पक्षे नालीका=बाणविशेषाः सन्त्यस्याः । नलिनी तत्प्रेरणौपायनलिकावत्त्वात् । तथाच भुजमृणालप्रेरितलीलाकमलबाणेन मम वेधात् मृणालकमलयोश्च पद्मिनीसम्बन्धित्वात्तदुभयवत्त्वमुपपन्नमित्यर्थः ॥ ५५९ ॥

कश्चिदिदमाह—

नाटकमिव व्यलीकप्रतिभासि रसानुकूलसकलार्थम् ॥
हरति बहूनां हृदयं वेश्याप्रेमाङ्कपरिणामम् ॥५६०॥

"व्यवस्थानुकृतिर्नाट्यम्" इति सामान्यलक्षणम् । अत्र विशेषपरत्वे प्रयोजनाभावान्नाटकपदस्य सर्वभेदपरत्वात् मिथ्यैव प्रकाशमाना रसानुकूलाः कटाक्षादयोऽर्था यत्र । तेषां रत्यनुभावत्वेऽपि तत्र वस्तुतस्तदभावेन कृत्रिमताप्रकाशनार्थमेव तथाविधानात् । तत्रापि रामादीनां मृषैव प्रतिभासात् । अङ्कः कलङ्कः

परिणामः=फलं यस्य । दुर्यशोमात्रहेतुत्वात् । तत्राप्यङ्कः सर्गादिस्थानीयः परिणामो यस्य । यदाह भरतः—

"यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ॥
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः" ॥५६०॥

कृतसङ्घटना दूती नायिकामाह—

**नागरिपुमानशेषो निवृत्तिमाधत्त यत्प्रसङ्गेन ॥**
**गुणकेशीमिव तां त्वामवाप्य सुमुखः कृतार्थोऽयम् ५६१॥**

नागरीति सम्बुद्धिः अशेषः=सर्वोऽपि पुमान् यस्यास्तव प्रसङ्गे=प्राप्तौ निवृत्तिं न कृतवान् किंतु तदिच्छामेव। गुणकेशी=मातलिकन्या। सा हि सुमुखसंज्ञाय नागकुमाराय दत्ता । नागरिपोर्गरुडस्य मानशेषो यत्प्रसङ्गेन निवृत्तिं प्राप्तः । अत्रेयमुद्योगपर्वणि कथा—

शक्रानुरोधवशतो बहु दत्तमायुः
कृष्णेन तस्य गरुडेन जिघांसितस्य ।
तार्क्ष्येऽथ कुप्यति हरिः स्वभुजाभिधाना-
त्तस्याभिभज्य गरुतोऽकृत मानहानिम् ॥ ५६१ ॥

कश्चिदिदमाह—

**नियतं समानरूपभृदुद्बोधकृदखिलवृत्तीनाम् ॥**
**तत्किल जीवनमूलं नव्यानः पाति न प्राणः ॥५६२॥**

समानं=नायिकान्तररूपदर्शनेऽप्यपकृष्टत्वेनानवभासमानम् । सर्वेन्द्रियाणां वृत्तिश्च स्वस्वविषयग्रहणसामर्थ्यं तस्योद्बोधः फलोपहितत्वं तद्धेतुः । अन्यथा मोहेन तेषां तदभावात् । तत्=प्रसिद्धं जीवनस्य मूलं=विवरणम् । नव्या=नूतनस्त्री । ( नः=अस्मान् ) प्राणस्तु न पाति तां विना जीवनानुपपत्तेः । यद्वा

परमार्थज्ञ इदमाह । समानरूपं=सर्वदा विकाररहितत्वात् । सर्वेषां वृत्तीनां वस्तवः(?) शक्तयः । तासामुद्बोधकत्वात् । "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं यं मनसो मनो विदुः । तद्ब्रह्मैव जीवनमूलम् ।" "ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति स्मृतेः । व्यानप्राणौ शरीरमरुद्विशेषौ तयोर्जीवनहेतुता नास्ति स्वातन्त्र्येणेति भावः । "न प्राणेन नापानेन जन्तुर्जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" ॥ ५६२ ॥

सखीदमाह—

**निद्राणैव विमुग्धा यत्स्तनसंवरणयत्नमातनुते ॥**
**तेनैवास्याः प्रेयसि वितर्क्यते रागसाम्राज्यम् ॥ ५६३ ॥**

स्तनपिधानानुकूलबाहुवेष्टनादिना तस्याः स्वप्ने तदनुकूलयत्नादि तेन च तदपिधानप्रतिबध्यप्रियकरव्यापारदर्शनम् । ततः स्वप्ने विषयाभावेन चाक्षुषानुपपत्तेस्तस्य संस्कारजन्यतया तदाक्षेपः । ततस्तदतिशयात्तद्धेतुभूतजागरणकालीनमानसधाराप्लवनमिति परम्परयानुरागसिद्धिरित्यर्थः ॥ ५६३ ॥

काचिदतिचापलेन स्त्रीणामप्रतिष्ठैव स्यादित्याशयेनेदमाह—

**निम्नगतिरेव जान्हवि! भवती भूषयतु वा शिरः शैवम् ॥**
**ब्रह्मकरके परिसरत्वधिरोहतु वापि विष्णुपदम् ॥ ५६४ ॥**

निम्ना नीचा गतिर्यस्याः । विष्णोः पदं चरणमाकाशं वा । तथाचानेकपुरुषसंसर्गे तेषामुत्तमत्वेऽपि तत्संसर्गिण्या न कोऽप्युपकार इति भावः । अत्रोच्चपदप्राप्तेरुत्कर्षप्रत्ययहेतुत्वस्य वाच्यतयोत्तरोत्तरं नीचपदप्राप्तिरेवोक्ता ॥ ५६४ ॥

काचिदिदमाह—

**निर्झरपृषता दृषदामुपरि निपातात्समुत्थिता भान्ति ॥**
**कुञ्जान्तरदोलायितवनदेवीहारमौक्तिकवत् ॥ ५६५ ॥**

उच्चस्थानात्पातसूचनाय—निर्झरेति । "निर्झरः प्रपातजलम्" इति स्वामी । "पृषन्ति बिन्दुपृषता" इत्यमरः । दृषदामित्यादि उत्पतनहेतुकथनम् । वनदेवीनां दोलारभसेन त्रुटितात् हारान्मुक्ताफलानीव भासन्ते इत्यर्थः । तथाच सङ्केतस्थानसूचनम् । यद्वा वेगधारणार्थमिदमाह । तथाच कामशास्त्रम्—

"कल्लोलिनीकाननकन्दरादौ
दुःखाश्रये वार्पितचित्तवृत्तिः ।
मृदुक्रमारम्भमभिन्नधैर्यः
श्लथोऽपि दीर्घं रमते रतेषु" ॥

(रति० र० देशज्ञानाधिकारे प०५श्लो०३)इति ॥ ५६५ ॥

कश्चित्स्वानुरागगोपनपरं नायकं तदभिज्ञा काप्याह—

**निन्हुवतां नाम परं बहुभिरुपायैर्विदग्धा ये ॥**
**वर्द्धिष्णोरतिवेलं रसस्य नियतः प्रकाशस्तु ॥५६६॥**

नामेति सासूयानुमत्या । परमिति तन्निह्नवहेतुत्वाभिमतोपायकरणशक्तिपर्यन्तमित्यर्थः रसः=प्रीतिर्जलं च । तथाच प्रणयनिह्नव एव तं गमयति । जलमपि यत्रैव तत्संवरणत्यागस्तत एव निःसरतीति भावः । एतेनावरणस्याशक्यत्वसूचनम् । एतेनापलप्यमानमप्यर्थं विदग्धाः प्रमाणान्तरेण तर्कयन्तीति सूचितम् ॥ ५६६ ॥

खण्डिता नायकमाह—

**निरवग्रहं प्रवृत्तस्त्वद्वक्षसि तत्पयोधरप्रणयः ॥**
**अद्यापि येन तदिदं मृगनाभिमलीमसं स्फुरति॥५६७॥(१)**

---

(१) इयमार्या का० रा० पुस्तके नास्ति ।

"स्वच्छन्दो निरवग्रह" इत्यमरः । परिणाहित्वेन वक्षसोऽन्तरिक्षतादात्म्यं व्यङ्ग्यम् । पयोधरः=स्तनो मेघश्च । मृगनाभिभिर्मलीमसम् । पक्षे मृगनाभिवत् । अत्रायं कृतनायिकान्तरसम्भोगः कारणान्तरं विना कस्तूरीमुद्रितोरस्कत्वादित्यनुमितिः। हेतुज्ञानं च तच्चित्त(न्ह)मत्यक्षात्मकम् । तथा च दर्पणे—"पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते । ईर्ष्या मानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा । उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा (प० ३ का० १९९ । २०० ) ॥ ५६७ ॥

कश्चित्प्रियामाह—

**(१)निबिडतरस्य हृताखिलदर्शनशक्तेस्तमोव्रजस्येव ॥**
**धम्मिल्लस्य न तेऽस्ति श्यामलता तेजसा नाश्या ॥५६८॥**

दृढबन्धनादल्पत्वाभावाद्वा निबिडत्वम् । न त्वतिबाहुल्यात् । सामुद्रिकविरोधात् । नाशिताऽखिलसहृदयनिष्ठा पदार्थान्तरदर्शनानुकूला शक्तिर्येन । पक्षे अखिलपदार्थकर्मकचाक्षुषशक्तिर्येन । आलोकं विना चाक्षुषमात्रानुत्पत्तेः । अस्य तेजोविरहरूपतया तत्संम्बन्धे श्यामत्वाभावः, केशश्यामतायास्तु स्वाभाविकतया तेजःसत्त्वेऽपि नाभाव इति उत्कर्षापकर्षोभयहेत्वनुक्तौ व्यतिरेक इत्युदाहृतमलङ्कारकौस्तुभे ॥ ५६८ ॥

कांचित्प्रिय आह—

**निशि भवदास्यसमुद्भवपरिमलमाजिघ्रदेकजातीयम् ॥**
**पद्मास्मितमनुमिनुते कोककुलं केलिवापीषु ॥ ५६९ ॥**

एकजातीयं=पद्मसौरभमवृत्तजातिसवच्छिन्नम् । निःश्वासमारुतसौरभे पद्मीयसौरभभ्रमेण पद्मविकाशो जात इति ज्ञानो-

(१) मुद्रितालङ्कारकौस्तुभे व्यतिरेकालङ्कारप्रकरणे उदाहृतेऽस्मिन् पद्ये 'निबिडतरस्य' स्थाने अतिनिबिडस्येति पाठः ।

त्पत्तेर्भ्रान्तिमान् व्यङ्ग्यः। तेन च दिनोत्पत्तिज्ञानाक्षेपाद्विरहवि-रामसम्भावनया ब्रह्मास्वादसहोदरानन्दनिष्पत्तिर्व्यज्यते। ए-तेन नायिकाया उत्तमत्वसूचनम् ॥ ५६९ ॥

कश्चिज्जलकेलिवृत्तमाह—

**निजवदनसम्मुखीना पतयालुभिरलिभिरेवेयम् ॥**
**यमुनायामिन्दीवरवृन्दं विन्दत्यभिन्नरूपमपि ॥५७०॥**

नीलोत्पलकालिन्दकन्ययोः समानरूपत्वात्तस्य च विशेष-दर्शनं विना वस्तुविवेकप्रतिकूलत्वात् यद्यपि नीलोत्पलस्य वि-विच्य ज्ञानं न सम्भवति। तथापि अवयवसौरभलोभेनोत्पल-मपहाय तन्मुखाभिमुखसमापतन्मधुव्रतवृन्देनैव नीलोत्पलं दृष्टं तद्विभागस्य तत एव सम्भवादिति भावः। एतेन मुखस्य ततो-ऽप्यतिशयितं सौरभमिति व्यज्यते ॥ ५७० ॥

काचिदस्थिरस्नेहानुरक्तेदमाह—

**नीरागसङ्गमे सति परिणामे भवति भयमतीव ॥**
**जातेष्वपिहि सुधादिषु हलाहलं जलनिधेरुदितम्॥५७१॥**

रागपदं दृढतररागपरम्। तथाच दृढानुरागहीन इत्यर्थः। अथच नीरं=जलम् अगः=पर्वतस्तयोः सङ्गमे इत्यर्थः। आन-न्दजनकपीयूषादेरुत्पत्तावपि समुद्रमन्दररूपनीरागोभययोगाद्विषं जातम्। भयपदं स्वकारणत्वोभयपरं तेन कालकूटस्य भयहेतुत्वा-सङ्ग्रहः ॥ ५७१ ॥

कश्चिद्विवेकहीनानधिकृत्याह—

**नीलतया पिककाकं हंसबकं सिततया समं येषाम् ॥**
**किञ्चिद्गुणसाजात्योपहतमतिभ्यो नमस्तेभ्यः ॥५७२॥**

शकुनिद्वन्द्वत्वात्पिककाकेत्यादि एकवद्भावः। उपहता

दुष्टा मतिर्येषां तादृशेभ्यो नम इति प्रत्याख्यानाभिप्रायम् । समत्वं=तत्तदसाधारणधर्मप्रयुक्तापकर्षोत्कर्षानाश्रयत्वमतीतिवि-षयत्वम् ॥ ५७२ ॥

कश्चिन्मूर्खान् प्रकृत्याह—

(१)नीता समक्षमक्षतमनवेक्ष्या नियमामियमवहत् ॥
सखीभिरहस्यत रहस्यतः शशिमुखी प्रियाभिमुखी ॥

स्वविशेष्यकान्यसमवेतदर्शनविषयत्वप्रकारकज्ञानदशायां प्रियविषयकदर्शनाभावनियमं दधानापि सदृशज्ञानाभावदशायां प्रियतमं पश्यन्ती सखीभिरुपहसितेत्यर्थः । तस्याः प्रियसङ्गम-पृच्छानुमानात् ॥ ५७३ ॥

कस्याश्चित्प्रथमाभिसारसाहसमुदीक्ष्य कोऽप्याह—

नूतनमद्य निकुञ्जप्रवेशनं बालहरिणनयनायाः ॥
इति मङ्गलगीतिरिव भ्रमरीभिरगायि गुञ्जितव्याजात् ॥

प्रियाभिसरणार्थप्रवेशनान्तरध्वंसासमानकालीनत्वमत्र नूतनत्वम् । बालेति चपलत्वातिशयसूचनाय हरिणविशेषणम् । उक्तनूतनत्वोपपत्त्यर्थं बाला चासौ हरिणनयना चेति बहुव्रीहिगर्भकर्मधारयो वा । गीतिपदं गातव्यपरम् । नवगृहादिप्रवेशेऽपि मङ्गलगानाचारात् । तथाच सङ्गीतमीमांसायाम्
"भूपानामभिषेचने पुरगृहप्रावेशिके कर्मणि—
प्रेष्ठानामपि सङ्गमे सुतजनौ(२) पर्वस्वभीष्टाप्तिषु" इ-

(१) का० रा० पु० पुस्तके इयमार्या नास्ति । एतत्स्थाने—
नीवीमुद्ग्रथयन्तं दयितकरं निजकरेण रुन्धाना ।
वञ्जुलकिसलयरक्तोत्पलकलहालोककौतुकं तनुषे ॥
इत्यार्या वर्तते ।
(२) सुतजनौ=पुत्रजन्मनि ।

स्यादि ॥ ५७४ ॥

काञ्चिदभिसारिकां सखीदमाह—

**नूपुररवोपहूताः कलहंसास्त्वां मिलन्ति तन्वङ्गि! ।**
**सङ्केतकुञ्जसरसीं कथयन्त इवातिसन्निहिताम् ॥५७५॥**

"मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः । तदीयशब्दश्रवणेन हंसोपसर्पणवर्णनं कविसम्प्रदायः । "कादम्बः कलहंसः स्यात्" इत्यमरः । "कलो मधुरवाक्" इति स्वामी । सरस्तीरनिकुञ्जस्य सङ्केतस्थानतया हंससमागमानुमितमञ्जीरध्वनिश्रवणेन हंसाश्रयसरःसन्निधिसिद्धावर्थात्कुञ्जस्यापि तथात्वसिद्धेः । कलहंसपदेनोक्तरीत्याभीष्टार्थसूचनं व्यङ्ग्यम् । तन्वङ्गीति गमनश्रमसूचनम् ॥ ५७५ ॥

खण्डिता नायकमाह—

**नूनं स्तनस्तबकयोस्तस्या भवतापि दत्तमाच्छुरितम् (१)**
**तत्कुङ्कुमेन भवतः कृतमाच्छुरितं तया हृदयम् ॥५७६॥**

"स्यादाच्छुरितकं हासनखघातप्रभेदयोः" इति विश्वः । स्तबकपदेन तद्दानानर्हत्वसूचनम् । सङ्गीतमीमांसायाम् मुकुलहस्तमधिकृत्य—

> "कामिनीकुचकक्षादौ सशब्देन विलेखनम् ।
> गुदे पदेऽङ्गुलीये च तदाच्छुरितकं विदुः ॥" इति ।

रतिरहस्ये—

> "अव्यक्तरेखमणुकर्मनखैः समस्तै
> रोमाञ्चकृच्चटचटाध्वनियोजितं च ।

---

(१) का० रा० पु० पुस्तके दत्तमित्यस्य स्थाने लिखितमिति पाठः ।

अङ्गुष्ठजाग्रनखताडनतो नखानां
गण्डस्तनाधरगमाच्छुरितं लिखन्ति ॥''
(नखच्छेदाधिकारे प० ८ श्लो० ३) इति ।

तत्पदं प्रतिनायिकाकुचपरम् । आच्छुरितं संमिश्रितं तदाश्लेषादिति भावः ॥ ५७६ ॥

काश्चिन्मानिनीं प्रिय आह—

**नेनिजतीव विराजसि बहुगुणमेतत्प्रिये नेत्रम् ॥**
**पतदश्रुवारिधारायोगाद्गलदञ्जनाभमलम् ॥ ५७७ ॥**

निजेः शुद्ध्यर्थस्य सकर्मकस्य जुहोत्यादिपठितस्य शतृमसये नेनिजतीति रूपम् । तत्र नयनं वस्त्रं चेत्युभयाभेदारोपः । गुणाः=तरलत्वादयस्तन्तवश्च । अञ्जनरूपमञ्जनसदृशं चेति समन्वयः । एतेन साञ्जनादपि नेत्रादिदानीन्तनस्य रम्यत्वातिशय इति व्यज्यते ॥ ५७७ ॥

सखी नवोढामाह—

**(१)नेत्रस्य तव विघाते क्रियमाणे प्रियतमस्य नयनेन ॥**
**वदने तव नेत्रं परमुद्भूय सहायमातनुते । ५७८ ॥**

नायकेन दृश्यमानायास्तद्दर्शनसामर्थ्याभावात् विघात इति । उत्तरीयवस्त्रावृतनयनायास्तु तदानीं प्रतिदर्शनसम्भवात्तस्य तत्सहायकारित्वमिति भावः । उद्भूतरूपं नेत्रं वस्त्रस्वरूपं तस्यानुद्भूतरूपनेत्रापेक्षया प्राबल्यात् । अन्यत्रापि सजातीयेन विजितस्य कस्यचित्तदधिकबलस्तज्जातीय उपकारं करोतीति

(१) का० रा० पु० पुस्तके नास्ति । एतत्स्थाने—
नेतव्या पुंवत्त्वं स्त्री तु समानाधिकरणैव ।
तस्य विरहः प्रियायामिति रीतिः पुनरहृद्यैव ॥
इति वर्तते ।

प्रतीतेः समासोक्तिः ॥ ५७८ ॥

काश्चिदन्यत्र स्वानुरागप्रकाशमाशङ्कमानां सखीदमाह—

**नैरन्तर्यनिमित्तः संयोगोऽसावजन्यस्य ॥**
**श्रुत्वेति शाब्दिकगिरं सचकितमालोकसे दिशः किमिति**

नैरन्तर्य=स्वरव्यवधानाभावः। तन्निबन्धनः। अचोऽकारादेरन्यस्य हल्संज्ञस्य संयोगोऽस्ति "हलोऽनन्तराः संयोगः" ( १ । १ ७ )इति वचनेन अज्भिरव्यवहितानां हलां संयोगसंज्ञाविधानादिति वक्तुरभिप्रायः। त्वं तु नैरन्तर्यं सर्वदा समीपदेशावस्थानं तन्निमित्तोऽस्य नायकस्य संयोगो नायिकासमागमोऽजनि जात इत्यर्थभावनया बुद्ध्या किमिति चिन्तामावहसीति भावः। अत्र शङ्किता दृष्टिरभिमता।

"किञ्चिच्चला स्थिरा किञ्चिदुन्नता तिर्यगायता।
दृढा चकिततारा च शङ्किता दृष्टिरिष्यते। शङ्कायां चैव शङ्किता"
इति भरतवचनात् ॥ ५७९ ॥

कश्चिदिदमाह—

**नैषधमिव बहुभङ्गिकमानन्दं जनयति प्रेम ॥**
**तन्नीतं सर्गान्ते तन्मुख एव त्विदं कुतुकम् ॥ ५८० ॥**

भङ्गिः=नानाविधविरहसम्भोगरूपत्वम्। पक्षे भङ्गिः=व्यङ्ग्यार्थः। आनन्दः=सुखमित्युभयत्र तुल्यम्। उत्तरार्द्धे तु आनन्दपदेन पदतदर्थोभयं गृहीत्वा व्यतिरेक उच्यते। नैषधकाव्यस्य सर्गान्ते आनन्दपदवत्त्वम्, प्रेम्णस्तु सर्गमुखे आरम्भमारभ्य तत्सत्तापर्यन्तमेवानन्दजनकत्वं न तु तदुत्पत्तिविच्छेदेऽपीत्यर्थः ॥५८०॥

कश्चित् दुर्जनस्यावश्यपरिहार्यतामाह—

**नैसर्गिकी खलस्य ब्रह्मण इव दुर्गमात्मनो माया ॥**
**जीवहृदस्य पुनः सानुच्छेत्तव्या च तत्त्वधिया ॥५८१॥**

खलस्य दुर्गमात्मत्वं साधुविपच्छन्नत्वात् । ब्रह्मणस्तु श्रवणादिविप्रतिपत्तिगम्यत्वात् । नैसर्गिकी अनादित्वात् । पक्षे स्वाभाविकी । माया=कपटोऽविद्या च । जीवहृत् साधूनामनर्थहेतुत्वात् । तत्त्वबोधादनुच्छेत्तव्यत्वम् । अनाहार्यसद्बुद्धेस्तत्रानुदयात् । ब्रह्मणस्त्वविद्या ( जीवहृत्= ) जीवव्यवहारहेतुः तदवच्छिन्नस्य जीवत्वात् । अखण्डब्रह्मसाक्षा . . . . रीच्छया वेति व्यतिरेकः ॥ ५८१ ॥

सखी अभिसारिकामाह—

**नोदयतीव सजन्ती पृष्ठे त्वां तिमिरलेखेयम् ॥**
**पुरतश्चापसरन्ती वरतनु ! दत्तेऽवकाशमिव ॥ ५८२ ॥**

पृष्ठतो नोदनेनातिघनत्वं व्यङ्ग्यम् । नोदनं प्रेरणम् । अग्रतः किञ्चिद्विदूरीभवन्ती च गमनावकाशमिव ददाति । पश्चात्प्रेरणेऽपि पुरोमार्गरोधे गमनासम्भवात् । स्वपुरःसमीपेऽन्धकारः किञ्चिद्विरलः स्वदूरे च घन इव प्रतिभातीति यदा स देशो दूर आसीत्तदा तत्रैवान्धकारः स्थितः । समीपगमने तु स विदूरे गत इति उपचर्यते । एतेन तमसोऽभिसारानुकूलत्वसूचनम् ॥ ५८२ ॥

कस्याश्चित्सखी कथमस्मासु सम्प्रति न पूर्ववत्प्रणय इति वादिनं नायकमाह—

**नौरिव विगतरसे पथि हृद्वृत्तिर्नैव सञ्चरति तस्याः ॥**
**द्वीप इवोभयतो रसशाली त्वं स्तम्भयसि तां तु ॥५८३॥**

उभयत्रापि रसः=शृङ्गारो जलं च। उभयतः=नायिकाद्वये भागद्वये च। स्तम्भयसि=स्वविषयकानुरागहीनां प्रतिबद्धगतिकां च करोषि। "द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" इत्यमरः। तथाच तवान्यरक्तत्वादेवमिति भावः॥५८३॥

इति नकारव्रज्या।

जनापवादभयेन सङ्कुचन्त्यां नायिकायां दूतीदमाह—

**परिचितमृदुवृत्तीनां सन्धिप्रस्तावनाभिरूपाणाम्॥**
**अङ्कातिशयादेवातिशयः प्रेम्णां च नाटकानां च॥५८४॥**

अङ्को व्याख्यातः। तदुत्कर्षादेव नाटकस्योत्कर्षः। उत्कर्षः सङ्ख्यया स्वरूपेण वा उभयसाधारणः। मृदुर्मनोहरा वृत्तिः परस्परानुवर्तनं यत्र। पक्षे वृत्तयो भारती सात्वती कैशिकी आरभटीति चतस्रः। "वृत्तिर्विवरणे जीव्ये कैशिक्यादिषु चेष्यते" इति विश्वः। सन्धिः=उभयमिलनम्। तस्य प्रस्तावना=प्रसङ्गसम्पादनम्। पक्षे सन्धयो=मुखादयः पञ्च। प्रस्तावना=नाटकारम्भः। भरतः-

"मुखं प्रतिमुखं चैव गर्भो विमर्षस्तथा।
तथा निर्वहणं चैव नाटके पञ्च सन्धयः" ॥ ५८४ ॥

कश्चित्प्रियामाह—

**पक्ष्मलमक्षि तवेदं स्मराधिवसनीयवसनमाकलये॥**
**नेत्रपदमेतदर्थकमाचक्षाणैर्विवृतमेतत्॥ ५८५॥ (१)**

प्रशस्तं पक्ष्मास्त्यस्य पक्ष्मलम्। अथच पक्ष्मारब्धमुत्तमवस्त्रम्। "पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि" इति विश्वः। एवं च पक्ष्मलत्वरूपविशेषणांशेन तस्य वसनरूपत्वमित्युक्तम्। इदानीं तु विशेष्यतयापि तदेवेत्याह—नेत्रेति।

(१) पौरिदं स्फुटं विहितम् इति पाठः का० रा० पु० पुस्तके।

वस्त्रार्थकनेत्रवाच्यत्वमीक्षणस्य वदद्भिरिदं स्मरपरिधेयवस्त्रमिति स्फुटमेवोक्तप्रायमिति भावः ॥ ५८५ ॥

कश्चित्प्रियामाह--

**पश्योदयन्तमिन्दुं सुन्दरि ! भवदास्यसाम्यलोभेन ॥**
**अव्यवाहिताग्रसमयानुभूतवह्निप्रवेशमिव ॥ ५८६ ॥**

अनुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वात्-उदयन्तमिति । अत एव "उदयति विततोर्ध्वरश्मिरज्जौ" ( स० ४श्लो० ) इति माघः । उदयाव्यवहितोत्तरकालवह्निप्रवेशस्य प्रत्यक्षबाधितत्वात्-अग्रेति आद्यर्थकम् । नचाव्यवधानप्रवेशवैयर्थ्यं तज्जन्यरूपस्य व्यवधानेऽपि स्थित्युपपत्तेरिति वाच्यम्(?) । चन्द्रस्य जलावयवबाहुल्येन तैजसत्वेन च पाकाद्रूपपरावृत्त्यसम्भवेन तत्संयुक्तसूक्ष्मवह्न्यवयवरूपस्य चन्द्रे प्रतीतिश्चातिव्यवधानेन सम्भवतीत्याशयेन तदुपादानात् । एतेन मुखप्रतियोगिकसादृश्याश्रयत्वमपि चन्द्रस्य नास्तीति प्रतीपालङ्कारः ॥ ५८६ ॥

दूती नायिकामाह--

**पतिरेति प्रथमायामेव गुणं न पुनरन्यत्र ॥**
**इत्यपरसम्प्रयोगं श्रुत्वा मा नाम विमुखतां यासीः ५८७॥**

पूर्वनायिकायामेव नायको गुणं स्नेहं वहति न त्वन्यत्रेति । अपरसं=मिथ्यात्वेन रसप्रतिकूलं लोकस्य प्रयोगं=प्रवादं श्रुत्वा मम प्राथम्याभावान्मयि स्नेहं न करोतीति श्रुत्वा वैमुख्यं न कुर्याः । एतस्य मिथ्यात्वात् । अथच पतिशब्दः प्रथमायां पतय इत्यत्र "ह्रस्वस्य गुणः" ( ७।३।१०८ ) इति वचनाद्गुणं लभते । न तु विभक्त्यन्तरेषु । तस्य घिसंज्ञाविरहेण तत्प्रयुक्तगुणाभावादिति । (अपरसम्प्रयोगं=) अपरेषां सम्यक्

प्रयोगमिति ध्वनिः ॥ ५८७ ॥

अन्यासक्ते नायके सखी नायिकामाह--

पट इतरसम्प्रयोगं संश्रयतां मिलतु वा तुर्याम् ॥
उत्कृष्टदशस्य पुनस्तस्य गुणेष्वेव समवायः ॥ ५८८ ॥

इतरैश्चक्रादिभिः सह संयोगम्, तुरी इह तत्कारणविशेषः। तस्यां वा मिलतु [ सायुर्गत्वारकस्य ]। उत्कृष्टा दशा प्रान्तो यस्य। तथाविधस्य पटस्य समवायः पुनः गुणेषु तन्तुष्वेव। दण्डादिनिमित्तहेतूनसमवायिनश्च विहाय तन्तुष्वेव पटसमवाय इति प्रसिद्धम्। अथच पटो इति नायिकासम्बुद्धिः। एवंच त्वयैवेदं विभावनीयमिति सूचितम्। अवादेशे "लोपः शाकल्यस्य" (८।३।१९) इति लोपे च सङ्गतिः। इतरनायिकासङ्गमं यातु। तुर्यां=चतुर्थीं वा नायिकां मिलतु। रमणीयदशस्य तरुणस्य तस्य गुणेष्वेव विलक्षणः सम्बन्ध इति त्वय्येवानुरक्तहृदय इत्यर्थः॥ ५८८ ॥

कश्चित्प्रियामाह--

पणतामवापयसि यत् द्यूते पुरुषायितं सुतनुम् ॥
मन्ये तेनैव तव भ्रूभङ्गवशंवदं मदनम् ॥ ५८९ ॥

वशंवदं=भ्रूसङ्केतान्वयव्यतिरेकानुसारिणम्। "पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे" इति विश्वः। "वराटकानां दशकद्वयं यत्सा काकिनी ताश्च पणश्चतस्रः" इति लीलावत्याम्। अत्र पणपदेन द्यूते तज्जयत्वेन स्वीकृतं वस्तु वराटमानं चाभेदेन विवक्षितम्। तथाच मदनसर्वस्वभूतपुरुषायितस्य पणीकरणे तवोत्कर्षः सिद्ध इति भावः॥ ५८९ ॥

काचिदाश्वासयन्तीं सखीमाह—

**पर्यायप्राप्तत्वाद्यदि विरहे नोपधीयते खेदः ॥**
**सहचरि ! तर्हि प्रियतमसंयोगे मुदपि कुण्डलिता॥५९०॥**

"सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्" इति न्यायेन कालक्रमोपनिपतिते विरहे दुःखं न कार्यमिति चेत् तर्हि समागमे सति प्रीतिरपि प्रत्याख्याता । तस्यापि कालप्रवाहायातत्वेनोक्तन्यायेनैव सन्तोषानवकाशादिति भावः । "पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे" इति विश्वः ॥ ५९० ॥

कश्चिन्मनस्वीदमाह—

**पटुतां वृद्धिनिमित्तं विहाय ये ह्रस्वताश्रयाद्ब्रुवते ॥**
**पदमात्रकामुकेभ्यः प्रसञ्जनीयोऽञ्जलिस्तेभ्यः ॥ ५९१ ॥**

स्वोत्कर्षमुद्दिश्य परापेक्षया स्वस्यापकर्षमपि सम्पाद्य ये आत्मनः पटुतां वैदग्ध्यं वदन्ति ते किञ्चित्स्थानमात्रप्राप्तितात्पर्यका इति नमस्कार्या एव । अथ च वृद्धिनिमित्तणिचं विहाय ह्रस्वं वाऽचः कृत्वा पटुशब्दं साधयन्ति ते शब्दमात्रार्थिनः, पाटयतेरुप्रत्यये ह्रस्वे णिलोपे च उणादिषु पटुपदव्युत्पत्तेरिति तेऽपि उत्कृष्टत्वाद्वन्द्याः ।

"रूपान्तरेण देवास्ते विचरन्ति महीतले ॥
ये व्याकरणसंस्कारपरिपूतमुखा नराः" इत्युक्तेः ॥ ५९१ ॥

कश्चिदुत्कृष्टगुण इदमाह—

**परकीयेण गुणेन प्रच्छन्नगुणस्य वस्तुनो भानम् ॥**
**ये मन्यन्तेऽलङ्कृतिमतिचित्रं सहृदयास्ते यत्॥५९२॥**

विपक्षविद्यादिकापेक्षयाऽपकृष्टविद्यादिकस्य भानमलङ्कृतिं=शोभाजनकं ये मन्यन्ते । पक्षेऽन्यदीयरूपाद्यभिभूतरूपस्य वस्तुनो भानं तद्गुणालङ्कार इत्यालङ्कारिकाः । तेऽपि सहृ-

दया रसविभावकाः । ये स्वापकर्षमप्यलङ्कारं मन्यन्ते तेषां कथं सहृदयत्वमिति भावः ।

"स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।

वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥" इति काव्यप्रकाशे उ० १० का० १३७ ) ॥ ५९२ ॥

कश्चिदिदमाह—

**पक्षपरिरक्षणार्थं मैनाकेनावमज्जता जलधौ ॥**

**तत्साध्यविरहयोगात्स्वस्य विपक्षत्वमेव कृतम् ॥५९३॥**

पक्षेषु सत्स्वपि तत्कार्याभावात्तेषामसत्प्रायत्वमेवेत्यर्थः । अथच तस्य पक्षत्वमनुमानधर्मित्वं तद्रक्षणाय प्रवृत्तेन समुद्रान्तरे वन्हिरूपमसिद्धानुमानसाध्याभावाद्विपक्षत्वं साध्याभाववत्त्वेन निश्चितत्ववत्तमेव कृतम् । यदि तत्र न मज्जेत्तदा पक्षतावच्छेदकधर्मावच्छिन्नत्वात्पक्ष एव स्यादित्यर्थः ॥ ५९३ ॥

काञ्चिदभिसारिकां सखीदमाह—

**पद्यान्तरेषु हृदयाभिमतार्थोपनतिजनकेषु ॥**

**विहितावगाहनाः सखि! सहृदयलोका वहन्ति मुदम् ॥**

पद्यानां=मार्गाणां श्लोकानां च । "पद्यं श्लोके स्मृतौ पद्या" इति विश्वः । मनस इष्टोऽर्थो नायको नायिका वा तस्योपनतिः=सन्निधिगमनम् । पक्षेऽभिमतो योऽर्थो विभावादिः । तस्य उपनतिः=प्रतीतिः । अवगाहनं=गमनं विभावनं च । तथाचात्र न श्रमावकाश इति भावः ॥ ५९४ ॥

कश्चिन्नायिकान्तरसम्भुक्तमपि नायिकया तदुक्तिप्रामाण्येन तथात्वेनागृहीतं दृष्ट्वा सहचर आह—

**पद्मिन्या अनुभूतं भवतानिलसौरभादिगुणजातम् ॥**

**स्पृष्टो नासि तयेति न्यायज्ञैरभिमताऽसि मुधा ॥५९५॥**

तत्सम्भोगचिन्हवत्त्वेऽपि सा न सम्भुक्तेति मृषैव ज्ञातं युक्तिभिरपि । अथ च कमलिन्यां चैतन्यारोपात्तदीयसौरभाश्रयावयवोपनायकत्वेऽपि तया स्पार्शनज्ञानविषयीकृतो नासीति नैयायिकैर्मिथ्यैवाभिमतोऽसि । वायुस्पार्शनस्य तैरनङ्गीकारादिति भावः ॥ ५९५ ॥

काञ्चित्सखीदमाह—

**परिकरबन्धमनक्षरमभिसारं प्रति तवाख्याति ।**
**दिवसेऽप्यनुपेक्षात्मककुञ्जाध्वनिभालनं बाले ! ॥५९६॥**

उपेक्षात्मकज्ञानस्य संस्कारानुत्पादकतया अत्यादरेण निकुञ्जमार्गावलोकनं रात्रौ तत्स्मरणार्थमेवेति । एतेनैव तवाभिसारोद्योगः स्फुटीभवतीति भावः । इयं मुग्धा नायिका । उक्त्यभावेऽपि परकीयज्ञानप्रतिपत्तिजनकत्वसाधर्म्येण अनक्षरमाख्यातीति । तदानीमेव किञ्चिदर्थगमनसिद्धये तद्दर्शनवारणाय-दिवसेऽपीति ! तदा प्रकाशसत्तया सहसैव दर्शनात् तादृशाभ्यासस्यानुपयोगादिति भावः ॥ ५९६ ॥

काचित्प्रेम्णो दुर्द्धरत्वेनानुचितप्रवर्त्तकत्वमित्यभिप्रायेणाह—

**(१) पर्वतराजप्रस्थावस्थितमन्दाकिनीनिकुञ्जेषु ।**
**विजयन्ते गिरिजायाःसमं गिरिशेन केलिकुतुकानि ५९७**

अवस्थितेति मन्दाकिन्या निकुञ्जानां वा विशेषणम् । गिरिजाया इति पर्वतराजोद्भवत्वसूचनम् । तथाच स्वजनकोपर्येव क्रीडनमनर्हम्, प्रागेव तु तदभेदाध्यवसितगिरिशेनसनौचित्यद्वयपर्यवसानम् । "मन्दाकिनी वियद्गङ्गा" इत्यमरः । विजयन्ते इति परमदेवतासम्बन्धेनोत्कर्षातिशयात् । पक्षे प्रे-

(१) का० रा० पु० पुस्तके नास्ति ।

मातिशयसूचकत्वात् ॥ ५९७ ॥

कश्चित्पुक्कस्यास्तारुण्यं सौभाग्यं च सूचयन्नाह—

**पल्लीपतितनयाया वक्षोरुहमङ्कमभिगत्य ।**
**विस्मृतवारणकुम्भस्थितिविश्लेषाणि मौक्तिकान्यधुना॥**

पुलिन्दराजकन्याकुचयोः करिकुम्भाकारतया तत्प्रसङ्गेन मुक्ताफलानां गजगण्डविरहस्मरणमिति भावः । अत्र रूपकध्वनिः ॥ ५९८ ॥

कश्चिदिदमाह—

**परिमलविशेषसंसदि पद्मादेः सौरभे निविशमाने ।**
**वरतनुवदनामोदो नायककक्षां समध्यास्ते ॥ ५९९॥**

"नेर्विशः"( १ । ३ । १७ ) इत्यात्मनेपदम् । यथा सभायां स्वस्वानुरूपस्थले सभ्यजने समासीने सति नायकः सर्वोत्कृष्टस्थानमधिवसति । तथा विजातीयसौरभे विविच्यमाने पद्मादिसौरभाणां परस्परनिरूपितसादृश्याश्रयाणां तत्तत्साजात्ये गृह्यमाणे नायिकामुखपरिमलस्य सर्वविलक्षणतया ज्ञानं भवति । पद्मादिवृत्तिसौरभत्वावच्छिन्नप्रतियोगिकोत्कर्षवत्त्वयेति फलितार्थः ॥ ५९९ ॥

काचिदन्धकाराभिसारिकामाह—

**पवनोल्लासितपल्लवगर्भेषु प्रविशतीव तमः ॥**
**अतिनिबिडसजातीयान्तरेण कृतनोदनं पश्चात् ॥६००॥**

सजातीयत्वं स्ववृत्त्यसाधारणधर्मेण। तेन तिमिरान्तरेणेति फलितम् । पल्लवसन्निहितान्धकारव्यक्तेस्तत्पृष्ठगतान्धकारव्यक्त्या नोदने कृते तत्र स्थातुमशक्ताया मन्दमारुतोच्छ्वसितनिकुञ्जदलान्तरालप्रवेशोऽत्र वर्ण्यते । तथाचान्धकारोत्कर्षादभिसारस-

समयः, निकुञ्जसम्पत्त्या च तदुचितदेशसन्निधि, उल्लासनावगतमान्द्यतत्सहचरगुणान्तरोभयाश्रयपवनयोगेन श्रमापनोदने सम्भोगोज्जृम्भणं चेति व्यङ्ग्यम् ॥ ६०० ॥

सखी अभिसारिकामाह–

**पदवीयमतिदवीयस्यपि चैकपदीकृता त्वया सखि ! यत्॥**
**न तदद्भुतं न शक्यो वस्तुनिसर्गोऽन्यथाकर्तुम् ॥६०१॥**

अतिशयेन दूरा दवीयसी। अत्युत्कर्षप्रतिपत्त्यै अतिपदम् । एकपदवदल्पकालेनैव तदुल्लङ्घनात्–एकपदीकृतेति । नात्र चित्रम् । यतो वस्तुस्वभावोऽन्यथयितुं न शक्यते व्याघातात् । "वस्त्वेव तन्न हि भवेत्क्रियतेऽन्यथा यत्" इति न्यायात् । अतश्च प्रणयस्वभाव एवायमीदृशः । अथच एकपदीति मार्गपर्यायः । "वर्त्मन्येकपदीति च" इत्यमरः । तथाच पदव्या एकपदीत्वं धर्म एव कलशस्येव घटत्वमिति भावः ॥ ६०१ ॥

कश्चिन्नायिकामिदमाह–

**परभागलौकिकत्वव्यतिरेकाच्चक्रवालेन ॥**
**संहतिविशेषात्तव कुचेन कान्तत्वमपि लब्धम् ॥६०२॥**

परभागः=शोभातिशयः। तस्य लौकिकत्वव्यतिरेको लोकविलक्षणत्वम् । "लोकालोकश्चक्रवालः" इत्यमरः । परभागः= पश्चाद्भागः तस्य लौकिकप्रत्यक्षविषयत्वाभावेनेति चार्थः । संहतिविशेषात्=संस्थानभेदात् । कान्तत्वं=रम्यत्वम् । अथच चक्रवालशब्दस्य ककारान्तत्वे चक्रवाकशब्दसम्पत्तौ तदर्थप्रायादिति भावः ॥ ६०२ ॥

कश्चित्प्रियामाह—

**पाराशर्यमुनेरपि मतमनुभूतं मृगाक्षि ! मया ॥**
**आनन्दमयोऽभ्यासाद्यदभूवं भवदवेक्षायाः ॥ ६०३ ॥**

त्वदवलोकनपरम्परापरिशीलनेन प्रचुरानन्दनिर्वृत्तहृदयो जातोऽस्मि। अथच "आनन्दमयोऽभ्यासात्" ( अ० १ पा० १ अधि० ६ सू० १२ ) इति वेदान्तसूत्रम्। "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय" इति तैत्तिरीयवाक्येनानन्दमयशब्देन किमन्नमयादि तदर्थान्तरं प्रतिपाद्यते किंवा प्रकृतं ब्रह्मेति सन्दिह्य अन्नमयाद्यनात्मसमभिव्याहारादर्थान्तरमेवेति विशङ्क्य स्थूलारुन्धतीन्यायेन पूर्वमात्मभिन्नानन्नमयादीनुद्दिश्य मुख्य आत्मा आनन्दमयशब्देन बोध्य इति तस्यार्थो व्याख्यातः ॥ ६०३ ॥

मानिनीप्रसादने तत्प्रणाम एवोपाय इति कोऽप्याह—

पाशुपतचन्द्रकलया हैमवतीपदनखार्द्धचन्द्रयुजा ॥
समवृत्तमर्द्धपूर्णं जयति नवीनेन्दुबिम्बमारब्धम् ॥६०४॥

पदनखस्यार्द्धचन्द्राकारत्वात् तदवच्छेदेन पूर्णत्वम्, कलावच्छेदेन चापूर्णत्वम् तयोः संयोगविशेषेण च समवृत्तत्वमित्यर्थः। राकायां समवृत्तत्वेऽपि चन्द्रमण्डलस्यार्द्धपूर्णत्वाभावादस्य नवीनत्वम्।

"न दुर्लभा नृपाणां तु स्त्र्यर्थमात्रकृता गुणाः।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत्" ॥६०४॥

कस्याश्चित्कन्यादशायामेव विनयव्ययं तर्कयन्नाह—

पाषाणचरणयोगे परिणयसमये विधातुमारब्धे ॥
प्रतियुवमस्मयतैषामनर्हसङ्घट्टनपौनरुक्त्येन ॥६०५॥

"अथैनामश्मानमारोहयति" इत्यादिगृह्यवचनात् विवाहावसरे तस्याश्चरणस्य प्रस्तरेण सह संयोगे कर्तुमुपक्रान्ते सति एकं ममानुचितवराय दानात् एकं च सुकुमारतरस्य चरणस्य

कठिनतरस्पर्शेन पाषाणेन संयोगादिति द्विविधमनर्हसङ्घटनं कृतमित्याशयेन यस्मिन् पूर्वमनुरक्ता तं कपटात्सकटाक्षमुदीक्ष्य स्मितं व्यधत्तेति भावः । प्रतियुवमित्यत्र "अनश्च" (५।४। १०८) इत्यव्ययीभावे टच् समासान्तः ॥ ६०५ ॥

काचित्सतीत्वं दुष्करमिति दर्शयति–

**पातिव्रत्यपयोधावतिगम्भीरेऽपि पावकप्राये ॥**
**मैनाकवन्महोच्चं प्रविशति कासाञ्चिदेव मनः ॥ ६०६ ॥**

"आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥"

तस्या भावः पातिव्रत्यं=भर्तृदशामात्रानुविधायित्वम् । तदेव पयोधिर्दुस्तरत्वात् । पावकप्राये=विशुद्धिहेतौ । पक्षे वडवानलप्रचुरे । उच्चम्=ऐहिकभोगेच्छाविरहत्वात् । पक्षे स्पष्टम् । "सकृन्नारी पतिव्रता" इति न्यायेन काश्चिदेव लोकोत्तरस्वभावास्तदनुपालयन्ति न तु तरलहृदया अपीत्यर्थः ॥ ६०६ ॥

कस्याश्चिदनुरागं नायकाय सखी वदति–

**पाटच्चरैरुपहृते लोके कोलाहलाकुलिते ॥**
**हरितासहेरितं तव कलयति दत्तावधाना सा ॥ ६०७ ॥**

"पाटच्चरमलिम्लुचाः" इति चोरपर्यायेष्वमरः । हरिता=दिशा सह तव ईरितं=वचनमवधानपुरस्सरं विवेकेन गृह्णाति । यस्यां दिशि प्रियस्य शब्दः श्रूयते तत्रैवाहं गमिष्यामीति तदभिप्रायः । (जनरवः) कोलाहलं तेनाभिसारसमय उक्तः । तदाह–

"दुर्दिनं हिमसम्पातो हेमन्तरजनी तथा ।
चन्द्रोदयः प्रदोषश्च ग्रीष्ममध्यान्ह एव च ॥
कोलाहलश्च वाताली स्वभावश्चेत्यमी नव ।" इति ।

अयं शब्दो देवदत्तस्येति प्राच्यां शब्द इत्यादिश्चानुमानस्य जायमानत्वाच्छब्देषु देवदत्तादिजन्मतावच्छेदिका जातयः सन्ति याभिर्दिग्देशवच्छिष्टवक्त्रप्रभवत्वानुमानमिति नैयायिकाः ॥ ६०७ ॥

कश्चिन्मानिनीमाह—

**पाटलितं नयनाम्बुजमपि यद्विहितं मुखं विमुखम् ॥**
**तन्मन्ये वरवर्णिनि! मयि मन्तुरपि त्वयारोप्यः॥६०८॥**

पाटलितं=क्रोधेनारुणीकृतम् । पाटलापुष्पं च कृतम् । तथाचाम्बुजे पाटलत्वाभाववत्यपि पाटलत्वस्य,विमुखत्वाभाववत्यपि मुखे विमुखत्वास्यारोपे सति अपराधाभाववति मयि अपराधोऽप्यारोप्यः । तत्तद्वृत्तिधर्मस्य तत्रैव मय्यप्यारोपसम्भवादिति भावः ॥ ६०८ ॥

कश्चिदुपचयहेतुनापि विज्ञानजनकेन प्रणयेन किमपि न कार्यमित्याह—

**पाणिनिनैव समाश्रिततद्धितभावोऽपि वृद्धिहेतुरपि ॥**
**लोपं नीतः कुत्सोत्तरवृत्तिः प्रत्ययो युक्तम् ॥६०९॥**

तद्धितसंज्ञो वृद्धिहेतुरपि कुत्सपदोत्तरवृत्तिरण्प्रत्ययो बहुत्वे सूत्रकृता लोपं प्रापितः । "ऋष्यन्धक" (४।१।११४) इत्यादिना विहितस्य कौत्सेत्यत्र अण्प्रत्ययस्य "अत्रिभृगुकुत्सवाशिष्ठगौतमोऽङ्गिरोभ्यश्च" (२ । ४ । ६५) इति बहुवचने लोपविधानात् । अथच तस्मै हितभाव इष्टसम्पादकत्वं (स) प्राप्तो (येन) उपचयजनकोऽपि प्रत्ययो=नीचजनप्रणयः कुत्सा=निन्दा उत्तरवृत्तिर्यस्य लोकाविज्ञानकारणमिति यावत् । तादृशस्य लोप एव युक्तोऽप्रतिष्ठावहत्वादित्यर्थः ॥ ६०९ ॥

कश्चिदिदमाह—

पारावाराभ्यन्तरनिमग्नमैनाककञ्जभवनेषु ॥
विहरन्त्यो वनदेव्यो न वहन्ति दशाविपर्यासम् ॥६१०॥

"पारावारः सरित्पतिः" इत्यमरः । वनपदमरण्यजलोभयपरम् । तथाच जलाधिष्ठातृदेवतानां काननविहारे विपर्ययः स्यात् । अत्र त्वेकत्रैव तदुभयसत्त्वात्तासां स्वस्वरूपच्युतिर्न भवतीति भावः । एतेन स्वगृह एव गूहयित्वा उपनायकसम्भोगे तव पातिव्रत्यहानिप्रथा न स्यादिति सूचितम् ॥ ६१० ॥

नायकस्यान्यत्रानुरागेण स्वगुणापकर्षशङ्किनीं काञ्चित्सखीदमाह—

पिबतापि तव मरन्दं मधुपेन लतान्तरेषु यद्भ्रान्तम् ॥
पद्मिनि ! तच्चलताया न पुनरयं वस्तुनो दोषः ॥६११॥

पानेन मधुबाहुल्यसूचनम् । मधुपेत्यविवेकद्योतनम् । भ्रान्तमिति तत्रैतदुत्कृष्टफलानवाप्तिव्यञ्जनम् । तथाच चापलमात्रादेवान्यत्रासक्तिर्न तु त्वदपेक्षया तासामाधिक्यादिति न तदाशङ्कावसरः ॥ ६११ ॥

कस्याश्चिद्विरहिण्याः सखीदमाह—

पिक एष यद्विरहिणीं निहन्ति निर्माति नैव वालिहितम् ॥
रामालापविरोधी कपिविपरीतस्ततो मन्ये ॥६१२॥

कपीनामुत्सर्गतो वैरूप्यवर्णनात्कोकिलस्य च रम्यत्वात्कपिशब्दस्य वर्णयोर्विपर्ययोच्चारणे पिकशब्दनिष्पत्तेश्च वैपरीत्यम् । तत्राविरोधः प्रतिपाद्यते—तद्विशेषो हि हनुमान् विरहिणीं सीतामाश्वासितवान् । अयं तु तदवस्थां पीडयति । एवं कपिर्वालिनो

वानरेन्द्रस्य हितं निर्मितवान् तदनुचरत्वात् । अयं तु आल्याः सख्या हितं न निर्माति । एतत्पक्षे वाक्यद्वयस्य सामान्यविशेषपरतया न दोषः । एवं स श्रीरामस्य आलापं कृतवान् । आज्ञाविधेयत्वात् । अयं तु रामाणां स्त्रीणां वचनविरोधी । सादृश्येन तत्स्पर्द्धित्वात् ॥ ६१२ ॥

इष्टतावच्छेदकधर्मावच्छिन्नसजातीये विरोधिन्यपि कदाचिदादरः स्यादित्यभिप्रायेण कोऽप्याह—

**पिच्छावचूलभूषितमधुसूदनवक्षसः साम्यात् ॥**
**राधाकुन्तलमिलितं यमुनाजलमीक्षते विपक्षजनः॥६१३॥**

विपक्षाः सपत्न्यः । पिच्छकुन्तलयोर्बिम्बप्रतिबिम्बभावः । साम्यादिपदप्रयोगे श्रौतोपमेति चित्रमीमांसाकारमतम्, आर्थ्येवेत्यभिनवमतमिति अलङ्कारकौस्तुभे विभावितम्॥६१३॥

चन्द्रविद्वेषवती विरहिणी सखीमाह—

**पीयूषं यदि चन्द्रस्तमसा तद्रसविदा न हीयेत ॥**
**देवा न विशेषज्ञा हविरपि यद्वह्निदग्धमश्नन्ति॥६१४॥**

राहुणा मायाबलेन सुधां पीतवता तद्रसाभिज्ञेन चन्द्रस्य भुक्त्वापि परित्यागान्न सुधामयत्वम् । चन्द्रो न सुधामयः सुधारसज्ञेन तद्भिन्नतया निश्चितत्वादित्यनुमानम् । ननु "प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः" इति श्रुतेः सुधारसज्ञैर्देवैस्तथात्वेन निश्चितत्वादसिद्धो हेतुरित्याशङ्क्याह—देवा इति । तथाच सुधारसज्ञेत्यत्र रसान्तरात्सुधारसतारतम्यज्ञत्वमर्थः । देवानां च तथात्वाभावान्न दोष इति भावः ॥ ६१४ ॥

दूती नायिकामाह—

**पीनमुरोरुहयुगलं यस्तव पीतं कृतं तेन ॥**
**अपि दोषमभ्युपेत्य प्रतिषेधाक्षरमपाकृतं त्वयि तत्॥६१५॥**

पीनं=पीवरम् । पीतं=सादरमवलोकितम् । ततश्च पीन-पदस्य पीतपदाभेदासम्भवात् अन्यस्थानेऽन्यस्योच्चारणादसाधुप्रयोगनिबन्धनं दोषम्, पक्षे जनापवादादिदूषणं च स्वीकृत्यापि नकारस्य प्रतिषेधार्थकस्यापगमः कृतः । अथच त्वत्तो निवृत्तिं कथमपि न स मन्यते त्वद्दर्शनोत्पन्नस्मरविकारान्धकारमुग्धत्वादिति भावः ॥ ६१५ ॥

विरहिणीं प्रति सखीदमाह—

**पीडयता तव गात्रं मदनेन शरैः प्रसूनमयैः ।**
**कुसुमोपादेयत्वभ्रमः परावर्त्यते तेषाम् ॥ ६१६ ॥**

प्रथमं सौकुमार्यातिशयसाधर्म्येणाऽवयवाः कुसुमरूपसमवायिकारणसमारब्धा इति लोकानां भ्रान्तिरभूत् । कामेन तु तन्निराकरणाय पुष्पमयैरेव बाणैस्तेषां पीडा कृता । तथाच स्वापेक्षया कठिनद्रव्यस्पर्शस्यैव क्लेशजनकतया कुसुमानामङ्गापेक्षया कठिनत्वसिद्धौ न तत्र कुसुमजन्यत्वमिति विशेषदर्शनान्न तथा भ्रान्तिरिति भावः ॥ ६१६ ॥

काचिन्मेघरूपकेण प्रवृत्तिं नायिकाया दर्शयति—

**पीताम्बरेण चपलान्तरात्मना घनतमालनीलेन ॥**
**भवता बत व्रतक्षतिरारम्भि प्र नाम कासां वा ॥ ६१७ ॥**

पीतवर्णमम्बरं वस्त्रं यस्य । पक्षे पीतम्=आच्छादितमम्बरं=गगनं येन । चपलो=बहुनायिकानुरक्तोऽन्तरात्मा यस्य । अथच चपला=विद्युदन्तरात्मनि यस्य । तमालनीलेनेत्युभयत्र तुल्यम् । व्रतं=पतिव्रतम् । उद्दीपनविभावतया घनस्य आलम्बनविभावतया च श्रीकृष्णस्य व्रतभङ्गहेतुत्वमिति भावः । पानस्य द्रवद्रव्यनियततया आकाशे तदसम्भवात् व्याप्तिर्लक्ष्या । तदतिशयो व्यङ्ग्यः । घनेति पक्षे सम्बुद्धिः ॥ ६१७ ॥

कश्चित्प्रियामाह—

पुरुषायसे यथैव स्वमात्मनः प्रकृतिमपहाय ॥
दधतीह कुन्तला अपि तथा परांचो ललाटगतितां ते६१८

प्रकृतिं=स्त्रीत्वम् । यथातथाशब्दौ दृष्टान्तदार्ष्टान्तिकभावोपदर्शनार्थौ । पराञ्चः=अधोमुखीभूताः । कुन्तलाः=केशाः । (ललाटगातितां=) ललाटवृत्तित्वं प्रतिपद्यन्ते । अथच कुन्तला=देशाः, परां=स्वविरुद्धाम्, चोलो लाटश्च देशविशेषौ, तत्तां प्रतिपद्यन्ते इत्यभेदाध्यवसायेनोक्तिः ॥ ६१८ ॥

काञ्चित्सखीदमाह—

पुष्पाशुगस्तवायं वरगात्रि ! समीपमनुसरति ॥
मनसि निवासानन्तरमिच्छन्निव गात्रसंस्पर्शम् ॥६१९॥

पुष्पसंसर्गेण सौरभोत्कर्षसूचनम् । आशुगो=वायुः । अथच पुष्पाशुगः कामः । वायौ कामाभेदारोपणोच्यते । प्रथमं कामस्तत्र मनसि प्रादुर्भूतस्ततः स्पर्शाभिलाषादित्वाभ्युपैति । अन्योऽपि कामसदृशो युवा तदनुरागविषयत्वेन मनसि लब्धनिवासस्तदुत्तरं तत्सङ्गमाय प्रयस्यतीति भावः ॥ ६१९ ॥

काश्चिदिदमाह—

पुरवैरिणि बहुवारं स्मरेण वैरायमाणेन ॥
नगरवधूनां नयनोपान्तेषु कृता स्थितिर्युक्तम् ॥६२०॥

वैरायमाणेन=वैरं कुर्वता । पुरं=त्रिपुरं नगरं च । पुरवैरिणः पुरस्य मित्रत्वात्तत्सम्बन्धिवधूनामपि समाश्रयणीयत्वादिति भावः । एतेन तत्कटाक्षाणां कामोद्रेकाव्यभिचारित्वसूचनम् । अत्र समालङ्कारः "समभौचित्यतोऽनेकवस्तुसम्बन्धवर्णनम् ।" इति लक्षणात् ॥ ६२० ॥

काचित्प्रियदर्शनमुदितां शङ्कया सर्वतो निभालयन्तीं नायिका-माह—

पुलककुलकञ्चुकवृतं कपोलफलकं विलोकने तस्य ॥
मुग्धे ! संवृणु वसनाञ्चलेन दिगवेक्षणेन कृतम् ॥६२१॥

तद्दर्शनोद्वेलीभूतरत्यनुभावतया रोमाञ्चोल्लासः। वसनाञ्चलेन संवृणु इत्यन्वयः । संयोगविरोधितया तत्प्रतिकूलत्वादिति भावः ॥६२१॥

कश्चिदिदमाह—

पूगभृतान्तरमन्तःकृतपरिचयचूर्णमुत्कलितपर्णम् ॥
रागं मुखे प्रसूते ताम्बूलं वारयौवतं च सखे ! ॥६२२॥

मुखे=वदने आदौ च । रागं=रक्तत्वमनुरागं च । पूगः=क्रमुकं तद्युक्तमध्यम् । पक्षे पूगो=जनसमूहः ।तद्विषयकानुराग-वत्त्वेन तत्पूर्णहृदयम् । अभ्यन्तरे कृतपरिचयः=संयुक्तः चूर्णो यत्र । पक्षे मनसि कृतः परिचयस्य प्रेम्णः चूर्णो नाशो येन । उत्कलिताः=संयुक्ताः पर्णाः=ताम्बूलदलानि यत्र । पक्षे उत्क-लि=अपदाने कलहजनकं तपतीति तपम् ऋणम्=अवश्यदेयत्वेन तत्सदृशं द्रव्यं यस्य । अत एव आपातत एव रागं जनयतीति भावः ॥ ६२२ ॥

काञ्चित्सखीदमाह—

पूरयति त्वां मन्ये वरगात्रि! पयोधरोन्नतेः समयः ॥
येन तटान्तनिकुञ्जे निषद्य विश्राममाप्नोषि ॥६२३॥

पूरयति=उपचितसर्वावयवां करोति । पक्षे पूरः=प्रवाहः तत्सदृशीं च करोति ।पयोधरः=स्तनो मेघश्च ।यतो दयितजन-सङ्गमाय नदीतीरसङ्केतकुञ्जमासाद्य प्रीतिमावहसि । प्रवाहोऽपि

घननिर्मुक्ताऽनवरतवारिधारासमेधितस्तीरकुञ्जमाक्रामतीति भावः ॥ ६२३ ॥

काश्चिदिदमाह—

**पूर्वा हरिदपि तमसा श्यामेयमकारि जृम्भमाणेन ॥**
**तस्यामेव कलानिधिराधास्यति रागमुद्गच्छन् ॥६२४॥**

हरित्=दिक् हरितवर्णा च। श्यामा=नायिका कृष्णरूपा च। कलानिधिः=चन्द्रो विदग्धश्च। रागं = रक्तवर्णत्वमनुरागं चेत्येषामभेदारोपः। सहृदयरागस्य श्यामेतरात्रिपयकत्वाभावानियमेन, अन्यथा तत्र रागाधानासम्भवात् तदर्थं श्यामैव निर्मितेत्यर्थः ॥६२४॥

काश्चिद्रागिस्वभावमाह—

**पौरन्दरं न पदमपि गणयन्ति न जातुचिद्वैधम् ॥**
**आनन्दाद्वयरूपे कुत्रचिदर्थे निबद्धहृदः ॥६२५॥**

पौरं=पुरजनसम्बन्धि अभियोगरूपमपवादरूपं च दरं=भयम्। वैधं=विधिबोधितं नरकादिरूपम्। कुत्रचित्=अन्योन्याभिमतसमागमरूपे। पक्षे ब्रह्मप्राप्तिरूपेऽर्थे प्रवृत्ताः पुरन्दरस्येन्द्रस्य विधेर्ब्रह्मणो वा सम्बन्धि पदं न बहु मन्यन्ते। "आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन!।" (गीता० अ० ८ श्लो० १६) इति भगवदुक्तेः। गणनं प्रथमे पक्षे स्वाभीष्टप्रवृत्तिप्रतिबन्धकताद्विशेष्यकानिष्टसाधनताज्ञानजनकज्ञानाविषयत्वम्। द्वितीये तद्विषयकेच्छाजनकज्ञानविषयत्वं बोध्यम्। एतेन सुखद्वयस्य समकक्षत्वं सूचितम् ॥ ६२५ ॥

इति पकारव्रज्या।

काश्चित्सुजनस्वभावमाह—

फणिभिः परोपकारादयमारब्धोऽपि विमुखतां नेतुम् ॥
इतरत्र सङ्क्रमय्य स्वसौरभं चन्दनस्तमातनुते ॥६२६॥

श्रीखण्डद्रुमस्य सर्वतः संवृतिं कृत्वा भुजगकुलेन तद्भयेनानुपसर्पतां लोकानां तदामोदानुपभोगाज्जनोपकाररााहित्यं कर्तुमारब्धम् । तेन तु जनोपकारव्यसनवशात्स्वामोदं द्रुमान्तरेषु समुपनीय तद्द्वारेणैव तदुपकारः कृत इति भावः । एतेन दुष्टगृहीतोऽपि सज्जनः परम्परयापि परोपकारान्न निवर्त्तत इति सूचितम् ॥ ६२६ ॥

काश्चित्प्रियामाह—

फालद्वयबद्धाया श्चिकुरतते मौक्तिकावलीमध्ये ॥
करकावलिरिव गर्भे कादम्बिन्या धृता भाति ॥६२७॥

"कादम्बिनी मेघमाला"। इत्यमरः। सीमन्तान्तरालनिहिता मुक्ताफलमञ्जरी उभयतोवर्त्तिकुन्तलमध्यपातितया मेघलेखान्तर्गामिकरकाकारत्वेन वर्ण्यते। कुन्तलमेघयोर्बिम्बप्रतिबिम्बभावः । फालद्वयेत्यादिविशेषणं तु मुक्तावलेर्मध्यानिवेशोपपत्यर्थमेवेति नोपमाने तादृशानुपादानं दोषः ॥ ६२७ ॥

काश्चिद्दुर्जनधर्ममाह—

फेरव इति बहुतायामेकत्वे वापि सममेव ॥
भयहेतुः खलु पिशुनो न ग्रह एको बहुर्वेति ॥६२८॥

फेरुशब्दस्य बहुवचने फेरवशब्दस्य चैकवचने फेरव इति रूपं समानम् । सङ्ख्यातिरिक्तांशे तुल्यार्थं च । अतः खलो भयजनक इत्यत्रैव तात्पर्यं न तु तस्यैकत्वे बहुत्वे वा । एकेनापि तेन बहुसाध्यभयस्य जनयितुं शक्यत्वात् । दन्दशूकेनैवैकेन बहुभिर्वा दंशे कृते प्राणहरणस्येति सर्वथा तत्सङ्गः परिहरणीय

इति भावः ॥ ६२८ ॥

इति फकारव्रज्या ।

काश्चित्प्रियामाह—

बलभिदनुरुद्धमेतत्सपक्षगिरिपक्षभेदभवम् ॥
स्वं दोषमिवोन्मार्ष्टुं कुलिशं भूषयति ते स्तनद्वितयम् ६२९

सादृश्यनिरूपकत्वेन स्तनसपक्षभूतानां पर्वतानां महेन्द्रानुरोधेन पक्षच्छेदस्य वज्रेण कृतत्वात् । तेन स्तनाविप्रियाचरणेन तद्दोषोत्पत्तेरावश्यकत्वात्तदुन्मार्जनायेवालङ्करणहीराभेदाध्यवसितवज्रं स्तनद्वयं परिष्कुरुते इति भावः ॥ ६२९ ॥

काञ्चित्सखीदमाह—

बहुभावोऽप्येकस्यां योषिति पुंभावमन्तरा नैव ॥
दारपदव्यतिरिक्ते तन्नाम्नि न यद्बहुत्वमेकत्र ॥६३०॥

पुरुषायितेनैव बहुभावः=प्रेमातिशयो न त्वन्यथा । बहुरोदन इत्यादौ बहुशब्दस्य वैपुल्यार्थदर्शनात् । यतो दारपदस्य पुंल्लिङ्गतया तत्रैवैकदारत्वेऽप्यर्थेऽनुशासनप्रामाण्याद्बहुवचनम् । पर्यायान्तराणां तु सङ्ख्यानेकत्व एव बहुवचनं न त्वेकत्वेऽपि । तेषां पुंलिङ्गाभावेन पुम्भावाभावात् । अतः पुंस्त्वसामानाधिकरण्येनैवैकस्या अपि बहुभावदर्शनादभेदारोपेणोक्तार्थलाभः॥६३०॥

काश्चिद्विरहीदमाह—

(१)बुबुधे बुधैरिति सुपर्वबुधे सुधेदं शशाङ्कभिन्नत्वम् ॥
विरहिजनदाहकतया कल्पयितव्यं तु तद्विशेषत्वम् ६३१॥

---

(१) का० रा० पु० पुस्तके इयमार्या नास्ति । एतत्स्थाने—
बुध्यामहे खलमनो गोत्राविभेदीति वज्रमयमेव ।
बुधहृदयं परजीवनजनकमितीदं सुधारूपम् ॥
इत्यार्या वर्तते ।

चन्द्रदहनयोर्भेदो लौकिकपरीक्षकासिद्धो निष्प्रमाणक एव। दाहजनकत्वेन तदभेदासिद्धेः। परं त्वग्नेः स्वसंयुक्ते दाहजनकत्वं चन्द्रस्य तु विरहिणीति भेदाद्दाहविशेषत्वमेव कल्पयितुं युक्तमिति भावः। संयुक्तस्य प्रियवियोगिनश्चाभेदारोपाच्चदाहकत्वतदभावाभ्यामुक्तार्थसिद्धिः॥ ६३१॥

इति भकारव्रज्या।

कश्चिन्मानिनीमाह—

**भवतो न पदस्पर्शो युज्यत इति मामुपालभसे॥**
**गुणमय्यास्तव नार्हः क्रोधोऽपीति प्रिये! पश्य॥६३२॥**

मत्प्रसादापेक्षित्वे "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायेन मद्विप्रियमेव न कुर्यास्तत्करणे तु किमिदानीमलीकप्रणयाभिनायकेन चरणपतनेन। अथ च भसंज्ञावतः प्रत्ययस्य पदसंज्ञास्पर्शो न साधुः "आकडारादेका संज्ञा" (पा० सू० १।४।१) इति वचनादेकत्र संज्ञाद्वयसमावेशाभावादित्युपालम्भाभिप्रायः। गुणमय्या इत्यत्र प्राचुर्येऽभेदे च प्रत्ययमाश्रित्य तदुभयोरभेदारोपः। रसविच्छेदजनकतया तत्त्वाभिज्ञायास्तव क्रोधोऽप्यननुरूपः। अथच गुणाभिन्नस्य क्रोधो न युक्तः क्रोधस्यापि गुणविशेषत्वात् "गुणे च गुणानङ्गीकार" इत्यभियुक्तसिद्धान्तादिति नायिकोक्त्यर्थः ६३२

कुत्रचिदपराधिन्यपि नायके दृढानुरक्ता सखीमाह—

**भजतां न प्रत्यक्षं तरलत्वमुपैतु वहतु वा कृशताम्॥**
**तेन विना मनसेव क्षणमपि जीवामि नैवाहम्॥६३३॥**

अन्यत्रासक्तत्वादयोग्यत्वाच्च प्रत्यक्षाभावः। तरलत्वं = नायकस्योक्तप्रायम्, मनसः कर्मेन्द्रत्वम्। कृशता = अन्यसम्भोगासक्तिजन्या परमाणुत्वानिबन्धना च। तत्रैवानुरागात्तत्रातिरे-

केण जीवनाभावः । पक्षे आत्ममनःसंयोगविशेषस्यैव जीवनत्वान्मनो विना च तदसम्भवादिति भावः ॥ ६३३ ॥

कश्चिन्मनस्वीदमाह—

**भावविरोधी स्फुटतां विरुद्धमेवाश्रयन्वहति ॥**
**नाध्यक्षं यदभावः प्रतियोगिनमन्तरा लभते ॥६३४॥**

भावस्य वृत्तेर्जातिविशेषस्य(?) विरोधी=अभाववान् । पक्षे भावपदार्थविरोधी तदतिरिक्तत्वात् । अभावस्य स्वविरोधिनं प्रतियोगिनं विना प्रत्यक्षं न । प्रतियोग्यमिश्रिताभावप्रत्यक्षानभ्युपगमात् । इदं च सर्वमतसाधारणम् । एवमभिमानहीनोऽपि स्ववैरिणमप्याश्रित्य कार्यं साधयतीति भावः ॥ ६३४ ॥

विरहिणीदमाह—

**भारतमिवेह पर्वणि वहति विशेषं विधोर्बिम्बम् ॥**
**शल्यगदामुशलादिस्त्रीसंसद्गहनसोद्योगम् ॥६३५॥**

पर्वणि=पूर्णिमायां तदेकदेशग्रन्थे च । विशेषं=पूर्णत्वमवान्तरकथावैलक्षण्यं च । शक्तिगदामुशलादिप्रहारजस्त्रीसमूहवृत्तिदुःखप्रदाने धृतोद्यमम् । तत्करस्पर्शेन विरहिणीनां तत्सजातीयवेदनाभ्युदयात् । तदपि शल्यादिसंज्ञकपर्ववत् । संसदिति सभा । गहनम्=अरण्यम् । अन्यानि पद् स्वसंज्ञयैव प्रसिद्धानि ॥ ६३५ ॥

काञ्चिद्गुणानभिज्ञया प्रवाहपातादाहतं कोऽप्याह—

**भिल्लीजनेन मौक्तिक ! कदापि हृदये निधीयसे सत्यम् ।**
**गुञ्जाफलेन साकं किंतु विकल्पान्वयेनैव ॥६३६॥**

यद्यपि हृदयनिधानेन पुरस्कार आपाततः प्रतिभाति । तथापि गुञ्जाफलस्य तत्र च विकल्पने धारणात् तस्य च "तु-

त्यार्थास्तु विकल्पेरन्" ( पू० मी० अ० १२ पा० ३ अ० ४ सू० १० ) इति न्यायेन गुञ्जाफलसाम्यज्ञानपर्यवसायित्वात् । परमार्थतो न तथेति भावः ॥ ६३६ ॥

नायकं सम्भुज्यागतां सखीं नायिकेदमाह—

**(१)भिन्नविषये सखि! भवत्युपजीव्यं स्वोपजीवकाद्धीनम्**
**न समानेऽपीत्यत्राध्यक्षानुमिती उदाहरणम् ॥६३७॥**

अन्यवस्थोपजीवकानुरागे तत्सिद्ध्यर्थमुपजीव्येन प्रयत्नकरणादनुसारः । न तूपजीव्यरागविषयानुरागवत्त्वे । "एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ।" इति कामन्दकोक्त्या तस्य विरोधहेतुत्वात् । यथा व्याप्तिप्रत्यक्षस्य सर्वानुमितिहेतुतया तदुपजीव्यत्वमनुमानस्य च तदुपजीवकत्वम् । प्रत्यक्षापेक्षया भिन्नविषयेऽनुमितिरेवोत्पद्यते तत्र प्रत्यक्षसामग्र्या हीनत्वात् । समानविषये तु प्रत्यक्षसामग्र्येव बलवतीति नैयायिकसिद्धान्तवदित्यर्थः ॥ ६३७ ॥

काचित्प्रोषितं नायकमाह—

**भित्तितलाभरणं त्वां निरूपयन्ती समुत्सुका सुभग! ॥**
**द्विगुणीकृतनिःश्वासोत्कम्पस्तनकोरकमरोदीत् ॥६३८॥**

उत्कण्ठाविनोदाय भित्तिचित्रलिखितं त्वां पश्यन्ती उत्थितप्रायत्वदभिमुखवर्तितया "भित्तिगप्रियकरस्थसुन्दरीपादयोर्द्वितलसंज्ञकं मतम्" ( रति० र० सुरताधिकारे प० १० श्लो० ३५ ) इति पूर्वकालीनसुरतविशेषावस्थास्मरणेन द्विगुणश्वासकम्पितकुचकुड्मलं यथा स्यादेवं रुदितवती । चित्रावलोकनापेक्षयापि विप्रलम्भोद्दीपनादिति भावः ॥ ६३८ ॥

---

(१) का० रा० पु० पुस्तके इयमार्या नास्ति ।

काचिदभिसारिकामाह—

भीलेशोऽपि कुतश्चित्प्रियाभिसारे यदि क्रियते ॥
तद्व्युत्पत्तिविरुद्धं भवेदभीकत्वमिन्दुमुखि ! ॥६३९॥

"कम्रः कामयिताभीक" इत्यमरः। अभिसारस्य जनान्तरभयानुरोधात्यागे कामुकत्वव्याघातापत्तिः। "कार्याकार्यविचारणा यदि भवेत्स्नेहाय दत्तं जलम्" इति न्यायात्। अथच न विद्यते भीर्यस्याऽभीकः। तत्रान्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्तिसिद्धत्वाद्भयत्वावच्छिन्नाभाववत्त्व एव तत्सङ्गच्छते न तु किञ्चिद्भयसत्त्वे। एकघटवत्यपि घटो नास्तीति प्रतीतिविरहादिति भावः ॥ ६३९ ॥

काश्चित्प्रियामाह—

भुवमेव त्रिदिवयसि त्वमधरसुधया वरारोहे ! ॥
सहजन्यया सुषमया रतिलालसया च हृद्यया ॥६४०॥

सह=शरीरसमकालमेव। जन्यया=उत्पन्नया (सुषमया=) भूषणादिपारतन्त्र्यविरहितया विलक्षणशोभया रतौ लालसा उत्कटेच्छा यस्याः। पक्षे सहजन्या रतिलालसा चाप्सरोविशेषौ। "मेनका सहजन्या च" इत्युपक्रम्य—"वारुणी रतिलालसा" इति राज्याभिषेकमन्त्रेषु विष्णुधर्मोत्तरात् ॥ ६४० ॥

कश्चिन्मुग्धामाह—

(१)भुवनेषु गुणविशेषैर्विदितापि स्वेतरानतिशयानैः॥
संयोगादौ द्वित्वं नयसि नकारं किमम्बुजाक्षि ! त्वम्॥६४१॥

मन्दत्ववारणाय पूर्वार्द्धम्। संयोगादौ=समाश्लेषारम्भे नकारं किमिति द्विरुच्चारयसि। निषेध्यत्वातिशयसूचनार्थम्। अथच संयोगः=स्वराव्यवहिता हल इति प्रागुक्तम्, तदादौ व-

(१) इयमार्या का० रा० पु० पुस्तके नास्ति।

र्तमानस्य नकारस्य "न न्द्राः संयोगादयः" ( ६ । १ । ३ ) इति वचनेन द्विःत्वनिषेधादिति भावः ॥ ६४१ ॥

सखी नायिकामाह—

भूषयति यौवनश्रीः प्रसाधिकेवाङ्गवीरुधामियं ते ॥
अञ्जितनयना रञ्जितबिम्बोष्ठी कृतपयोधरोल्लेखा॥६४२॥

अञ्जनयावकसंयोगजन्यविजातीयशोभा नयनेऽधरे च । स्वत एवोत्पत्तेः । उल्लेखः=चन्दनादिसंस्कार उन्नमनं च । तथाचाभिसारविलम्बमात्रफलकेनाङ्गसंस्कारादिनेति भावः ॥ ६४२ ॥

सखी कामप्याह—

(१)भूमितलं चरणेन स्पृशन्ति नैतर्हि निर्जराः सुभगे ! ॥
जगदुपरिवर्तिनीं त्वामासाद्य स्वरविशेषवर्तीम् ॥६४३॥

भूतलं न स्पृशतीत्यभिमानातिशये लोकप्रवादः । देवतापक्षे यथाश्रुतमेव । निर्जरा = युवानो देवाश्च । "निर्ज्जरस्तु जरासक्ते वाच्यवान्निर्जरःसु च" इति विश्वः । उपरिवर्तित्वं सर्वाधिकगुणशालित्वात् । स्वर्गस्य तु मुख्यार्थकत्वेनोर्ध्वदेशस्थितत्वात् । स्वरस्य विशेषो = वैलक्षण्यम् । रम्यवचनमिति यावत् । अथच स्वरित्यव्ययं स्वर्गार्थकम् । तस्याऽविशेषोऽभेदः तद्वर्तीं तत्स्वरूपामिति यावत् ॥ ६४३ ॥

सखी नायिकामाह—

भेदं विधातुमधुना युवयोर्जागर्ति यन्मदनः ॥
एतेनैवाभेदः सिद्ध्यति नितरामसांशयिकः ॥६४४॥

परस्परविप्रलम्भपीडया भेदं=विदारणमन्योन्याभावं च । प्रथमत एव भेदसत्त्वे तदर्थं प्रवृत्तिर्न स्यात् । सिद्धे वस्तुनि साध्यत्वाख्यविषयतासम्बन्धेन तदनुपपत्तेः । अतश्चाभेद एव

(१) का० रा० पु० पुस्तके नास्ति ।

तिष्ठतीति निर्णेष्यत इति भावः । असांशयिकः=संशयविषय-त्वानापन्नो निर्णीत इति यावत् ॥ ६४४ ॥

कश्चिदिदमाह—

**भोगोऽपवर्गजन्यादानन्दादपि घृनातिशयः ॥**
**अनुभूतेश्वरगात्रस्पर्शा अपि भोगितां दधत्युरगाः६४५॥**

भोगः=स्त्रीप्रभृतिविषयानुभवजन्यसुखविशेषः । अन्यथा जीवस्येश्वरतादात्म्यापत्तेः पारमार्थिक्या वेदान्तिमते आहार्यज्ञानविषयीभूतायाश्च नैयायिकमते मुक्तिरूपत्वात्तां प्राप्य भोगं त्यजेयुरतस्तत्पदत्यागेनोक्तार्थनिश्चय इति भावः। भोगिपदवाच्यत्वात्तेषामिदमुक्तम् ॥ ६४५ ॥

इति भकारव्रज्या ।

सखी नायिकामाह—

**मन्मथधनुर्लताया इव गुणसम्पन्न दुर्लभा यस्याः ॥**
**तस्यामेवाजिह्मगभावं सखि! सुमनसो दधति ॥६४६॥**

यस्याः समधिका गुणसम्पत्तिस्तत्रैव सुमनसः=सहृदयाः। अजिह्मगः=सरलः शुद्धो भावः स्नेहो येषां तद्भावं दधते। निर्व्याजमनुरज्यन्ते।कामचापयष्टेरपि कुसुमरूपतया। तत्र भ्रमराणां गुणत्वं स्वयमेव मिलनात् भ्रमररूपमेव दौर्लभ्याभावात्। तत्र सुमनसः=पुष्पाणि । अजिह्मगा=बाणास्तद्भावं वहन्तीति भावः ॥ ६४६ ॥

कश्चिद्विश्रब्धनवोढावृत्तमाह—

**मयि कृतमिथोऽङ्कपालौ जृम्भाव्याजादुरोजभुजबन्धौ॥**
**(१)निबिडं निपीडितौ तव सुदृशा मत्स्वाभिमुख्येन६४७॥**

अङ्कपालिः=आलिङ्गनम् । प्रियेण नायिकाभुजाभ्यां स्व-

(१) का० रा०पु० पुस्तके निबिडमित्यस्य स्थाने नितरामिति पाठः।

परिरम्भानुष्ठापने निपीडनाधीनगाढत्वस्य नायिकाव्यापारव्यतिरेकेणानुत्पत्तेर्लज्जावशात्तदभावेऽपि जृम्भाधीनगात्रभङ्गात्स्तनबन्धो मदाभिमुख्येन भुजबन्धश्च स्वाभिमुख्येन । पीडित इति दृढालिङ्गनं निर्मितमिति भावः ॥ ६४७ ॥

काश्चिच्चौर्यरतेः सीत्काराद्यभावाद्वैगुण्यमाशङ्क्य निषेधति—

(१)मणितानि काञ्चिकूजितकङ्कणझङ्कारनूपुरनिनादाः ॥
मुख्याङ्गाश्रययोगादाश्रयसत्त्वेऽप्यनियतानि ॥६४८॥

मुख्या रतिः तदङ्गं सम्भोगः तदुपाश्रयसम्बन्धिनस्तावत्सीत्कारादयः । तथाच सम्भोगरूपाश्रयसत्त्वेऽपि तेषां नावश्यकत्वम् । यथा "चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य" इत्यत्र यागाङ्गप्रणयनाश्रयेण विहितस्य गोदोहनस्य पशुकामनाविरहे प्रणयनरूपाश्रयसत्त्वेऽपि नोपादानं तथा सम्भोगसत्त्वेऽपि सीत्कारादीनां प्रकाशप्रसञ्जकानामिति भावः ॥ ६४८ ॥

काश्चिन्महत्प्रशंसामाह—

महनीयमाहिमनि जने वसति गुणः स्मरणकृन्नियतम् ॥
आत्मनि विहितनिवासः संस्कारस्तत्र दृष्टान्तः॥६४९॥

महनीयः=श्लाघ्यः सर्वोत्कृष्टश्च । महिमा=चरितं महत्परिमाणं च । तथाच सज्जनेऽवश्यं स्वनिष्ठरामणीयकेन स्मरणयोग्यो गुणो विद्याद्यतिशयास्तिष्ठति यथा परममहत्परिमाणवति जीवे संस्काराख्यो गुणः । सोऽपि स्मरणहेतुरिति शास्त्र-

(१) का० रा० पु० पुस्तके नास्ति । एतत्स्थाने—
मदनस्याश्रयभूता त्वमसीति सुगात्रि ! सर्वजनसिद्धम् ।
कस्मान्मयि कल्पयसि व्यापारं विप्रियानुगुणम् ॥
मकरध्वजो मनसि ते परमाणौ निविशते सदवकाशम् ।
अयमञ्जलौ यदि ममौ किं चित्रं कुम्भजस्य मुनेः ॥
इत्यार्याद्वयं वर्तते ।

कृतः ॥ ६४९ ॥

कश्चिद्वसन्तागममाह—

१मलयजपरिमलशालिनि मरुति विरहिणीमुखानिलैर्भिन्ने
प्राञ्जलितानामलिनां रुचिरुपचयमापदपचयं च॥६५०॥

पूर्वं केचिद्भ्रमरा मलयानिले केचिच्च निःश्वासे सम्मग्नाः। उभाभ्यां मिलित्वा पवनान्तरारम्भे च मलयानिलभ्रमराणां रुचिस्तत्रोत्कर्षं प्राप। श्वासानिलयोगेन तस्य चन्दनसौरभापेक्षयाधिकसौरभवत्त्वात्। श्वासानिलभ्रमराणां तु रुचिरपकर्षं भेजे। चन्दनसौरभसंवलनेन श्वासानिलापेक्षया हीनसौरभवत्त्वादिति भावः ॥ ६५० ॥

सखी नायकमुपेक्ष्य प्रचलितां मानिनीमाह—

मनसि त्वां प्रति चलितेऽप्युदश्वसीदेष चलितुमिच्छन्त्याम्
त्वयि तु सह तेन जीवितुमतस्त्वमेवासि तत्प्राणः॥६५१॥

त्वन्मात्रासक्ततया मनसि त्वामागते सत्यपि समजीवत्। त्वयि जिगमिषन्त्यां तु जीवितुं न शक्नोति। अतस्त्वमेवास्य प्राणभूता। त्वद्गमनोद्यम एव जीवनाशक्तेः। तथाच "यस्मिन्व उत्क्रान्त इदं शरीरं पापीयो मन्यते स वो वरिष्ठ" इति ब्रह्मनिर्देशात् परस्परं स्पर्द्धमानैश्चक्षुर्मनःप्रभृतिभिः प्रत्येकमुत्क्रमणे कृते शरीरमरणाभावात्। प्राणेनोत्क्रमणे कृते तु मनःप्रभृतिभिरुक्तम्—"मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुम्" इति श्रुतौ स्पष्टम् ॥ ६५१ ॥

काचिदिदमाह—

मन्ये दयितस्पर्शातिशयो न हि सत्यभामया विदितः॥
यत्पारिजातकुसुमस्पर्शनविरहेण रोषमधात् ॥६५२॥

---

(१) इयमार्या का० रा० पु० पुस्तके नास्ति।

स्पर्शः=स्पार्शनसाक्षात्कारः । स्पर्शनपदं दानोक्तसाक्षात्कारोभयपरम् । तथाच प्रियस्पर्शनमपेक्ष्य पारिजातकुसुमस्पर्शनस्य सुखविशेषानाधायकतया तदभावेन दुःखमनुपपन्नम् । तया तु सत्यपि प्रियस्पर्शे तदभावेन दुःखं प्राप्तमिति उक्तार्थलाभः । नारदानीतपारिजातकुसुमं भगवता रुक्मिण्यै दत्तमिति तस्याः कोपबीजं प्रसिद्धम् । सत्यो यथार्थो भामः क्रोधो यस्या इति तन्मात्राभिज्ञत्वसूचनम् ॥ ६५२ ॥

काञ्चित्प्रियामाह—

**मणिकर्णिका श्रवणयोर्मध्ये काञ्चीयमुल्लसति ॥**
**युक्ता प्रीतिरमेया भवतीमवगाहमानस्य ॥६५३॥**

रत्नमयी कार्णिका=श्रवणाभरणम् । "कार्णिका कर्णवलये तथा स्यात्पत्रकार्णिका" इति भूषणप्रकरणे भरतः । "एकयष्टिर्भवेत्काञ्ची" इति तदुक्तेः काञ्ची मेखलाविशेषः । पक्षे मणिकार्णिकाकाञ्च्यौ तीर्थविशेषौ । तयोर्मोक्षदत्वस्मरणात् । तथाच प्रत्येकतज्जन्यमोक्षानन्दापेक्षया तदुभययुक्ततदाश्लेषसुखाधिक्यमर्थसिद्धम् । काशीखण्डे शक्तिं प्रति शिवः—

"त्वदीयस्यास्य तपसो महोपचयदर्शनात् ।
यन्मयान्दोलितो मौलिरहिश्रवणभूषणः ।
तदान्दोलनतः कर्णात्पपात मणिकर्णिका ।
मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका ॥" इति ६५३

काञ्चिज्जृम्भमाणयौवनां प्रियां पश्यन्नाह—

**(१)मध्यमसदसद्भावे विनिगमकं नाहि विवादविषयेऽस्याः ॥**
**योग्यावयवयपरोक्षं स्तनवृत्तिरथवा निराधारम् ॥६५४॥**

---

(१) इयमार्या का० रा० पु० पुस्तके नास्ति ।

स्तनवृत्त्यन्यथानुपपत्त्या मध्यरूपावयवकल्पने योग्यद्रव्या-वयवस्यायोग्यत्वानुपपत्त्या अन्यत्राक्लृप्तस्यैव तस्य कल्पना-पत्तिः। मध्यस्य प्रत्यक्षाभावेन योग्यत्वानुपपत्तेः। यदि स्त्वे-तन्नियमानुरोधेन मध्यस्यासत्त्वमेव कल्प्यते तदापि गुरुद्रव्यस्य द्रव्यान्तरसंयोगाभावे पतनस्यावश्यकत्वादाधाराभावे पतनाभा-वोऽन्यत्रादृष्ट एव कल्पनीय इति उभयत्राप्यदृष्टकल्पनापत्तिसा-म्येनान्यतरत्र विनिगमकं नोपलभ्यत एवेत्यर्थः। द्व्यणुकावयव-स्यायोग्यत्वादवयविनि योग्यत्वानिवेशः। साक्षादवयवत्वस्य वि-वक्षितत्वान्न परमाण्वादौ व्यभिचारः। द्रव्यपदं योग्यावयवार-ब्धत्वलाभार्थम्। तेन त्रसरेण्ववयवे न व्यभिचारः॥ ६५४॥

काचिद्गोत्रस्खलने सति नायकमाह—

(१)मामकमपास्य नाम व्यपदिशसि तदाख्यया त्वं माम्॥
अनुरागविषयतां पुनरस्मदपाकृष्य तत्र रोपयसि॥६५५॥

केवलं मदीयं नाम विहाय सपत्नीनाम्ना व्यवहरसि। अनुरागविषयत्वं मयि पूर्वं विद्यमानमपि मन्निष्ठात्यन्ताभावप्र-तियोगिकत्वात्तत्र निदधासि। रोपयसीति तस्य स्थैर्यसूचनम्। एवं तन्नाम्ना ममेव मन्नाम्ना तस्या व्यवहृतेऽपि तस्य रागसाम्ये पर्यवसानं स्यात्। तदभावेऽपि ममानुरागविषयत्वाभावस्य तस्या अनुरागविषयत्वस्य च सिद्धेः किमेवंविधप्रतारणयेति तात्पर्यम्॥ ६५६॥

---

(१)का० रा० पुस्तके नास्ति। एतत्स्थाने—

मानस्या सामग्र्या भाव्यं प्रियदर्शने सुदुर्बलया।
इच्छामात्रेण कृतो बलवद्भावो ध्रुवं तस्याः॥
मासोऽयमाधिक एव प्रतिभाति विना तमञ्जसुहृदं मे।
एकत्रैव रवाविह पुनारेन्दुर्विशति तापयितुम्॥
इत्यार्याद्वयं वर्तते।

सखी मानोद्यतां कामव्याह—

मा कुरु मानातिशयं मनसि त्वं न्यायविज्ञापि ॥
किं विस्मरासि तथासति सुषुप्तिविरहप्रसङ्गमपि॥६५६॥

अत्यन्तमानेन प्रियानादरे तद्वियोगेन निद्राछेदात्सुषुप्तिर्न भविष्यतीति कुतो विस्मरसि । शतशस्त्वया पूर्वमेतदर्थानुभवात् । अथच मनसि विभुत्वाभ्युपगम आत्मतत्संयोगस्य च नित्यत्वाङ्गीकारे सर्वदा ज्ञानसामग्रीसत्त्वात्कदापि सुषुप्तिर्न स्यात् । तत्र योग्यात्मविशेषगुणोत्पत्तेः प्रत्यक्षबाधितत्वादिति नैयायिका वदन्तीत्यर्थः ॥ ६५६ ॥

विरहिण्याः सखी नायकमाह—

मालेव सा मृदुतनुस्तव विरहं सुमनसो लब्ध्वा ॥
अपचीयते यदधिकं सुन्दर! किन्नाम तत्कुतुकम्॥६५७॥

मृदुत्वेन विरहाद्यसहनासामर्थ्यसूचनम् । सुमनस्त्वेन तद्विरहस्य दुःखावहत्वद्योतनम् । मालापि पुष्पसमुदायरूपतया सुमनसस्तदन्तर्गतकिंचित्पुष्पस्य ततो विभागे न्यूनपरिमाणा भवत्येवेति भावः ॥ ६५७ ॥

काश्चिदधरमाधुर्यं वर्णयति—

(१)माधुर्यमधरमधुरिमजातीयं क्वापि नेति वेदयितुम् ॥
कमलेषु कोषपानं बहुधा विदधाति मधुपोऽयम् ॥६५८॥

अधरवृत्तिमाधुर्यसजातीयमाधुर्यमन्यत्र क्वापि नास्तीति बोधयितुं कोषपानं करोतीत्यर्थः । कोषपानस्य दिव्येषु परिगणितत्वात् । साजात्यमधरमाधुर्यमात्रवृत्तिधर्मेण बोध्यम् । अतो व्यापकीभूतमधुरत्वस्यान्यदीयमधुररसादौ सत्त्वेऽपि न क्षतिः ॥ ६५८ ॥

(१) का० रा० पु० पुस्तके नास्ति ।

काचित्प्रियविरहसम्भावनादूनहृदया प्रातर्वर्णयति—

मिहिरमरीचिश्रेणीगवाक्षसुषिरान्तरालमार्गेण ॥
वह्निकलिता स्मरस्य प्रविशति नालीकराजिरिव ॥६५९॥

प्रकरणेन प्रातस्तनत्वलाभात्करमालाया रक्तत्वलाभः। वातायनविवरान्तरालमार्गेण कामुकसन्निधाभिमुखी प्रातररुणरश्मिराजी नलिकामार्गेरिता वह्नितप्ता कामनालीकबाणधारेव दृश्यत इत्युत्प्रेक्षा। तापकत्वं व्यङ्ग्यम् ॥ ६५९ ॥

काचित् दुर्जनभिया यथेष्टप्रियसमागमरहितेदमाह—

मिलता खलेन नयने मण्डूकवसाञ्जनेनेव ॥
सेव्यस्त्वक्सारजनोऽप्यहितावहवत्परिह्रियते ॥६६०॥

खलदर्शनभयेन सुकुमारस्पर्शतया त्वगिन्द्रियसारः=सुखजनकविषयरूपोऽपि प्रियजनोऽनिष्टजनकजनान्तरवत् परिह्रियते=परित्यज्यते। मण्डूकवसाञ्जनेनापि नयनयोर्दत्तेन त्वक्सारो=वंशः। अहितां=सर्पत्वं वहतीत्यहितावहः सर्पस्तद्भ्रमेण सज्यते। तद्बलाद्वंश उरगभ्रमोदयादित्यर्थः ॥ ६६० ॥

काश्चित्प्रियामाह—

(१)मीमांसन्तां बहुधा कल्पनकुशलाः कलङ्कममृतांशोः॥
त्वन्मुखनिरूप्यभङ्गादकीर्तिलेखेति परमार्थः॥ ६६१ ॥

बहुधा=भूच्छाया मृग इत्यादिप्रकारेण कल्पने=अपूर्वार्थोत्प्रेक्षायां कुशलाः=प्रवीणाः मीमांसन्तां=विचारयन्तु। त्वद्वदननिरूपितात् भङ्गात्=पराजयादयशोलेखैव कलङ्कतया भासत इति

(१)इयमार्या का०रा० पु० पुस्तके नास्ति। एतत्स्थाने—
मीमांसकेतरत्वं सम्प्रतिपन्नं त्वयैव नः सुभग !।
तत्तव गन्धवहस्य स्पार्शनमनुमन्महे नैव ॥
इत्यार्या वर्तते।

म्भसन्तापनिवृत्तिर्दूरापास्तेति भावः ॥ ६६४ ॥

सखी नायिकामाह—

**मुदिरमये सुमहीयसि पङ्के संवृण्वति स्वपथम् ॥**
**नूनं ग्रहसमुदायैरिह सञ्चारः परित्यक्तः ॥६६५॥**

"घनजीमूतमुदिर" इत्यमरः । उल्लङ्घनवारणाय सुमहीयसीति । स्वपथम्=आकाशम् । ग्रहपदमर्कादिदिव्यज्योतिर्मात्रपरम् । तथाच दिनेऽप्यन्धकारसम्पत्त्या निरर्गलमभिसरणं भावीति भावः । यद्वा स्वयं दूती गृहागतं पान्थमिदमाह । पङ्कस्पर्शभयेन गृहे कस्यचिदागमनासम्भवान्निःशङ्कमावयोः सङ्ग उज्जृम्भतामिति भावः । यद्वा परमार्थज्ञ आह । मोदयतीति मुदिरम् । "इषिमदिमुदि"–( उ० १ । ५ । ४ । ) इति किरच् । तत्प्रचुरे=पुण्यप्राये तस्य सुखासाधारणकारणत्वात् पङ्के=पापे च । सुमहीयसीति भोगमात्रनाश्ये । उभयत्र स्वस्यात्मनः पथं सच्चिदानन्दादिस्वरूपमावृण्वति सति ग्रहो=ज्ञानं तत्समूहवद्भिरतिविवेचकैः । इह=उभयविधेऽपि कर्माणि सञ्चारः=प्रयत्नो परित्यक्तः । "न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः" इति श्रवणात् ॥ ६६५ ॥

कस्याश्चिदर्थे सखी नायकमाह—

**मूर्तिमतीव वसन्ते स्मरसुहृदि त्वयि दृशोर्विषये ॥**
**अतिसौरभवल्लिरियं सञ्जातप्रमदमञ्जरिर्लसति ॥६६६॥**

सुहृत्त्वं सादृश्यात् । पक्षे तदुपकारकत्वात् । ( दृशोर्विषये ) दृग्जन्यज्ञानविषये इत्यर्थः । अत्यन्तं सौरभस्य=रामणीयकस्य वल्लिराश्रयभूता ( इयं= ) नायिका सञ्जाता प्रमदस्य=आनन्दस्य मञ्जरिः सजातीयान्तरोत्पत्तिनियताद्यस्वध्वंसक्षण-

धारारूपा परम्परा यस्याः । वसन्तागमेऽपि रसाललता सम्भूताः प्रकृष्टमदजनिका मञ्जर्यो यस्यास्तथा भवतीति भावः ॥६६६॥

काश्चिदिदमाह—

**मृत्पिण्डमण्डितमुखं हालिकभवने निभालयन्फालम् ॥**
**स्थित एव तद्दयितया स्मितगर्भं भर्त्सितः पथिकः ॥६६७॥**

फालस्य मृत्तिकासंयुक्ताग्रतया कठिनभूमिकर्षणं, तेन हालिकस्य श्रमातिशयः, तेन रात्रौ तस्य निद्रापारवश्यं भविष्यदनुमीयते । निष्प्रत्यूहं पाथिकेन सम्भोगमाकलय्य सस्मितया हालिकवध्वा स्थलाभावाद्युद्भावनेन सञ्चरणार्थं भर्त्सितोऽपि तदभिप्रायमवगाह्य तत्रैव स्थित इत्यर्थः ॥ ६६७ ॥

सखी नायकमाह—

**मृदिताप्युपभोगरसाद्वालेयं कुसुममालेव ॥**
**सावीरसेनजनुषा त्वया गुणोत्कर्षमाप्नोति ॥ ६६८ ॥**

उपभोगः=सम्भोगः परिधानं च । जनुषा=जन्मनैव । ( आवीरसेन= ) आविर्भूतो रसो यस्य तेन । यद्वा ( वीरसेन= ) विशिष्ट इरसः कामरसो यस्य तेन । अस्य=विष्णोरपत्यमिति इशब्दस्य कामार्थत्वात् । पक्षे वीरसेनतनयेन=नलेन गुणानां शोभादीनां सौरभादीनां च । तथाच भारते नलपरीक्षायां दमयन्तीं प्रति केशिनीवाक्यम्—

"अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् ।
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ॥
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि तान्यथ ।
भूय एव सुगन्धीनि हृषितानि भवन्ति च ॥ इति"(१) ॥६६८॥

(१) हृषितानि = विकासितानि ।

कश्चित्प्रियासौकुमार्यमनुभूयाह—

**मृदुभिश्चन्द्रकलाभिर्विधिना निरमायि नूनमियम् ॥**
**एतत्सन्निधे यस्मात्सङ्कोचं दधति पद्मानि ॥ ६६९ ॥**

सङ्कोचं=मृदुत्वाभावप्रकारकज्ञानविशेषत्वं मुकुलीभावं च। सन्निधे=एतत्स्पर्शसाक्षात्कारोचरकाले किरणसंयोगे च। पद्मसङ्कोचे कालविशेषादीनामपि हेतुतया तावन्मात्रेण चन्द्रकलोपादेयत्वं नायातीति मृदुभिरित्युक्तम् । तच्चानुमानावसरे हेतुविशेषणतया पर्यवस्यति। ततश्चेयं चन्द्रकलोपादेया मृदुत्वे सति पद्मसङ्कोचहेतुत्वात् चन्द्रवत्। हेतुत्वं निमित्तम्। नातोऽन्यपक्षेषु व्यभिचारः। "अनुमानं व्याप्यबलाद्व्यापकधीर्धर्मिनिष्ठा या" इत्यलङ्कारकौस्तुभे ॥ ६६९ ॥

बह्वीभिर्नायिकाभिरिष्यमाणस्य कस्यचिदर्थे दूती काञ्चिन्नायिकामाह—

**(१)मेनकयाकारि मनस्तपस्विनः कौशिकस्य निजवश्यम्॥**
**दिव्यस्त्रीवृत्तिरतेर्विषयस्यापि त्वया तस्य ॥ ६७० ॥**

तपस्वी=तापसो दीनश्च। कौशिको=विश्वामित्र उलूकश्च। दिव्या=रम्याः स्वर्गसम्बन्धिन्यश्च। तथाच कस्यचित्कुत्राप्यनुरागसद्भावेऽपि नोत्कर्षसिद्धिः। दिव्यस्त्रीनिष्ठरतिविषयस्य तस्यापि त्वद्विषयकरतिमत्त्वे तु दिव्यस्त्रीभ्योऽपि तवोत्कर्षसिद्धौ सुतरां मेनकापेक्षयापि तत्सिद्धिरित्यर्थः ॥ ६७० ॥

कश्चिद्वर्षावर्णनमाह—

**मेचकयताऽम्बरमिदं जलदेन हलायुधत्वमुदवाहि ॥**
**तस्योद्रेकेण पुनर्यमुना प्रतिकूलगामिनी जाता ॥६७१॥**

(१)का० रा० पु० पुस्तके नास्ति। एतत्स्थाने—
विततोज्ज्वलप्रकाशाः साधारणसाधनीयरसवाञ्छाः।
शुचयस्तपोदयाढ्या दोषाणां मोषमादधते ॥ इत्यार्या वर्तते।

अम्बरम्=आकाशं परिधानं च । उद्रेकेण=वृष्ट्यादिरूपातिशयेन प्रभावेण च । प्रतिकूलं=तीराभिमुखम् । ( विपरीतं च ) बलभद्रेणापि यमुना विपरीतगामिनी कृतेति पुराणम् ॥६७१॥

कश्चित्कादम्बिनीं जगदम्बिकात्वेन रूपयति—

**मेदुरयति प्रमोदं मुदिराली नीलकण्ठदयितेयम् ॥**
**अचलेन्द्रलब्धजनना श्यामा स्कन्दप्रसूतिकरी ॥६७२॥**

मुदिराणां=मेघानां पङ्क्तिः । (नीलकण्ठदयिता=)मयूरप्रिया तदुल्लासकत्वात् । पर्वतस्य सानुषु प्रथममुत्पन्ना । श्यामानां वियुक्तस्त्रीणामास्कन्दः=पराभवस्तद्धेतुः । मेदुरयति=वर्द्धयति । पक्षे मुत्=प्रीतिस्तज्जनिका इरा वचनानि तासामाली सखी । यद्वा आलिः=पङ्क्तिर्यस्या इति पञ्चमीबहुव्रीहिः । सहृदयाल्हादककाव्यशास्त्रज्ञानहेतुर्भक्तानाम्

"तस्य पाण्डित्यकलनाद्विचित्रपदकल्पनात् ।
देवा अपि विलज्जन्ते किं पुनर्मानवादयः"

इत्यादिवचनात् । शिवस्य प्रिया हिमालयदुहिता श्यामवर्णा कालिकारूपा वा । स्कन्दस्य=गुहस्योत्पत्तिहेतुरित्यर्थः ॥६७२॥

दूती नायिकामाह—

**मैनाक इव तवायं लावण्यपयोनिधौ मग्नः ॥**
**बिभ्यदतिमात्रमन्तः कठिनात्कामाशुगात्कुलिशात् ६७३॥**

"लवणा त्विषि" इति विश्वः । सैव लावण्यम् । स्वार्थे तद्धितः । स्वार्थिका इति लिङ्गनिवृत्तिहृद्यङ्गमत्वमेतदिति केचित् । कामबाणस्य कुसुममयतया कथं कुलिशसाम्यमतः अन्तःकठिनादिति । परमार्थतोऽनुभवगम्यत्वात्कठिनस्य नासिद्धिः । पक्षे कामम्=अत्यन्तम् आशुगामिनो=वेगवत्तरात् । मैनाकोऽपि लवणत्ववति सिन्धौ मग्नः । "एते ते पर्वता विष्टाश्चत्वारो लवणोदधिम् ।" इति लिखितमत्स्यपुराणात् ॥६७३॥

कश्चिदनेकप्रियाविषयकस्मरणधारामुपपादयति—

**मोष इव तत्तदनुभवसमुदायेषु प्रकारधर्माणाम् ॥**
**दयिताविशेष्यकत्वं तेषामिति चोन्नये स्मृतेर्भूम्ना॥६७४॥**

मोष इवेति । यावद्वस्तुविषयकानुभवाः पूर्वमुत्पन्नास्ते सर्वे प्रियाविशेष्यका एवेत्युत्प्रेक्षा । ननु तथापि घटत्वादिप्रकारकदयिताविशेष्यकस्मरणमेव स्यान्न तु कामिनीत्वप्रकारकमतः पूर्वार्द्धम् । तेषु तेषु अनुभवसमूहेषु प्रकारीभूतानां विशेषणतया भासमानानां धर्माणां मोषः=तदुद्बोधकाभावात्स्मृतिविषयत्वाभावः । तथाच घटत्वादिस्मरणाभावात् नानाप्रकारकानुभवानामपि कामिनीत्वप्रकारककामिनीविशेष्यकस्मरणहेतुत्वमन्यथैवंविधस्मरणधारानुपपत्तेरित्यर्थः ॥ ६७४ ॥

कश्चित्प्रियो मानिनीमाह—

**मौनमवलम्ब्य मानिनि! पिकतरुणीनां गिरोऽनुभावयसि॥**
**अस्मान्स्ववागतिशयप्रतियोगिनिरूपणायेव ॥६७५॥**

"अथ मौनमभाषणम्" इत्यमरः । त्वदालापावसरे व्रीडावशेन कोकिलकामिनीकूजितप्रकाशाविरहात् निष्प्रतियोगिकस्य चोत्कर्षस्य साक्षात्काराविषयत्वानुपपत्तेर्यत्प्रतियोगिकस्त्वद्वाचामुत्कर्षस्तन्निरूपणायैव मौनमाश्रित्य कोकिलालापानस्मत्प्रत्यक्षाविषयान् करोषि । एतदाकर्णनानन्तरमेतत्प्रातियोगिकोत्कर्षाश्रयतया मद्वाचं विजानन्त्वित्याशयेनेत्यर्थः ॥ ६७५ ॥

सखी नायिकामाह—

**मौलिषु विपक्षसुदृशां चरणं तरुणि! त्वया निहितम्॥(१)**
**अभ्युन्नता अपि यतो हेत्वन्तरमन्तरैव तेऽवनताः ॥६७६॥**

**इति मकारव्रज्या ।**

तरुणीति तदपकर्षासाधारणतद्वृत्तिनायकसमवेतप्रेमविष-

---

(१)का० रा० पु० पुस्तके 'त्वया निहितम्' इत्यत्र 'त्वया कृतं मन्ये' इति पाठः ।

यत्त्वाभावप्रयोजकनायकप्रेमविषयत्वसूचनम् । तासां प्रथममेव प्रेमाविषयत्ववारणाय—अभ्युन्नतेति । नायकान्तरानुरागादपि तत्सम्भवात्—हेत्वित्यादि । तथाच कारणान्तरबाधात्त्वदनुरागिणा नायकेन तदनादरादेव तथेत्यर्थः ॥६७६॥

सखी सन्नायकानुरागिणीमाह—

**यमुने ! त्वं श्यामा तेन बलेनाभिकृष्टासि ॥**
**मार्गोल्लङ्घनमपि ते जनयति शोभां विजातीयाम्॥६७७॥**

श्यामा=युवतिः । "अप्रसूताङ्गनायां च" इति तदर्थेषु विश्वः । पक्षे नीलरूपा । तेन=नायकेन । बलेन=स्वकीयसौन्दर्यादिगुणातिशयेन । अभिकृष्टा=स्वविषयकानुरागवती कृता । मार्गः=सदाचारः । विजातीयाम्=अन्यनराननुरूपत्वकृतापकर्षहीनाम् । पक्षे तेन=प्रसिद्धेन । बलेन=बलदेवेन । स्पष्टमपरम्॥६७७॥

कुत्रचिदनुरक्तां गुरुजनानुरोधिनीं काञ्चित्सखीदमाह—

**यदि सुतनु ! परिगृहीता त्वं रागेणानिरुद्धेन ॥**
**तदुषेव स्वगुरुजनादपहाय भियं प्रमोदस्व ॥६७८॥**

अनिरुद्धेन=स्वविषयसङ्गमव्यतिरेकासमाधेयेन । रागेण=स्नेहेन । परिगृहीता=व्याप्तासि । अनिष्टातिशयजनकीभूताभावप्रतियोगिस्वविषयप्राप्तिकेनेति फलितम् । तेनेच्छान्तरवैलक्षण्यम् । उषापि रागपूर्वकमनिरुद्धेन स्वप्नदृष्टेन तन्मात्रविषयकानुरागवती कृता । बाणादिपरोक्षमेव तेन सह ररामेत्यर्थः ॥ ६७८ ॥

कश्चिन्नवोढास्वभावमाह—

**यामिक इव मुग्धाया विजहाति करो न जातुचिन्नीवीम् ।**
**विश्लथयितुमपि वाञ्छति यत्नैरतितस्करे दयिते॥६७९॥**

यामः प्रहरोऽस्यास्तीति यामिको=रक्षक इति यावत् । पक्षे नीवी=मूलधनम् "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससः"

इति विश्वः । विश्लथयितुम्=उन्मोचयितुं चोरयितुं वा । रतितस्करे=स्वव्यापारोपमर्दितरतिकामुके । पक्षे अत्यन्ततस्करे=चौरे ॥ ६७९ ॥

निर्गुणाया मानबन्धो न तस्याः श्रेयस्कर इति कोऽप्याह—

**या किल कलामयी सा कुटिलास्तु न जातु कण्टकप्राया॥**
**शिरसि निहितेन्दुलेखा न काचिदीशेन केतकाशिखापि॥**

कलामयीत्यत्र चतुःषष्टिपरत्वे प्राचुर्ये, षोडशांशपरत्वे तादात्म्ये मयट् । कुटिला=मानवती वक्रा च । कण्टकप्राया=तथानुपादेयत्वात्तत्सदृशी । पक्षे बहुकण्टकवती । इन्दुलेखायाः कुटिलत्वेऽपि कलामयत्वादीश्वरेण शिरोनिधानं कृतम् । न तु तादृश्याः कण्टकबहुलायाः केतकशिखायाः । तत्र कलामयत्वतदभावौ चादरानादरप्रयोजकाविसर्थः ॥ ६८० ॥

काचिदास्वादितपुरुषायितकौतुका सखीमाह—

**युवतिसमूहे पुंवद्भावप्रतिषेधमालि ! मनुते यः ॥**
**तत्रैव भोगिनायकविरोध इत्युचितमेवेदम् ॥ ६८१ ॥**

कामशास्त्रे तरुणीनामेव पुरुषायिताधिकारोक्तेस्तत्र तदभावं यो मन्यते स=उपभोगरसिकनायकविरुद्धोऽनभिज्ञत्वात् । अथच युवतीनां समूहो यौवतमित्यत्र भिक्षादिपाठसामर्थ्यान्न पुंवद्भाव इति वृत्तिकारमतम् । तत्र भोगिनां सर्पाणां नायकस्य शेषस्य विरोधो महाभाष्ये भिक्षादिषु युवतिशब्दपाठानङ्गीकारादिति भावः ॥ ६८१ ॥

सखी नवोढामाह—

**(१)युगपदुपरुध्यमाना कुसुमायुधसाध्वसाभ्यां त्वम् ॥**
**सखि!कौशिकौशिकाभ्यां साक्षादिव देवसेनाभूः ६८२॥**

(१) का० रा० पु० पुस्तके नास्ति । एतत्स्थाने—

भयात्सम्भोगवैगुण्यं कामात्तदाभिमुख्यम् इत्युपरोधः। केशिनाम्ना दानवेन ह्रियमाणा देवसेनाख्या कन्या इन्द्रेण ततो मोचयित्वा स्कन्दाय दत्तेति पौराणिकाः। एवं च प्रतिबन्धकीभूतभयादुत्कृष्टेन कामेन तदभिभूय नायकभोगोपहिता त्वं निर्मितेति वस्तुध्वनिः॥ ६८२॥

विरहिणी सखीमाह—

**यूथीमुकुलानामियमावलिरतिवेलमुल्लसति॥**
**चन्द्रादर्शनखेदादिव पतिता तारकाराजिः॥ ६८३॥**

"यूथी पुष्पप्रभेदे स्यात्" इति विश्वः। स्वदयिते चन्द्रे मेघतिरोहिते सति तद्विरहदुःखेन मूर्छित्वा क्षितौ पतिता तारापङ्क्तिरिवेत्युत्प्रेक्षा। तथाच मादृशीनामपीयमवस्था कथं न स्यादिति भावः। यद्वा वर्षासु प्रवासोन्मुखं नायकमाह। तथाच त्वददर्शनेन ममापीयमवस्था भविष्यतीति गमननिषेधो व्यङ्ग्यः॥ ६८३॥

कश्चिद्गुणज्ञत्वभ्रमादनभिज्ञैर्मिलित आह—

**यूयं पातञ्जलमधिवित्थेत्याकर्ण्य तद्विद उपैम॥**
**विदितं न बका! भवतां मज्जनमितरं निहन्तुमिति६८४**

पतन्तोऽञ्जलयोऽत्र लोकवन्द्यत्वादिति पतञ्जलिः। तेन प्रोक्तं पातञ्जलं=योगशास्त्रं महाभाष्यं वा। "वर्त्मास्माभिरुदीरितं परमिदं पातञ्जलालम्बिभिः" इत्यादिप्रयोगात्। तद्विदः=पातञ्जलज्ञान्। जलमधि=(जले) (पातं=) मत्स्यवधार्थं मज्जनं (वित्थ=) जानीथेत्यर्थकं वाक्यं समाकर्ण्य पातञ्जलशास्त्रज्ञा-

---

युक्तगुणेन श्रुतिपथविजृम्भमाणेन नेत्रभङ्गेन।
वरतनु! मन्मथविशिखस्त्वयास्ति नीतोऽधरीभावम्॥
इत्यार्या वर्तते।

इति भ्रमादागताः स्म इति भावः ॥ ६८४ ॥

कश्चिद्गुणविशेषानुत्पादकजनपरिचयो न कार्य इत्याह—

**येषामभ्यासेन ह्रस्वत्वमवाप्यते सततम् ॥**
**तेषां द्विर्वचनेनाप्यर्थविशेषो न सम्भवति ॥ ६८५ ॥**

अभ्यासः=परिचयः। ह्रस्वत्वम्=अपकर्षः। द्विर्वचनं=प्रणयसूचकवाक्याऽऽवृत्तिः। अर्थविशेषः=सत्कार्यम्। पक्षे (अभ्यासेन=) वैयाकरणानां "पूर्वोऽभ्यासः" (६।१।४) इति परिभाषितेन स्वप्रतियोगिकपूर्ववर्णेन "ह्रस्वः" (७।४।५९) इति सूत्रेणाभ्यासस्य ह्रस्वविधायकेन (विहितं) ह्रस्वत्वं (लभ्यते)। तत्र द्वित्वेनापि अर्थविशेषो न भवति। तन्निमित्तभूतप्रत्ययार्थातिरिक्तस्यास्य द्वित्वेनानवगमादित्यर्थः ॥६८५॥

कश्चिदिदमाह—

**यौवनविहितविमर्दनमपि बालत्वं कुरङ्गनयनायाः ॥**
**बालेष्वेवावर्तत चिराय साधारणे खलु दुरासम् ॥६८६॥**

बालत्वं=शैशवं केशवृत्तिजातिश्च। यौवनप्रागभावाधिकरणतया तत्साधारणे तस्याः शरीरे स्थितमपि यौवनाऽऽगमे तत्र स्थातुमसमर्थं स्वासाधारणाश्रयेषु बालेष्वेव बालत्वं स्थितं, यतः स्वपरसाधारणविषये आसितुं दुष्करं भवतीत्यर्थः ॥ ६८६ ॥

इति यकारव्रज्या ॥

रात्रिकृतमभिसारं गोपयन्ती सखीमाह—

**रजनीजागररागं नयनेऽपलप क्रुधा मुधाहितया ॥**
**निद्रातुं तदपाटवमथ नाटयितासि किंनाम ॥ ६८७ ॥**

एकदेशावच्छिन्नत्ववारणाय रजनीति। मुधा=अलीकम्। आहितया=कृतया। तस्य=नयनस्य। अपाटवं=घूर्णितत्वं निद्राविच्छेदजन्यम्। अपलपितुं किं वाभिनेष्यसि। अन्यनिष्ठक्रो-

धस्यान्यप्रत्यक्षानवगम्यतया नेत्ररक्तत्वनिह्नवार्थं क्रोधाभिनयेऽपि तदपाटवहेतोरन्यस्य असत्प्रत्यक्षबाधेन कल्पयितुमशक्यत्वादिति भावः। अपाटवेति श्रान्तदृष्टिसूचनम्।

"श्रमप्रम्लायितपुटा क्षामान्ताञ्चितलोचना।
स्रस्ता पतिततारा च श्रान्ता दृष्टिरुदीरिता"
इति भरतोक्तेः॥ ६८७॥

सखी नायिकामाह—

**(१)रजसा पृष्ठगतेन प्रोल्लसिता किमपि सत्त्वेन॥
पुरुषार्थस्यासत्तिर्विभाव्यते भव्यवृत्तीनाम्॥ ६८८॥**

अभिसारेऽनावृतभूमावेव सम्भोगात्पृष्ठस्य रजोऽङ्कितत्वम्। स्पर्शादिना आनन्दांशे आत्मावरणभङ्गादानन्दप्रत्यक्षं स एव सत्त्वपदार्थः। पुरुषार्थः=कामरूपः। वृत्तयो(=वर्तनानि) भव्यत्वं फलोपाहितत्वात्। इयमव्यवहितपूर्वं प्राप्तवल्लभसङ्गा तदसाधारणचिह्नवत्त्वादित्यर्थः। पक्षे रजोगुणहान्या सत्त्वोद्रेकेण मोक्षरूपपुरुषार्थप्राप्तिः सन्निहितेति गम्यते॥ ६८८॥

कश्चिदिदमाह—

**रमणीनां कुचमुकुलोपरि निदधाने करं दयिते॥
मुकुलीभवतो नयने अपि तत्स्पर्शस्पृहावशेनेव॥६८९॥**

कुचस्य मुकुलाकारत्वात्तस्य दयितकरस्पर्शमहोत्सवानुभवो जातः। आवयोरपि मुकुलत्वे तथा स्यादिति मनसि कृत्वा करस्पर्शार्थमिव नेत्रयोर्मुकुलितत्वमिति फलोत्प्रेक्षा। एतेन मुकुला दृष्टिरुक्ता। सा प्रागुक्ता। एतेनोत्कर्षप्रयोजकधर्ममात्मनि

---

(१) इयमार्या का० रा० पु० पुस्तके नास्ति। एतत्स्थाने—
रसजनकेन तिरस्कृतचन्द्ररुचा सततशोभेन।
तावकमुखेन सुन्दरि! नियतं परिभूयते पद्मम्।
इत्यार्या वर्तते।

सम्पादयितुं सर्वस्येच्छा भवतीति व्यज्यते ॥ ६८९ ॥

सखी नायिकामाह--

(१)रदनवसनत्वमस्य स्फुटयितुमिव दयितदशनेन ॥
चिह्नमधरे कृतं तव विशदयति विशेषतो रागम् ॥६९०॥

यद्वस्तु यदीयं भवति तत्र तदीयमुद्रापि भवति । रदनवसनत्वेन स्वसम्बन्धितया प्रसिद्धे तत्राधरे कान्तदन्तेन कृतं क्षतं रागं=त्वद्विषयकस्नेहं रक्तत्वं चोद्भावयति । अनेन गूढकाख्यं दन्तक्षतं विवक्षितम् । तथाच रतिरहस्ये-"रागैकचिह्नमधरे किल गूढकं स्यादुच्छूनकं दशनवाससि वामगण्डे" । इति । स्पष्टमदृश्यमानस्य रक्तवर्णस्य दन्तक्षतस्येयं संज्ञेति तद्विवरणकाराः ॥ ६९० ॥

कश्चिद्वृतान्तदशामाह--

रतिविरमे सति वृत्तं धृतमन्दाक्षं मुखं च हृदयं च ॥
संवृतविग्रहव्रीरुत्समजनि वासः प्रयासश्च ॥ ६९१ ॥

धृते मन्दे अलसायमाने श्रान्ते अक्षिणी येन । पक्षे मन्दाक्षं=लज्जा । वेष्टिता देहव्रीरुग्येन । पक्षे संवृता=व्याप्ता । अत्र कामशास्त्रम्--

"धातुक्षये समुद्भूते श्रान्ते च रतिसङ्गरे ।
विरामो जायते जातलज्जयोरुभयोरपि" ॥ ६९१ ॥

कश्चित्पुरुषायितं सूचयन्नाह--

राकेन्दुमण्डलादिव निपतन्तीर्विप्रुषः सुधारसजाः ॥
मुक्ता मुखान्मृगाक्ष्याश्च्योतन्तीर्वीक्षते धन्यः ॥६९२॥

"विप्रुषः स्त्रियः" इत्यमरः । चन्द्रवदनयोर्बिम्बप्रतिबि-

---

(१) का० रा० पु० पुस्तके अत्र चतुर्थचरणे 'विलक्षणां श्रियमुदश्चयाति' इति पाठः ।

स्वभावः । सीमन्तकादिगुम्फितमुक्ताफलानां रतिविमर्दैन के-
शाकर्षणवशात्पातः । उत्प्रेक्षया तासामाल्हादकत्वव्यञ्जनम् ॥६९२॥

काचिदभिसारिकेदमाह—

**रामेप्सिताभ्युदयभूः संश्रुतसामश्रवस्का या ॥**
**विधृतकुशध्वजसहजा सुखयति मां तीरभुक्तिरियम् ६९३**

तीरे=नद्यादिसम्बन्धिनि भुक्तिः=दयितसम्भोगः । रा-
माणामीप्सितस्य=मनोरथस्याभ्युदयहेतुः । स्वाभीष्टनायकजन्य-
त्वात् । संश्रुतं साम=नायकवाक्यं याभ्यां ते संश्रुतसामनी ता-
दृशे श्रवसी=श्रोत्रे यस्याः । स्थलान्तरेऽभिसारे जनान्तरश्रो-
त्रभिया परस्परमनालापात् । विधृता कुशरूपा ध्वजा येन तथा स-
हजः स्वभावो यस्याः । दर्भादिकठिनद्रव्ययुक्तापीति यावत् । पक्षे
तीरभुक्तिः=मिथिला।श्रीरामस्य ईप्सिता प्रिया सीता तस्या जनन-
स्थानम्।संश्रुतःसामश्रवा याज्ञवल्क्यशिष्यो यत्र ।“अथ ह याज्ञव-
ल्क्यःस्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा३” इति
शतपथात् ।“मिथिलास्थः स योगीन्द्र”इत्युक्तेः तत्र याज्ञवल्क्य-
वासे तच्छिष्यस्यापि तथात्वात् । धृतः कुशध्वजस्य सहजः सोद-
रः सीरध्वजो राजा यया। सीताजनकस्यैतत्संज्ञत्वात् ॥६९३ ॥

विरहिणी सखीमाह--

**रावण इवान्धकारितदशदिग्वदनः प्रमोदभृतलङ्कः ॥**
**संजनितमेघनादः समयोयमुपैति विरहिणीहृतये॥६९४॥**

विरहवतीनां स्त्रीणां हृतये=मूर्च्छायै । रावणपक्षे तत्काले
परोक्षतया श्रीरामविरहितायाः सीतायाः(हरणाय)।अन्धकारिता
नि=सञ्जाततिमिरीकृतानि दशसङ्ख्याकानां,दिशां वदनानि येन।
मेघघटासङ्घटनात् । पक्षे अन्धकारसदृशानि दशत्वेन दिक्तु-

लयानि वदनानि यस्य । प्रमोदेन भृताः=पूरिता लङ्काः=कुलटा येन । पक्षे तद्राजधानी । "लङ्का रक्षःपुरी शाखाशाकिनीकुलटासु च" इति विश्वः । उत्पादिता मेघानां नादा येन । पक्षे मेघनाद=इन्द्रजित् । एतेन भीषणत्वसूचनम् ॥ ६९४ ॥

काचित्कुत्राप्यनुरागादिदमाह—

**रुद्धः प्रियेण साकं संयोगो नयनयोः सुचिरम् ॥**
**कठिनाशयेन महता सखि! कुड्येनेव गुरुजनेन॥६९५॥**

कठिनत्वमाचारपरिपालकत्वेन रसाविरोधित्वात् । पक्षे स्पष्टम् । महत्त्वं तदनादराशक्तेः । पक्षे परिमाणातिशयात् कुड्यस्य ग्राह्यग्राहकमध्यवर्तित्वे चक्षुर्गमनप्रतिबन्धान्न विषयचक्षुःसंयोगः । गुरुजनस्य तु तद्दर्शनानुकूलदेशगमनादिविरोधित्वात्तथेति भावः ॥ ६९५ ॥

कश्चिन्मुग्धास्वभावमाह—

**रूपैकग्राहकमपि पश्यत्येवाक्षि दृश्यते नैव ॥**
**बालेयं तादृश्यपि दृश्यत एवेह पश्यति तु नैव॥६९६॥**

रूपस्येव एकं ग्राहकं तज्जन्यज्ञानकारणं यस्य । चाक्षुषे रूपस्यैव नियामकत्वात् । पश्यत्येव=दर्शनहेतुरेव न तु दर्शनविषयोऽपि अतीन्द्रियत्वात् । इयं बालापि रूपमेकं=मुख्यं ग्राहकं=वशीकरणहेतुर्यस्यास्तादृशी इति लिङ्गविपरिणामादन्वयः । मत्समवेतदर्शनविषय एव नतु मद्विषयकदर्शनाश्रयो लज्जाप्राधान्यादिति व्यतिरेकः ॥ ६९६ ॥

नायिका सखीमाह—

**रेखेयं वारिमुचः प्रत्यग्रा पुष्करे स्फुरति ॥**
**तमसा प्रसार्यमाणा रसनेव महास्विनां निगरणाय६९७**

"प्रत्यग्रोऽभिनवो नव्य" इत्यमरः । रेखेति जिह्वाता-दात्म्यसम्भावनायोग्यत्वम् । ( पुष्करे= ) सूर्यादितैजसपदार्था-नामन्धकारविरोधितया तद्रक्षणाय तत्प्रचारमार्गभूते व्योमनि अन्धकारेण विस्तार्यमाणा जिह्वेव । तमःसम्बन्धेन जिह्वायाः श्यामत्वसूचनम् ॥ ६९७ ॥

विरहिणी सहचरीमाह—

**रेवाप्रवाहपातः परितो विन्ध्यस्य भाति दीर्घगतिः ॥**
**मैत्रावरुणिनिदेशानतिक्रमायेव गुणबन्धः ॥ ६९८ ॥**

वेष्टितप्रायत्वेन भगवदगस्त्याज्ञापरिपालनाय पाशेन बद्ध इव कदाचित्प्रतिज्ञां परित्यज्य सूर्यमार्गं मारौत्सीदित्यभिप्रायेणे-त्यर्थः । नायकेन तु समुल्लङ्घ्यावधिदिनं न स्वप्रतिज्ञा परिपा-लितेत्यनुचितामिति भावः । यद्वा विप्रलब्धोक्तिः ॥ ६९८ ॥

काश्चिदिदमाह—

**(१)रोमालिरचलदुहितुर्वारणमुखदानवारिलेखेव ॥**
**शीतांशुशकलशेखरनयनभ्रमराश्रिता जयति ॥६९९॥**

उत्सङ्गलाल्यमानलम्बोदरगण्डमण्डलानिर्गतमदजललेखेयं त-दुदरलग्नेति स्वरूपमुत्प्रेक्ष्यते । उपमात्वे दानलेखामात्रेण तत्सिद्ध्या उदरसम्बन्धोपपादकगजाननसम्बन्धित्वविशेषणमन-र्थकं स्यात् । नयनभ्रमरेत्यत्र च रूपकमेव तादात्म्यसम्बन्धा-नुकूलत्वात् इत्युत्प्रेक्षाया रूपकनिर्वाहकत्वम् ॥ ६९९ ॥

काश्चित्प्रियामाह—

**रोचनया कृतचित्रकमाननमाभाति भवदीयम् ॥**
**तामसदृक्प्रतिहतये कृतरक्षमिवानुसूययेन्दुवपुः ॥७००॥**

---

(१) इत आरभ्य पञ्च आर्याः का० रा०पु० पुस्तके न वर्तन्ते ।

"तमालपत्रतिलकचित्रकाणि विशेषकम्" इत्यमरः। तापसी=राहुसम्बन्धिनी दुष्टसम्बन्धिनी च या दृष्टिस्तन्निवारणाय। अनुसूयया=अत्रिभार्ययाऽत्रिनयनजस्य चन्द्रमसो रोचनतिलकेन रक्षा कृतेत्यर्थः। उत्प्रेक्षेयम्। उक्तविधचन्द्रस्य लोकाप्रसिद्धेः॥ ७०० ॥

काश्चिन्मनस्विनां स्वभावमाह—

**रोलम्बः स्वादयति न सलिलमनासादयन्नपि मरन्दम्॥**
**अभिमतविषयामिलने मनस्विनः प्रतिनिधावनादरिणः॥**

रोलम्बो=भ्रमरः। मकरन्दालाभे जलस्य पानं प्रसक्तं तद्भ्रमरेण न क्रियते एव। कार्यमात्रार्थिनस्तु मुख्यालाभे तदनुकल्पमप्यादाय कार्यं साधयन्ति न तु मनस्विन इत्यर्थः। अदृष्टार्थकस्थले प्रतिनिधिनापि कर्मसमाप्तेरावश्यकत्वमन्यथा प्रत्यवायापत्तेरित्यत उक्तम्—अभिमतेति॥ ७०१ ॥

विरहिणीदमाह—

**रोहिण्याः सुत उल्मुकमजनयदिति तावदासवचः॥**
**तद्दयितादेव पुनस्तज्जनिरध्यक्षसंसिद्धा॥७०२॥**

रोहिणीतनयस्य बलदेवस्य उल्मुकसंज्ञः पुत्र इति पुराणप्रसिद्धम्। रोहिणीदयिताच्चन्द्रात्तस्योल्मुकस्योत्पत्तिस्तु प्रत्यक्षेणैवानुभूयते। तत्करणामङ्गारवदुष्णस्पर्शत्वानुभवादिति भावः। "अङ्गारोऽलातमुल्मुकम्" इत्यमरः॥ ७०२ ॥

काश्चित्सुजनमधिकृत्याह—

**रोषेऽपि परुषवचनं सम्भावितमाननान्न सुजनानाम्॥**
**विशदयति मदितहृदयं चन्दनमपि दह्यमानमामोदम्॥**

परुषं=परपीडोपपादकम्। एकत्वेन बहूनां सम्भावना चान-

वकाशेति सूच्यते । दह्यमानमपीत्यन्वयः । हृदयमित्यामोदविशेष- णम् । वैधर्म्येण दृष्टान्तः । आमोदाविशदीकाराक्षिप्तेनासुरभि- गन्धप्रकाशनाभावेन पूर्वार्द्धसजातीयार्थलाभात् ॥ ७०३ ॥

इति रेफव्रज्या ॥

काञ्चित्प्रियामाह—

लक्ष्मनङ्गस्य मतं कलेवरं तव सुधांशुमुखि ! ॥
अब्जं पुनस्तनुभृतां ततः परार्द्धं सहृदयानाम् ॥ ७०४ ॥

"लक्षं शरव्ये सङ्ख्यायाम्" इति विश्वः । अवच्छेदक- तासम्बन्धेन शरीरं ज्ञानहेतुरतस्तद्व्यतिरेके आत्मन्यपि समवाये- न ज्ञानोदयानुपपत्तिः । तादृशेनानङ्गेनापि लक्षमिति मतम् वारं- वारं वेधात् । अथच लक्षं=सङ्ख्याभेदः । तदपेक्षया किञ्चिदुत्कृ- ष्टैस्तनुभृद्भिर्ज्ञानसामान्यसम्बन्धादब्जमिति ज्ञातं कमलवत्सुकु- मारत्वात् । पक्षे अब्जं=शतकोटिसङ्ख्या । सर्वपदार्थतारतम्या- भिज्ञतया तदुत्कृष्टानां सहृदयानां तु अब्जादपि परार्द्धं=श्रे- ष्ठमभिमतं तद्विलक्षणमृदुत्वाश्रयत्वात् । पक्षे परार्द्धं=सङ्ख्यान्तरा- नपकृष्टसङ्ख्याविशेषः ॥ ७०४ ॥

काञ्चित्प्रियामाह—

लक्ष्मीं सुमुखि! समग्रामेवाम्बुरुहं वहत्यसन्देहम् ॥
तव मुखरुचिलवमात्रं तदिति ततस्ते विशेषसंसिद्धिः॥७०५॥

विसंशयमिति पुराणादिप्रसिद्धत्वात् । मुखेत्यशेषशरीर- व्याप्तिः । रुचीति गुरुत्वाभावसूचनम् । सर्वतद्वहने लक्ष्म्य- पेक्षव्यतिरेकस्य नायिकायां सिद्धावपि कमलापेक्षया मुखस्यापि व्यतिरेकः प्रसङ्गात्सिद्ध्यतित्यत्याशयेन-लवेति । सर्ववहनेऽपि तत्सत्त्वात्-मात्रेति । ततश्च यदवयवपर्यायैकदेशमेव यदाधारो दधाति तस्याः कथं त्वत्साम्यमित्यर्थः ॥ ७०५ ॥

कश्चिदिदमाह—

**लवणतयापि प्रथितः सुतरां मधुरोपकण्ठवसतिरपि ॥**
**धर्मविरोधी न सतां सुखाय रक्षोविशेष इव ॥७०६॥**

धर्मेति स्वपरोभयसाधारणम् तद्विरोधित्वम् । ( लवणतया प्रथितोऽपि= ) रम्यतमोऽपि । ( मधुरोपकण्ठवसतिरपि= ) अन्यन्तमधुरसविधानिवासोऽपि तादृशो न सज्जनसुखाय । राक्षसभेदोऽपि लवणसंज्ञः । लवणत्वं=तच्छरीरवृत्तिजातिविशेष स्तद्वान् । मथुरानगर्याः समीपदेशे यमुनायां वसन्नपि यागादिधर्मविघ्नहेतुत्वात्तथेत्यर्थः ॥ ७०६ ॥

दूती नायिकामाह—

**लिखिताग्रभुवा मन्मथविजृम्भणेनैष चन्द्रमुखि ! ॥**
**विरहतुलाशकटाहे निःक्षिप्तो बत सुधन्वेव ॥ ७०७ ॥**

स्वत्प्रहितस्वानुरागसूचकलेखदर्शनोत्तरमत्यन्तमेधमानेन मन्मथेन विप्रलम्भाग्निकटाहे निःक्षिप्तोऽत्यन्ततापानुभावात् । अथच लिखितसंज्ञमुनेरग्रजेन शङ्खनापि महिष्याकृत्यनुरोधेन युद्धाद्विलम्बितः सुधन्वा तैलकटाहे निःक्षिप्त इति जैमिनिभारतम् ॥ ७०७ ॥

काचित्सङ्केताभिप्रायेणाह—

**लूतातन्तुमिषेण प्रेक्षस्व विशीर्णसर्वगात्रस्य ॥**
**जरदालयस्य धमनीजालाः प्रादुर्भवन्ति सखि! ॥७०८॥**

मिषेण प्रादुर्भवन्तीत्यन्वयः । तत्र हेतुः विशीर्णेत्यादि । "जीर्नो जीर्णो जरन्नपि" इत्यमरः । "पूर्वकालैकसर्वजरत्पुराण—" ( २ । १ । ४९ ) इत्यादिना समासः । अन्यस्यापि क्षीणगात्रस्य समन्ततो नाडीसमूहाः स्फुटीभवन्तीति भावः ॥ ७०८ ॥

काश्चित्प्रियामाह—

लेशोऽपि मुखरुचेस्तव न प्राप्तः किल कुशेशयकुलेन ॥
पीयूषकिरणमण्डलपुरतो यन्मुकुलितं भवति॥७०९॥

कुशे जले तिष्ठतीति कुशेशयम् "शतपत्रं कुशेशयम्" इत्यमरः। मुकुलितं=सङ्कुचितं शोभाहीनं च। अत्र चन्द्राग्रे पद्मानां सङ्कोचस्य मुखकान्तिलेशमात्रप्राप्त्यतिरेकप्रयुक्तत्वाभिधानेन मुखशोभालेशेनापि चन्द्रापकर्षो भवतीति तस्याप्यर्थादपकर्ष आक्षिप्यते। तथाच पद्मकुलं मुखकान्तिसामान्याभाववत् चन्द्रजन्यसङ्कोचवत्त्वात्। यन्नैवं तन्नैवं यथा मुखमिति कल्पितव्याप्तिमूलकमनुमानम् ॥ ७०९ ॥

कश्चिदनावृतस्तनीं पश्यन्नाह—

लोकायतं नयनयोः पदयोः सुगतद्वयं निरुपमानम् ।
कुचयोर्वीक्ष्य दिगम्बरमथ भवितव्यं कथं नु जीवेन७१०॥

लोके आयतं दीर्घम्। सुगतं=शोभितगमनम्। निरुपमानम्=अनन्यसदृशम्। दिगम्बरं=नग्नम्। जीवेन कथं भवितव्यम्। तदप्राप्तौ दुःखातिशयोत्पत्तेः। अथवा लोकायतं चार्वाकशास्त्रम्। "सर्वज्ञः सुगतो बुद्ध" इत्यमरः। उपमानप्रमाणस्य तैरनङ्गीकारात्। दिगम्बरः=तद्विशेषः। एतेषामग्रे जीवस्य कावस्था चार्वाकैः शरीरस्य, सौगतैः क्षणिकविज्ञानस्य, दिगम्बरैश्च देहपरिमाणस्य जीवत्वोपगमात्। विभोर्देहाद्यतिरिक्तजीवात्मन एतन्मध्ये केनाप्यनभ्युपगमादिति ध्वनिः ॥ ७१० ॥

कस्यचिदभिप्रायेण सखी नायिकामाह—

लोभेन त्वद्बिम्बाधररसपीयूषपानस्य ॥
संविहितचरणपातस्तं रागी यावकः श्रयति ॥ ७११ ॥

"यावोऽलक्तो द्रुमामय" इत्यमरः। विशेषोत्कर्षोत्तृष्णाया उत्कटत्वलाभाय-पीयूषेति। संपदेन चरणशोभोद्दीपकसंयोगविशेषसूचनम्। पातः=संयोगः प्रणामश्च। रागी=रक्तवर्णः स्नेहवांश्च। यौति मिश्रीभवितुमर्हतीति यावक इत्यमरव्याख्येयत्वव्यञ्जनम्। एतेन कामकलावैदग्ध्यं दर्शितम् ॥ ७११ ॥

कश्चित् "समानशीलव्यसनेषु सख्यम्" इत्यभिप्रायवानाह—

लोचनमलीकगं प्रतिफलद्गिरिशस्याधिकाञ्चि मणिगौर्याः॥
तद्वृत्तिमध्यमस्थितिसाधर्म्याद्बद्धसख्यमिव जयति ७१२॥

गौरीकाञ्चीरत्नप्रतिबिम्बिते भगवद्भाललोचने उत्प्रेक्षेयम्। लोचनस्यालीकवर्तित्वाद्रत्नस्यापि मध्यगतत्वात्। मध्यस्य च सूक्ष्मतया शशशृङ्गादिवदलीकत्वोपचारात्। अलीकवृत्तित्वरूपसाधर्म्येण नेत्ररत्नयोः सम्बन्ध इति भावः। भालवाचकमलीकपदं दीर्घमध्यमपि। "नीचाः सदैव सविलासमलीकलग्ना" इत्यादिदर्शनात्। तत्प्रतीतिर्मध्यमस्थितौ सा च साधर्म्येऽभेदेन विशेषणम् ॥ ७१२ ॥

कश्चिन्मानिनीमाह—

लोहितमधरकराङ्घ्रि श्यामे! तव यौवनेन संविहितम्॥
हृदयं त्वयैव मन्ये तथाकृतं कठिनतोत्कर्षात् ॥ ७१३ ॥

अङ्घ्रीति प्राण्यङ्गत्वादेकवद्भावः। लोहितं=रक्तं तथा लोहवदाचरत् लोहितं कृतं लोहवत्कठिनीकृतमित्यर्थः। तत्करोतिण्यन्तत्वे तु कृतमित्यनन्वितं स्यात् ॥ ७१३ ॥

कश्चित्प्रियामाह—

लोलाक्षि! दशनकरजैरधरकपोलस्तनं यदि व्रणितम्॥
माकुप्य तेन सत्यं मम देहान्ते बहिर्भूताः ॥ ७१४ ॥

दशनजैः करजैरिति मध्यमपदलोपः । सत्यमिति बहिर्भूता इत्यत्रान्वितम् । मदीयशरीरान्तर्भूतैस्तत्तदकरणान्न ममापराध इत्यर्थः । दन्तनखादीनां सुखाद्यनवच्छेदकतया शरीरसमवायित्वं नास्ति किंतु तत्संयुक्तद्रव्यान्तरत्वमेवेति वैशेषिकाः ॥ ७१४ ॥

इति लकारव्रज्या ।

कश्चित्प्रियाया रूपातिशयं सूचयन्नाह—

**वरतन्तुना पटेन श्रिता सुतीक्ष्णेन नेत्रभङ्गेन ॥**
**लिखितेन मकरकेणावभासि शङ्खेन कण्ठेन ॥ ७१५ ॥**

तन्तुश्रेष्ठत्वादेव पटोत्कर्षात् । वरेत्यादि बहुव्रीहिः । सुतरां तीक्ष्णत्वं स्वसंयोगोत्तरमपि हृदयदारणकरत्वात् । (मकरकः= ) स्तनादौ पत्रलेखा । लिखितेन=कस्तूर्यादिना स्फुटीकृतेन तत्सजातीयसंस्थानेन । शङ्खेन त्रिरेखावत्त्वात् । पक्षे वरतन्तुसुतीक्ष्णलिखितशङ्खा ऋषिविशेषाः । तथाच तैरपि त्वदाश्रयणेऽस्मादृशां का कथेति भावः ॥ ७१५ ॥

कोऽपि कस्याश्चिद्वृत्तमाह—

**वर उपयतौ व्रते मम दधानि ते हृदयमित्यभिदधाने ॥**
**परिणयपूर्वमपीदृशासिद्धेः साऽस्मयत तं प्रेक्ष्य ॥७१६॥**

परिणयात्प्रथममेव यस्मिन्ननुरक्ता दैवात्तस्मै पित्रा प्रतिपादिता काचित्संस्कारावसरे मदीयहृदयाविरुद्धहृदया भवेत्यर्थकं "मम व्रते ते हृदयं दधानि" इति मन्त्रमुच्चार्य गृह्यप्रामाण्येन हृदयं वरे स्पृशति ततः पूर्वमेव तदनुकूलहृदयतया तद्विधानमनर्थकमित्यभिप्रायेण स्मितमातनोतेत्यर्थः ॥ ७१६ ॥

सखीदमाह—

वक्षोरुहे वरतनोः प्रियकरजपदं समुल्लसति ॥
बन्दीकृतं कुशेशयमुकुलेन सुधाकरार्द्धमिव ॥ ७१७ ॥

पद्मकोरकस्य चन्द्रेण सह विरोधाद्बन्दीकृतत्वोत्प्रेक्षा। मुकुलपदेन विरोधप्रयोजकधर्मदशायामेव तद्वैरातिशयादिति सूचितम्। वक्षोरुहस्य कोरकतादात्म्यं च व्यङ्ग्यम्। अर्द्धपदेन तस्य हानिलाभाद्यभियोगार्हत्वव्यञ्जनम्। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः लक्ष्म यथा—"नवनखपदलेखालाञ्छितं बाहुमूलम्" इति स्वामी ॥ ७१७ ॥

कश्चिन्मानिन्या अवस्थाविशेषं पश्यन्नाह—

वदनमधिविधुन्तुदमृधमाधुर्यं दधाति बाष्पाम्बु ॥
कज्जलमलिनितमक्ष्णोरम्बुजरोलम्बसंवलनम् ॥ ७१८ ॥

"मृधमास्कन्दनं सङ्ख्यम्" इति युद्धनामस्वमरः। माधुर्यं=सौन्दर्यम्। रोलम्बो=भ्रमरः। श्यामत्वलाभाय—कज्जलेति। उत्तरार्द्धेऽपि बाष्पाम्भस एव कर्तृत्वेनान्वयात् पूर्ववाक्यशेषैकपदस्य तत्रोपादानमिति दोषाभावः। अत एव बाष्पाम्बुपदस्य पूर्वार्द्धोपादानमपि न दोषः। अन्यधर्मस्यान्येन धारणासम्भवात्साम्यपर्यवसानमिति निदर्शना ॥ ७१८ ॥

कश्चित्प्रियामाह—

बाले! प्रतनुबलाहकलेखापिहितं सुधाकरं पश्य ॥
चीनासितसंव्यानाञ्चलावृतं मुखमिव स्वीयम् ॥ ७१९ ॥

चीनाञ्चलेन मुखावरणोपपत्तये बाले इति सम्बुद्धिः। स्थूलमेघेन चन्द्रचक्षुःसंयोगनिरोधात्प्रतनुपदम्। प्रकर्षश्चात्र चक्षुःसंयोगविरोधित्वमेव। बलाहकपदेनोत्सर्गतः श्यामत्वला-

भात्तद्बिम्बभूतवसनेऽपि तथात्वलाभाय—असितेति । तथाच दर्पणादिकं विनैव उक्तविधस्वमुखशोभामत्रैव पश्येत्यर्थः॥७२९॥

काञ्चित्साधुत्वमुपदर्शयन्तीं दुर्विनीतहृदयां काप्याह—

**विनतासि गुरुजने त्वं यथा सरोजाक्षि! बहुकरारुणभूः॥**
**सुविहितभुजङ्गभोगं तथा प्रसोतासि नूनमात्मभुवम्॥७२०**

विशेषेण नता नम्रा । बहुकरसम्बन्धिनी अरुणभूर्यस्याः इति 'सविशेषणे हि' इतिन्यायेन बहुत्वमारुण्यविशेषणतया पर्यवस्यति । सुतरां कृतो भुजङ्गानां कामुकानामुपभोगो येन । तादृशमात्मभुवं कन्दर्पं जनयिष्यसि । विनतापि कश्यपस्त्री । बहवः किरणा यस्य स तथा । तेजस्विनोऽरुणसंज्ञस्योत्पत्तिर्यतस्तादृशी । सर्पाशनं=गरुडरूपं पुत्रमजनयादित्यर्थः ॥ ७२० ॥

कश्चित्प्रियामाह—

**विन्ध्येनेव निवारितविवस्वता सुतनु ! मुदिरेण ॥**
**सूतेयं जलधारा भवदक्ष्णोर्नर्मदा स्फुरतु ॥ ७२१ ॥**

निवारणं=दर्शनाविषयत्वगतिप्रतिरोधोभयसाधारणम् । नर्मपदमिह प्रीतिपरम् । मुदिरपदेन मोदजनकत्वलाभात्तदुत्पन्नपयसोऽपि तदुचितत्वसूचनम् । विन्ध्यभवापि जलधारा नर्मदासंज्ञेति भावः । तथाचैतादृशोद्दीपकविभावदर्शनेन मानानुबन्धो न कार्य इति सूचितम् । यद्वा अभिसारिकां प्रति सख्या उक्तिः । सूर्यसमाच्छादनेन प्रकाशाभावाद्दिनेऽप्यभिसारः सुलभ इति भावः ॥ ७२१ ॥

अथवादानीते नायके सम्भाषणादि कर्तुमशक्तायां सखी प्राह—

**विपुलेन गृहीतेयं सत्त्वविशेषेण रुचिर संस्पृता ॥**
**कुलिशकरेऽप्युपनमति त्वयि न स्पन्दं तनोत्यवयवानाम्**

रुचिरेति सम्बुद्ध्याऽननुरागवारणम् । सत्त्वविशेषः स्त-

म्भः । तत्सम्बन्धे सम्यक्त्वं रागजन्यत्वम् । कुलिशकर(१)उत्तमत्वात् । स्पन्दः=चेष्टा । तथा च स त्वयैव स्वयमाश्लिष्यतामित्यर्थः । अथ च देवशर्मणो महर्षेर्भार्यारुचिसंज्ञा शक्रेऽनुरक्तापि विपुलनाम्ना तच्छिष्येण योगप्रभाववशात्तामसंस्पृशतैव तदन्तःप्रवेशेन निरुद्धदेहा इन्द्रसम्भाषणादावसमर्था बभूवेति भारतार्थध्वनिः ॥ ७२२ ॥

कश्चिद्भ्रमस्य संशयोत्तरस्वाभिमतनिर्णयमवधारयन्नाह--

**बन्धूकमधरभासा मधूकमुकुलं वधूकपोलेन ॥**
**पश्यन्समममपि मधुपो लावण्याभाववत्तया वेत्ति ॥७२३॥**

किञ्चित्समवायावच्छेदेन सारूप्यमूलकसंशयादन्यतरत्र मिलितुमसमर्थोऽपि अधरत्वादिव्याप्यो यो लावण्यविशेषस्तदभाववत्तया बन्धूकादिनिर्णयात्तत्र संयुज्यत इत्यर्थः । एवंच तद्भेदस्य तिरश्चामपि ज्ञानविषयत्वे सहृदयानां तत्कथं न स्यादिति व्यङ्ग्यम् ॥ ७२३ ॥

कश्चिन्नायिकामाह--

**शठ ! किं कैतववचनैरन्यथयितुमीहसे सदपि वस्तु ।**
**वाचो वक्तुरधीना नैवार्थः कस्यचिद्रागः ॥ ७२४ ॥**

"वाचैव मधुरो यस्तु कर्मणा नोपपादयेत् ।
योषितां कंचिदप्यर्थं स शठः परिकीर्तितः" इति भरतः । त्वयि विद्यमानमपि नायिकान्तरविषयकानुरागमन्यथाकर्त्तुं कथमिच्छसि । यतो वाक्यमेव पुरुषाधीनं न त्वर्थः । घटवति भूतले विप्रलम्भकेन घटो नास्तीत्युक्तेऽपि तत्र घटाऽभावस्य वस्तुतोऽसत्त्वात् । यद्यपि तेनाप्यनुरागस्य प्रकृतनायिकानिष्ठज्ञानविषयत्वाभाव एव कर्तुमिष्टो न त्वनुरागाभावस्तथापि त-

(१) वज्राकाररेखालाञ्छितहस्ते इत्यर्थः ।

द्वाक्यार्थानिर्णयेनाप्रामाण्ये तात्पर्यम् ॥ ७२४ ॥

कश्चिदेवमाह—

शशलाञ्छनस्य लेखा गौरीसीमन्तमौक्तिकलताग्राः ॥
पतितार्द्धवल्लरीरिव प्रतिभाति पुरद्विषः शिरसि॥७२५॥

ईश्वरशेखरपदारूढचन्द्रकला पुरुषायितावसरनिपतितपार्वतीसीमन्ताभरणमुक्ताफलमञ्जरीशकलतादात्म्येन सम्भाव्यते । तस्या निपतनस्येश्वरशिरोयोगस्य च तदैव सम्भवात् । एतेन गौरीसीमन्तपातिताया ईश्वरशिरःसंयोगकथनाद्गौर्याः परमप्रेमविषयत्वसूचनम् ॥ ७२५ ॥

खण्डिता नायकमाह—

शल्य इवेतरहृदयो मुखमात्रोपहितमेलकस्त्वं माम् ॥
कुरुराजवाहिनीमिव विदधासि विपक्षजनहास्याम्॥७२६

शल्यो=मद्रराजः । इतरेत्यादि युधिष्ठिरप्रभृतिहितपरत्वात् प्रतिनायिकानुरक्तत्वाच्च । मुखेत्यादि उभयत्र तुल्यम् कुरुराजो=दुर्योधनः । विपक्षाः=सपत्न्यः पाण्डवाश्च । शल्येन कर्णतेजोऽभिभवात् तत्पराजय इति भारतम् ॥ ७२६ ॥

काचित्सरोषमाह—

शस्तैव सुभग ! लब्धा त्वया द्वितीया बहुत्वभूता ॥
स्वप्रकृतिभावभाजामस्माकमतश्च पदभेदः ॥ ७२७ ॥

बहुत्वभूता=तद्विशेष्यकमदपेक्षोत्कर्षवत्त्वज्ञानवता।द्वितीया=मद्भिन्ना । शस्ता=उत्कृष्टत्वेन प्रशस्ता । अतोऽस्मदपेक्षोत्कृष्टनायिकायां तवानुरागात् त्वन्मात्रानुरक्तानामस्माकं पदभेदः=त्वन्निष्ठानुरागविषयत्वाभावः । अथच द्वितीयाबहुवचनेन शस्प्रत्ययेन शसो भावः शस्ता सा प्राप्यते । तत्प्रकृतित्वजुषश्च प्रातिपदिकस्य पदसंसज्ञाविरहो भसंज्ञावत्त्वादिति भावः ॥ ७२७ ॥

कुत्रचित्तरलनायकेऽनुरक्तां तद्विरहपीडितां सखीदमाह--

**शरजन्मा मदनारेः समागमात्तस्य रसमुखोऽयम्॥**
**कृततारकेन्द्रवैरो लब्धश्चण्डि ! त्वया स्कन्दः ॥७२८॥**

चण्डीति तादृशानुरागनिषेधार्थेनोल्लङ्घनसूचनम् । आस्कन्दो=विरहव्यथापरिभवः । ( मदनारेः= ) मदनरूपस्य वैरिणः । शरसम्भूतः । तस्य=नायकस्य । रसमुखः=तत्संयोगकाले सुखोदयात् । ( कृततारकेन्द्रवैरः=) विहितचन्द्रविरोधः। तस्य तापकत्वात । अथच चण्डी=देवी । कामारेः शिवस्य सङ्गात् ( शरजन्मा=) शरकाननभवो रसमुखः=षडास्यः तारकाख्यदैत्येन्द्रवैरी स्कन्दस्तनयः प्राप्त इति भावः ॥ ७२८॥

कश्चिच्छरदभेदेन कांचिद्दर्शयति--

**शालीनां परिपाकावस्थासम्प्राप्तरागवैजात्याम् ॥**
**लब्धघनपाण्डुभावां शरदं नवयौवनां पश्य ॥७२९॥**

कलमपरिपाकदशया सम्प्राप्तं ( रागस्य=) रूपस्य वैजात्यं=विशदरूपत्वं यया । तज्जनकत्वसम्बन्धेनेदम् । प्राप्तो घननिष्ठः पाण्डुभावो ययेत्यपि पूर्ववत् । पक्षे शालीनामिति द्वितीयान्तम् । "स्यादधृष्टस्तु शालीन" इत्यमरः । "शालीनकौपीने अधृष्टाकार्ययोः" ( ५ । २ । २० ) इति निपातः । परिपाक=उत्कर्षः । तदवस्थापन्नमनुरागवैलक्षण्यं यस्याः । प्रियविरहेण लब्धोऽत्यन्तं पाण्डुभावो ययेत्यर्थः ॥ ७२९ ॥

कश्चित्प्रियामाह--

**शारीरकस्वरूपं विभाव्य वरगात्रि ! भवदीयम् ॥**
**रुचिमन्तोऽपि पदार्थास्तुच्छा एवाभिलक्ष्यन्ते ॥७३०॥**

त्वदङ्गलावण्यनिरूपणे तदवयवमुखादिसादृश्यनिरूपकत्वे-

नाभिमताः कान्तिमन्तोऽपि चन्द्रादयः पदार्थास्तुच्छा एवावभासन्ते । अथच शरीरपदात्स्वार्थे कप्रत्यये तत्सम्बन्ध्यात्मनिरूपकत्वेन शारीरकं वेदान्तशास्त्रमिति वाचस्पतिमिश्राः । तत्स्वरूपज्ञानेन रम्या अपि पदार्थाः परमार्थसत्ताशून्या एव प्रतीयन्त इति भावः ॥ ७३० ॥

कश्चित्प्रियामाह—

शाटकसंवृतमेतत्कलेवरं तव विलोकमानेन ॥
शृङ्गारान्यरसं प्रति निर्णीतस्तस्य हेतुताविरहः ॥७३१॥

उत्तमस्वभावतया प्रकाशनाविरहात् शाटकेन=वसनरत्नेन वेष्टितम् । पक्षे शाटकः=नाटिकासमानलक्षणः प्राकृतसर्वपाठ्यो नाटकविशेषः । त्वच्छरीरस्य शृङ्गारविभावतया तत्रैव जनकत्वम् । शाटकस्यापि शृङ्गारमात्रवर्णननियमेन तदन्यरसं प्रति न कारणत्वमित्याशयः ॥ ७३१ ॥

कश्चित्प्रियामाह—

शातोदरि ! शीतकरप्रतिफलमधिकेलिवापि सम्भाव्य ॥
तव वदनप्रतिबिम्बान्वितसुषमालयमिवादित्सुम् ७३२

वापीप्रतिबिम्बितमिन्दुमण्डलं केलिसमयप्रतिफलितनायिकामुखसम्बन्धानुरोधाज्जललग्नमुखवृत्तिलावण्यलेशग्रहणेच्छाहेतुकत्वेन सम्भाव्यते । एतेन चन्द्रस्य मुखसादृश्यानाश्रयत्वं सूच्यते । प्रतिफलस्य ग्रहणेच्छाभिधानेऽपि तद्वृत्तिषु विजातीयशोभाविरहेण तद्बिम्बवृत्तितदभावस्यापि सिद्धेः ॥ ७३२ ॥

कश्चिद्दोहदाय विहिताशोकचरणताडनां कांचिदिदमाह—

शिञ्जानेन समञ्जसमिह मञ्जीरेण खञ्जनाक्षि ! कृतम् ॥
क्षणमलिगुञ्जितविरही दुरवस्थः स्यादशोककुसुमौघः ॥

'शिजि' अव्यक्ते शब्दे इति तालव्यादिः । "योषेव शिञ्जे वितता विघन्वत्" इत्यादिदर्शनात् । आकस्मिकचरणतलताडनोत्पन्नानां पुष्पाणां तदानीं भ्रमरसंयोगाभावेन तद्गुञ्जितहीनतया शोभाविशेषहानिः स्यात् । नूपुरकूजितसम्पत्त्या तु उत्पत्तिकालावच्छेदेनैव भ्रमरध्वनिसजातीयध्वनिसम्बन्धात् तत्प्रयुक्तैजात्यहानिर्न सम्भवतीति भावः । एतेन यद्व्यतिरेको विजातीयशोभाव्यतिरेकप्रयोजकस्तद्राहितस्य जन्माप्यनुचितमेवेति ध्वन्यते ॥ ७३३ ॥

अभिसारस्थाने विलम्बादागतं नायकं काप्युपालभते—

**शिप्रातीरनिकुञ्जं सुभग ! विलम्बेन भूयसाऽऽयासः ॥**
**न महाकालाभ्यर्णे क्षणादयो ह्यादरीतुमर्हन्ति ॥७३४॥**

उज्जयिन्यां नदीविशेषः शिप्रा । तत्रैव महाकाललिङ्गविशेषः । पक्षे महाकालः=खण्डकालव्यापकसमयः । तथाचात्र महाकालसन्निधाने क्षणादीनामादरानर्हत्वात् महतैव कालेनात्र समागतोऽसीति युक्तमेवेति भावः ॥ ७३४ ॥

काचित्सखीमाह—

**शिशिरोपरमसुहूर्तों ऽप्यपूर्ववद्वेदनां तनुते ॥**
**सुमनोदिष्टारम्भोऽप्याघाता सखि ! तथैव रुजम् ॥७३५॥**

शिशिरान्त्यक्षणोऽपि अपूर्वामेव वेदनामादधाति । अथच न विद्यते पूर्वाक्षरं यत्र तद्वत् । आद्यशिशब्दत्यागे शिरसोऽपरमश्छेदः तत्क्षणवत्पीडां करोति । ("कालो दिष्टोऽप्यनेहापि समय" इत्यमरात्—सुमनोदिष्टः=पुष्पसमयः । ) "वसन्तः पुष्पसमय" इत्यमरः । तस्यारम्भः प्रथमक्षणोऽपि । अपूर्वामेव रुजं जनयिष्यति । अथच उक्तपदस्य अकारपूर्वत्वे असुमनोदिष्टेत्यादिपर्य-

वसानम् । प्राणमनोविभागक्षणवत् पीडां रचयिष्यतीति भावः। वसन्तस्योद्दीपकत्वातिशयात्तदाद्यक्षणे शिशिरान्त्यक्षणादधिक-पीडा युक्तेति द्रष्टव्यम् ॥ ७३५ ॥

काश्चिद्वियुक्त आह--

**शीतकिरणः प्रियाया ऽह्रस्वत्वमनायि मुखरुचा नियतम्॥**
**तद्विरहादधुना मामत एवाभीक्ष्णमुत्तपति ॥ ७३६ ॥**

ह्रस्वत्वम्=अपकर्षः । अथच शीतेत्यादिवर्णस्य ह्रस्वत्वे कृते शितकिरण इति सिद्धेस्तस्य तप्तमयूखत्वलाभे तद्विरहित-स्य ममोत्तापजननं चन्द्रस्य युक्तमेव । उक्तार्थबाधवारणाय--तद्विरहादिति ॥ ७३६ ॥

उत्सवदिने प्रसाधितासु सपत्नीषु स्नानादिसंस्काररहितां कांचित्तस्याः प्रियानुरागविषयत्वाभिज्ञा सखी प्राह--

**(१)शुद्धमपि भाति मिथ्या भवदीयविपक्षयौवनं बाले!॥**
**भासि पुनरात्मभूना मलीमसापि त्वमवदाता ॥७३७॥**

शुद्धं=स्नानादिसंस्कृतमपि। मिथ्यात्वं=प्रियप्रणयविषयत्वा-भावः ।मलीमसत्वं=वस्त्रादिनिबन्धनम् ।आत्मभूता=स्वाभेदवत्त्वेन प्रतीयमानत्वात् । अवदाता=उज्ज्वला । तद्धेतोरनुरागस्य त्व-य्येव सम्भवादिति भावः । अथच शुद्धमज्ञानसहितं वस्तु मि-थ्याभूतं भवति । चिद्भिन्नस्य जडत्वेनाऽऽवरणकृत्याभावादज्ञानाविषयत्वानभ्युपगमात् मिथ्यात्वोपगमाच्चेति भावः । आ-त्मा त्वज्ञानविषयत्वाश्रयत्वानपि अवदातः शुद्ध एव भवति,तत्का-र्यानन्वयादित्यौपनिषदपक्षध्वनिः ॥ ७३७ ॥

इति शाकारव्रज्या ॥

---

(१)इयमार्या का० रा० पु० पुस्तके नास्ति ।

विरहिण्याः कुशलं पृच्छन्तं नायकं कोऽप्याह--

**षण्णां वृत्तिनिरोधात्करणानां तां वियोगेन ॥**
**जानीहि सुभग! किंवापल्लवयामो मृषावाचम् ॥७३८॥**

त्वद्वियोगेन षण्णां=षट्सङ्ख्यानां करणानां मनोघ्राणरसनचक्षुस्त्वक्श्रोत्राणाम् । वृत्तिनिरोधात्=स्वयोग्यविषयग्रहणासामर्थ्यात् । एतेन मूर्च्छावस्थाद्योतनम् । अथ चेन्द्रियाणां वृत्तिनिरोधादुक्तस्वरूपात् विशब्दस्य प्रथमयोगेनोपलक्षितां षण्णां विषण्णामिति यावत् । तादृशीं जानीहि । किमधिकेन वचनप्रपञ्चेन । एतावतैव विरहवेदनाविशेषनिवेदनसम्भवादिति भावः । षण्णामिति शब्दस्वरूपानुकरणम् । पश्चाद्विशब्दयोगे विषण्णेतिशब्दलाभे ततोऽर्थबोधः ॥ ७३८ ॥

कश्चिद्वसन्तस्य मदनसमुद्दीपकत्वमाह--

**सहकारिता सुरभिणा धूनोति सर्वानुभूतिसंसिद्धम् ॥**
**मदनेन भुवनविजये कर्तव्ये सति रसिकजनगम्यम् ७३९॥**

सहकारा=आम्राः सन्त्यस्य सहकारी । अन्यदा तेषां सर्वेऽपि कुसुमाद्यभावात् । अथच सहकारी=कारणविशेषः । उभयोरभेदारोपः । तथाच किञ्चित्कार्यनिरूपितकारणत्वादाम्रस्य सर्वविजयसामर्थ्यादिति भावः ॥ ७४९ ॥

कश्चित्पदभ्रंशे कस्याप्यादरो न स्यादित्याह--

**सत्वं नैसर्गिकमपि कलयञ्छ्रेयान्परस्य न पदान्ते ॥**
**अपदान्तस्य हि पाणिनिरुवाच मूर्द्धन्यतां तस्य ॥ ७४० ॥**

सत्वं प्रभावविशेषः तद्वानपि पुरुषः पदावसाने अन्यनिष्ठप्राशस्त्यप्रकारकज्ञानविषयो न भवत्येव । पक्षे सत्वं=सकाररूपत्वम् । यतः पाणिनिः अपदान्तस्य तस्य=सकारस्य मूर्द्धन्यतां=षकारादेशं प्राह । "अपदान्तस्य मूर्द्धन्यः" ( ८ । ३ । ५५ )

इत्यधिकृत्य–"आदेशप्रत्यययोः"(८ । ३ । ५९) इति सूत्रात्। न हरिस्तत्रेत्यत्र। अपदान्तस्य षत्वविधानात्। तेन सत्त्वत्तोऽपि पदान्ताभाव एव मूर्द्धन्यता=श्रेष्ठत्वं न त्वन्यथेति उक्तार्थलाभ इति भावः ॥७४०॥

उत्सवान्यदिनेऽस्य दर्शनपथानवताराद्दिनमात्रदर्शनस्य च साधारण्याद्रागविरहमाशङ्कमाना नायकं दूती प्राह—

**सति पूर्वमपि निमित्ते गृहीतसमयापवादेन ॥**
**पर्वण्येवावसरं लभते जातेष्टिरिव बाला ॥ ७४१ ॥**

त्वद्दर्शननिमित्तानुरागसत्त्वेऽपि जनापवादभयेन अगृहीतः=त्वद्दर्शनाभाववान् कृतः समयो यस्यास्तादृशी। पर्वाणि प्रस्तावं लभते। तत्कालीनदर्शनेऽपवादानुदयात्। अथच "वैश्वानरं द्वादशकपालं चरुं निर्वपेत्पुत्रे जाते" इति विहितेष्टेरपि पुत्रजननरूपे निमित्ते सत्यपि जातकर्मपूर्वकाले स्तनपाननिषेधादिष्टेश्च विलम्बसाध्यत्वात्तत्पर्यन्तं स्तनपानविरहे संस्कार्यपुत्रजीवनानुपपत्त्या प्रधानबाधापत्तेरिष्टिः सामान्यकाले पर्वण्येव दर्शपूर्णिमान्यतररूपेऽवकाशं लभते इति पूर्वमीमांसायां निर्णीतम्। ( अ० ४। पा० ३ अधि० १८ ) ॥ ७४१ ॥

बाह्यानुरागव्यापारपरं नायकं काप्याह—

**सद्भावोऽस्मद्विषयः सुभग ! व्यवहारमात्र उपयुक्तः ॥**
**आनन्दमये तु जने स तात्त्विकोऽनन्यसामान्यः ॥७४२॥**

सद्भावः=प्रणयः। व्यवहारः=अस्यामप्ययं सपत्न्यन्तरतुल्यवृत्तिरिति प्रवादः। कारणे कार्योपचारात्–आनन्दमय इति। यद्वा त्वदनुरागानन्दप्रचुरे जने=सपत्नीरूपे, तात्त्विकः=स्वरूपेण त्वदात्मनि वर्तमानः। अस्मद्विषये त्वनुरागानुमापकबाह्यव्यवहारमात्रं न त्वनुरागः। अथ चात्मभिन्ने सत्ता व्यावहारिकी आन-

न्दमये आत्मनि तु पारमार्थिकी । ब्रह्मज्ञानेतराऽबाध्यत्वं व्यावहारिकत्वम् शुद्धचिद्रूपत्वं च सत्तायाः पारमार्थिकत्वमिति वेदान्तिन इति समासोक्तिः ॥ ७४२ ॥

विपक्षनायिकायां नायकस्याश्लेषादिकर्मण्यज्ञाततत्त्वायां तत्त्वज्ञानपरा सखी प्राह—

**सखि ! विपरीतसमूहालम्बनबोधे प्रियस्य पद्मदृशोः ॥**
**फलताद्विरहभृतोरपि युक्तं विपरीतधीरासीत् ॥ ७४३ ॥**

विपरीतं=परस्परस्मिन् परस्परभ्रमरूपम्, समूहालम्बनम्=उभयविषयकज्ञानम् । यथा गुञ्जावन्ह्योर्वह्निगुञ्जे इति । नायिकाद्वयस्यैकत्रावस्थिता उक्तभ्रमवशादन्यस्यामेवाश्लेषादि कृतं न तु प्रियतमायामिति प्रियस्य विपरीतज्ञानम् । आश्लेषादिसम्पत्तावपि अन्यभ्रमग्राहकतया तस्या आश्लेषाद्यभावज्ञानं स्वविषयकरागानवबोधात् । प्रियतमायाश्चाश्लेषाद्यभावेऽपि स्वस्मिन्ननुरागविशेषसम्भावनात्स्वस्यैवाश्लेषादिज्ञानमिति तयोरपि विपरीतज्ञानमिति त्रयाणामपि तदंशे साम्यमिति भावः ॥ ७४३ ॥

कश्चिद्विरही प्राह—

**सामानाधिकरण्यं संयोगस्य ध्रुवं स्वविरहेण ॥**
**तस्यापि तेन तद्यदि जितं तदा स्याद्विरहवाह्निः ॥७४४॥**

संयोगस्याव्याप्यवृत्तित्वात्तस्य स्वात्यन्ताभावसामानाधिकरण्यमिति भावः । एवं यदि संयोगात्यन्ताभावस्यापि संयोगसामानाधिकरण्यं नियतं स्यात्तदा विरहिणां हितं स्यात् । स्वप्रियसंयोगात्यन्ताभावसत्त्वेऽपि तत्संयोगस्यापि सत्त्वे वियोगसमानकालीनतदत्यन्ताभाववदव्याप्यवृत्तेस्तस्य दुःखानुत्पादकत्वात् । एवं विरहवह्निरिति वस्तुगत्यभिप्रायः । तथासति विरह एव न स्यादिति भावार्थः ॥ ७४४ ॥

कश्चित्प्रियाया अतिशयं वर्णयति—

(१)सुकुमारत्वं सौरभमासेचनकत्वमक्षिण सममेव ॥
सर्वान्तःस्थेति परं मालातो भिद्यते बाला ॥ ७४५ ॥

"तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" इत्यमरः । सममेवेति मालाबालयोरित्यर्थः । (सर्वान्तःस्था=)सर्वेषां सहृदयानामन्तःकरणवृत्तिः स्वविषयकानुरागवत्त्वसम्बन्धेनेत्यर्थः । मालायास्तु भूषणत्वाद्बहिरेव संयोग इति वैषम्यम् । अथच सर्वे वर्णा अन्तःस्थसंज्ञा यस्याः । वकारलकारयोस्तत्संज्ञत्वात् । मालायां तु लकार एवान्तःस्थो न तु मकार इति न सर्वान्तःस्थत्वमिति भावः । शब्दवृत्तेरुक्तधर्मस्यार्थवृत्तित्वारोपादुक्तार्थसिद्धेः ॥७४५॥

(२)सुभग! नितान्ताकृष्टं भवता कुतुकेन जातभङ्गमिव॥
तस्या हृदयं वीरुध इव विटपं याति न स्थानम्॥७४६॥

कश्चिदभिनवनायिकायामनुरागवानाह—

सुभ्रूरियमेव धियां भ्रमत्वमन्याङ्गनाविषयिणीनाम् ॥
यस्मादिदमवगाहे भवत्यकिंचित्करत्वमेतासाम् ॥७४७॥

नायिकान्तरविषयकज्ञाननिष्ठमप्रामाण्यम् । इयं च नायिकेति द्वयमभिन्नमेव । यत एतद्विषयकज्ञानोत्पत्तौ नायिकान्तरविषयज्ञानानामकिञ्चित्करत्वं भवति स्वविषयविषयकेच्छाद्यनुत्पादकत्वात् । अप्रामाण्यज्ञानास्कन्दितमपि ज्ञानं बाधादावसमर्थं भवतीति भावः ॥ ७४७ ॥

कस्यचिदर्थे दूती नायिकामाह—

(३)सुन्दरि! भावनयासौ भवतीमुल्लिख्य दिक्षु सकलासु ॥
देशविशेषनिवेशप्रयासमक्ष्णोर्निराकुरुते ॥ ७४८ ॥

(१) इयमार्या का० रा० पु० पुस्तके नास्ति ।

(२) आदर्शपुस्तके अस्या आर्याया व्याख्या नास्ति ।

(३)एतदाद्यार्यात्रयं का० रा० पु०पुस्तके नास्ति ।

भावना=मानसज्ञानधारा। प्रमात्मकत्वद्विषयकचाक्षुषं देशविशेषचक्षुःसंयोगसापेक्षमेव। भावनया तु यत्रैव चक्षुरुपरिनिपातस्तत्रैव त्वत्साक्षात्कार इति सौकर्यसिद्धिदोषवशाद्विशेष्यभेदेऽपि त्वत्प्रकारकचाक्षुषोत्पत्तेरिति भावः। नायिकान्तरे सारूप्यदर्शनादपि तद्भ्रमः स्यात्। चक्षुःसंयुक्तविषयमात्रे तु भावहाववशादेव त्वच्चाक्षुषमित्यर्थः॥ ७४८॥

कश्चित्प्रियामाह—

**सुरभिः श्वसिते हसिते शुचिरलिकेऽभ्रं शरद्वयसि रम्या॥**
**हिमभङ्गे तव भामिनि! न त्वयि कस्मिन्ननेहासि स्नेहः॥७४९**

सुरभिः=वसन्तः। शुचिः=ग्रीष्मः। अभ्रं=मेघः। शरत्=स्पष्टा। हेमन्तशिशिरयोरैक्यविवक्षा प्रयाजानुमन्त्रणमन्त्रेषु "पञ्च ऋतवो हेमन्तशिशिरयोः समासेन" इति श्रुतेः। अनेहसीति विषयत्वे। त्वयीति वृत्तित्वे। अथच सुरभिशुचिपदे गुणपरे। अभ्रम्=अभ्रकसंज्ञो धातुः तत्तिलकस्य स्त्रीभिर्धारणात्। शरद्=वर्षः षोडशादिः। हिमं=कर्पूरम्। त्वयीति विषयत्वं सप्तम्यर्थः। सर्वदापि त्वद्विषयकस्नेहोऽस्ति सहृदयानामिति भावः॥ ७४९॥

कश्चित्प्रियाया दिव्यस्त्रीभ्योऽपि विशेषमाह—

**सौन्दर्यस्य मृगीदृशि तस्यां सीमानमुपदधानेन॥**
**कुण्डलितमप्सरःकुलमभितो लेखान्वयाद्विधिना॥७५०**

सीमा=अतिशयकक्षा। लेखा=देवाः। सर्वासामप्सरसां लेखान्वयविधानात्। उभयतो लेखाकरणस्य च मध्यलिखितवस्तुवैयर्थ्यसूचकत्वात्। लेखान्वयव्याजेन ताः कुण्डलीकृता इति भावः। कुण्डलपदमत्र तद्वत्परम्। यद्वा कुण्डलवत्पदादेव "तत्करोति" इति णिच्। "णाविष्ठवत्प्रातिपदिकस्य" इति वार्तिकेन मतुपो लोप इति बोध्यम्॥ ७५०॥

कश्चिच्छरदं वर्णयति—

सन्निदधतं हिमऋतुं विलोक्य शरदभ्रदम्भेन ॥
सङ्गृह्यन्ते दिग्भिस्तूलानां राशयः परितः ॥ ७५१ ॥

शरदव्यवहितोत्तरागामिनि हेमन्ते शैत्यप्रतीकारार्थं शरन्मेघव्याजेन तूलपुञ्जानां सङ्ग्रहः क्रियते इत्यपन्हुतिः । सप्त ऋषीणामित्यादिदर्शनात् "ऋत्यक" ( ६।१।१२८ ) इति प्रकृतिभावस्य समासेऽपि प्रवृत्तिः । एतेन सन्निहितोत्तरसमयभाविदुःखप्रतीकारहेतौ प्रथममेवाभिज्ञाः प्रवर्त्तन्त इति सूचितम् । विलोक्येति ज्ञानपरम् ॥ ७५१ ॥

कश्चिदिदमाह—

संवरणैकासक्ता सहस्ररुचिलब्धतनुजन्मा ॥
दिव्याकारमनोज्ञा सा किल तपतीति किंचित्रम् ॥७५२॥

संवरणं=रागसत्त्वेऽपि तत्प्रकाशनाभावः । बह्वीभिरिच्छाभिः प्राप्तस्तनुजन्मा=कामो मद्विषयको यया । एतेनानुरागसद्भावसूचनम् । दिव्येत्यादिना तदलाभस्य तापजनकत्वोपपादनम् । एतादृशी सा मां तपतीति=स्वप्राप्तिव्यतिरेकेण दुःखाकरोति । अथच संवरणनाम्नि नृपेऽनुरक्ता सूर्यकन्यका दिव्यरूपा तपतीसंज्ञेति बभूवेति भावः ॥ ७५२ ॥

इति सकारव्रज्या ।

कश्चिदिदमाह—

हलिक इति श्रवणादतितुष्टो गुणवानुदात्तश्च ॥
इत्याकर्ण्य सरोषो हलिकवधूं शुष्कशाब्दिको हसति ७५३

हलिको गुणवानुदात्तश्चेति कापि हलिकेऽनुरक्तायां हालिकभार्यायामभिदधानायां हलिक इत्यंशं श्रुत्वा हलि हल्प्रत्याहारमध्ये ककार इत्यर्थाभिप्रायमाकलय्य परितुष्टो गुणवान् उदा-

त्तश्च इति विशेषणद्वयं श्रुत्वा गुणोदात्तयोर्व्याकरणे "इको गुणवृद्धी (१।१।३) "अचश्च" (१।२।२८) इति सूत्राभ्यामज्मात्रधर्मत्वात् ककारस्य कथं तद्वत्त्वमिति उक्तेरसङ्गतिमालोच्य तस्या मूर्खत्वाभिप्रायेण वक्तृवैशिष्ट्याद्यनाकलनात्केवलवैयाकरणतया तदाभिप्रायानवबोध इति। शुष्केति शुष्कपदं तदतिरिक्तवासनारहितार्थकम् ॥ ७५३ ॥

कश्चिन्नामसाम्येऽप्यनुरागः स्यादित्याह—

हरिणाशेषशरीरो मध्येऽपि विधुर्दधौ हरिणम् ॥
तेन गुणान्तरयोगः समभवदित्यन्यदेवैतत् ॥ ७५४ ॥

"हरिणः पाण्डुरः पाण्डुः" इत्यमरः। पाण्डुरसर्वाङ्गतया हरिणपदसाम्येन मध्येऽपि हरिणं=मृगमेव धृतवान्। तद्धारणेन गुणान्तरस्य=नीलत्वरूपस्य सम्बन्धः संवृत्त इति त्वन्यदेव। हरिणत्वबुद्ध्यैव तद्धारणात्। नीलत्वोपपत्तेश्च तदुत्तरकालीनत्वात्तद्धेत्वन्तर्गतत्वेन—अन्यदित्युक्तम्। एवंचाभिमतनायकसाम्यबुद्ध्याप्यत्रानुरागात्कस्याश्चिज्जनापवादरूपकलङ्कोत्पत्तिरिति सूच्यते ॥ ७५४ ॥

कश्चित्प्रियामाह—

हस्तातिशयनिरूपकमरविन्दं सरसि पश्यामः ॥
भवदतिशयावगमकं तत्पुनरीक्षामहे पाणौ ॥ ७५५ ॥

यत्प्रतियोगिकोत्कर्षो हस्ते तिष्ठति तादृशं पद्मं सरसि तिष्ठति। साधुलक्षणतया त्वदतिशयव्यञ्जकं पद्मं तु त्वत्कर एवास्ति। एवंचावयवोत्कर्षनिरूपकमन्यत्रावयव्युत्कर्षनिरूपकं त्वदवयव एव निवसतीति भावः। "श्रीवत्सपद्मशङ्खाख्यगजवाजिनिवेशनैः" इति प्रकृत्य—हस्तन्यस्तैर्नृपश्श्रिय" इति भविष्यम् ७५५॥

कश्चिद्वैरिनिमित्तेऽपि वैरं भवतीति निदर्शयन्नाह—

**हरिदश्वं संवृण्वन्मुदिरो हरितोऽपि संवृणुते ॥**
**यो यत्र बद्धवैरस्स तदीयेऽपीति किं वाच्यम् ॥ ७५६ ॥**

"हरिदश्वोष्णरश्मय" इत्यमरः । हरिद्वर्णा अश्वा यस्य तथा सूर्यः । अत्र हरितो दिश एवाश्वा अस्येति अर्थान्तरमादाय दिग्वृत्तिसम्बन्धप्रतियोगित्वप्रतीतेर्हरिदश्ववैरिणा मेघेन तत्सम्बन्धिनीनां दिशामप्यावरणमभिहितम् । स इति वैरिसमवायग्रहणम् । तदीयवैराविषयीभूतसम्बन्धिनिमित्तेऽपि वैरं भवतीति किं वाच्यं प्रसिद्धत्वादित्यर्थः ॥ ७५६ ॥

कश्चिद्भुजस्वस्तिकतिरोहितवक्षोरुहां भामिनीमाह—

**हाटककटकं दोर्भ्यां स्तनसंवरणेन तदुपरि नयन्ती ॥**
**वैशद्यं नयसि तयोर्वरवर्णिनि ! रत्नसानुत्वम् ॥७५७॥**

बाहुभ्यां स्तनावरणसमये बाह्वाभरणसुवर्णकटकस्य स्तनयोरुपरि सम्बन्धात्तयोः सुमेरुत्वस्पष्टीभावः । तत्रैव सुवर्णशिखरत्वसम्भवादिति भावः । अवयवनिर्णयद्वाराप्यवयविनिर्णयोपपत्तेः । करादिनिर्णयेन च पुरुषनिर्णयस्येवेति हृदयम्॥७५७॥

विरहिणी सखीमाह—

**हालाहलं विलक्षणमयमिन्दुरिति प्रतीतमालि ! मया ॥**
**शितिकन्धरेण यस्मात्स्वस्यैवानायि शेखरताम्॥७५८॥**

विलक्षणं=विषान्तरापेक्षयोत्कृष्टं तापकत्वातिशयात् । अयमिति तज्जन्यतापस्य स्वानुभवविषयत्वलाभात्स्वरूपातिस्वनिरासाय(?)। आलीति विषयित्वाभावलाभार्थम् । विषान्तरानुभवलाभार्थं—शितिकन्धरेणेति । कालकूटभक्षणेन तस्य नीलकण्ठत्वं सम्पन्नमिति पुराणादिसिद्धत्वात् । तदपेक्षयाधोदेशावस्थाने तदुत्कर्षासिद्धेः—शेखरतामिति । मूर्द्धावस्थाने त-

दपेक्षयोत्कर्षावगमात्-स्वस्येति। तथाच चन्द्रः कालकूटपतियोगिकोत्कर्षवान् तत्स्थानोत्कृष्टस्थानाश्रितत्वादिति सामान्योपाधिमूलकानुमानेन विषद्वयसाधारणधर्मजातीयधर्मविशेषवत्त्वरूपतदुत्कर्षसिद्धिरिति भावः ॥ ७५८ ॥

कश्चित्प्रियामाह—

**हारस्तदुरोरुहयोराभरणं तस्य मेरुरेकोंऽशः ॥**
**जिह्मयति नाभिदधतः केन तयोस्तन्निरूपितं साम्यम् ७५९**

स्तनालङ्करणतया हारस्य ततो न्यूनपरिमाणत्वमविवादम्। ततोऽपि मालाग्रथनसूत्रभागद्वयाग्रगुम्फितरत्नस्य मेरुसंज्ञस्य सुवर्णाद्रितादात्म्याध्यवसितस्य तथात्वम्। अवयवस्यावयव्यपेक्षया न्यूनत्वनियमात्। तथाच स्तनापेक्षाल्पत्वाश्रयहारापेक्षयाऽल्पस्यैव मेरोः कथं स्तननिरूपितसादृश्यमिति भावः ॥ ७५९ ॥

कश्चित्परकीयासक्तं नायकमाह—

**हानिं दधति स्वीया बिभ्राणेऽभ्युदयमीशितरि यस्मिन् ॥**
**तस्य कलङ्कव्याप्यः परिणामः शशधरस्येव ॥ ७६० ॥**

यस्य स्वामिन उपचये तन्निष्ठस्वामित्वनिरूपकस्वत्ववतः पदार्थस्यापचयो भवति तस्यान्ततो गत्वाऽवश्यं कलङ्को भवति। यथा शुक्लपक्षे यथोत्तरमुपचीयमाने तारापतौ चन्द्रमसि तदुपचयोत्कर्षेण तदीयानां ताराणामपचयोत्कर्षे पूर्णिमायां तस्य कलङ्कोत्कर्ष इति भावः। उदाहरणालङ्कारः। सामान्यविशेषयोर्भेदाभावेन भेदगर्भोपमानुपपत्तेः। इवशब्दस्यावयवावयविभावार्थकत्वादिति केचित्। उपमैवेति प्राञ्चः ॥ ७६० ॥

**इति हकारव्रज्या ॥**

कश्चित्केशपाशसौन्दर्यहृतहृदय आह—

क्षामोदरि ! यदुदवमत्स्वर्भानुः सोममप्यशितम् ॥
तत्तव धम्मिल्लतनुः (१)प्रायश्चित्तं प्रगृह्णाति ॥ ७६१ ॥

कृशोदरीति यौवनसूचनम् । "तमस्तु राहुः स्वर्भानुः" इत्यमरः । सोमः=चन्द्रो लताविशेषरसश्च । त्वत्केशपाशरूपो भूत्वा ( प्रायः= ) प्रायेण चित्तं=हृदयं ( प्रगृह्णाति= ) वशीकरोति । इष्टावपि सोमवमननिमित्तकप्रायश्चित्तस्य करणात् । "सौमेन्द्रं चरुं निर्वपेद्यः सोममुद्वमेत्" इति श्रुतेरित्यर्थः॥७६१॥

ग्रन्थसमाप्तिं सूचयन् प्रचाराविच्छेदमाशास्ते—

क्षालितमधुवैरिपदा कलावदाभरणमूर्द्धन्या ॥
आर्य्यासप्तशतीयं प्रचरतु गङ्गेव जगति चिरम् ॥७६२॥

सप्तानां शतानां समाहारः सप्तशती । "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट" इति स्त्रीत्वम् । "द्विगोः"(४।१।२१)इति ङीप् । क्षालितानि स्वरूपतोऽर्थतश्च विशुद्धानि अत एव मधुवैरिभूतानि मध्वपेक्षयाप्युत्कृष्टमाधुर्यशालीनि पदानि सुप्तिङन्तरूपाणि यस्याः । पक्षे स्वजलसंयोगात्कृतं मधुदैत्यशत्रोर्भगवतः पदं यया । कलावतः=तद्विदो विदग्धास्तेषामाभरणोत्तमभूता । कुण्डलादीनां तदनलङ्कारकत्वात् । पक्षे कलावान्=चन्द्रः स आभरणं यस्य स शिवः । तस्य मूर्द्धावस्थायित्वात् ॥ ७६२ ॥

सत्काव्यादपि सहृदयानामेव चमत्कारो नान्येषामित्यनभिज्ञैरनादरणेऽपि न क्षतिरित्याशयवान् प्राह—

क्षीराकूपार इव प्रमथ्यमानोऽपि काव्यबन्धः सन् ॥
सुधया धिनोति विबुधान्सम्बध्नाति श्रमेण विपरीतान्॥

स्वच्छत्वगाम्भीर्यादिधर्मवत्तया दुग्धसमुद्रवत् सन् काव्यबन्धः प्रमथ्यमानः=तत्तद्विषयमर्यादया विचार्यमाणोऽपि । पक्षे स्पष्टम् । विबुधान्=विदग्धान् । सुधास्वादनानन्दसजातीयानन्दशालिनो विदधाति । अहृदयांस्तु श्रममात्रेण योजयति । क-

(१)धम्मिल्लमिषात् इति पाठः का० रा० पु० पुस्तके ।

थमपि तेषां चमत्कारानुदयात् । पक्षे देवान् सुधया योजयति । तद्भिन्नानसुरांस्तु श्रममात्रेण । तेषां सुधाप्राप्त्यभावेन मन्थनफलानन्वयात् । तथाच "भावना चेन्न हेतुः स्यात्स स्यान्मीमांसकादिषु" इति न्यायेन भावनाहीनानां न रसोत्पत्तिः किन्तु तद्गतामेवेत्यर्थः ॥ ७६३ ॥

अथ ग्रन्थकृदात्मानं प्रख्यापयति—

**क्षोणीमण्डलमण्डनपण्डितलक्ष्मीधरात्मभुवा ॥**

**विश्वेश्वरेण विहिता सप्तशती सम्यगार्याणाम् ॥७६४॥**

इति क्षकारव्रज्या ।

इति श्रीमल्लक्ष्मीधरपण्डितात्मजश्रीविश्वेश्वरपण्डितकृता आर्यासप्तशती सम्पूर्णा ॥

---

सप्तपदं तदधिकशतान्तरव्यवच्छेदपरम् । तेन सप्तशतादार्याणां किञ्चिदाधिक्येऽपि न क्षतिः । सम्यक्त्वोपपादकप्रसादलाभाय स्वजनकमुत्कीर्तयन्नाह—लक्ष्मीधरेति । (लक्ष्मीः=)सर्ववाङ्मयरहस्यावगाहनसम्भवोऽतिशयविशेषः।यदभिप्रायेण"शोभतेऽस्य मुखं य एवं वेद"इति गर्गत्रिरात्रब्राह्मणवाक्ये योग्यानुपलब्धिवादं निराकुर्वता भगवता जैमिनिनाऽर्थवादाधिकरणे "विद्याप्रशंसा" (१।२।१।सू०१९)इति सूत्रितम् । गङ्गाधरादिवत्साधुत्वम् । एतादृशार्थमेव व्यञ्जयन्नाह—क्षोणीत्यादि । पण्डा=सदसद्विवेकसमर्था बुद्धिः सञ्जाता एषां ते पण्डिताः । "पण्डा प्रज्ञाविदाशर्वा" इति भागुरिः । किञ्चित्तन्मात्रापेक्षोत्कर्षवारणाय—मण्डलेति । साम्यमात्रवारणाय—मण्डनेति । तथाच तच्चरणपद्मपरागपरिशीलनपरम्पराविजृम्भितमेवैवंविधसामर्थ्यं मदीयमिति भावः ७६४॥

रम्यार्थानामनुगुणतया नीततत्तत्पदार्थ-
भूयोग्रन्थाकलनविलसद्गुम्फितानेकभावम् ।
सङ्क्षिप्तार्थं सहृदयचमत्कारधारानिदानं
स्वीयार्याणां विवरणमुदाहारि विश्वेश्वरेण ॥

इति श्रीविश्वेश्वरपण्डितकृतार्यासप्तशतीव्याख्या समाप्ता ॥

---

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A.

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS

NOS. 315, 317 & 347.

# आर्यासप्तशती

पर्वतीयश्रीविश्वेश्वरपण्डितविरचिता

तत्कृतयैव टीकयोपेता ।

नेपालदेशीय-

विष्णुप्रसादभण्डारिणा

संशोधिता ।

# ĀRYĀSAPTĀSATI

By

PARVATIYA SRI VISVESVARA PANDIT.

With a commentary by the author,

*Edited by* Vishnu Prasada Bhandari,

*of Nepal.*

FASCICULUS I to III—१से ३.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1925.

## Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

# भूमिका ।

श्रीविश्वेश्वरपण्डितानिर्मितेयमार्यासप्तशती निजप्रसादगाम्भीर्यादिगुणगणैः स्वसदृशानितरान् प्रबन्धानतिशेत इत्यत्र नास्ति सन्देहलेशोऽपि । स्फुटीभविष्यतितरां चैतदस्या नेत्रपथपथिकीकरणेन काव्यीयभावनाभावितहृदयानां सहृदयानाम् ।

पण्डितप्रकाण्डस्यास्य समयादीतिवृत्तमन्विष्याप्यलभमानो विषीदन् यथाश्रुतां किंवदन्तीमेव तावत्पुरस्करोमि ।

अस्ति कूर्माचलेषु विशालशालतमालादितरुमालोपलालितोपान्ता नभस्तलचुम्बिशिखरशिखरिशोभमानसन्निवेशा पुरन्दरपुरीव समुत्तुङ्गविबुधमन्दिरसहस्रविराजिता अल्मोडानाम्नी नगरी । तस्या उत्तरादिशि पञ्चषक्रोशान्तराले श्रौतस्मार्तकर्माचरणपरायणानिगमागमपारदृश्वभिर्भूसुरनिकरैः परीतः पटियानामको ग्रामः । तत्र पाण्डेयकुलावतंसो विविधानवद्यविद्याविद्योतितान्तःकरणो लक्ष्मीधरो नाम द्विजाग्रणीरासीत् । सत्कर्मनिरतस्यापि तस्य दुरदृष्टवशात् सन्ततिसुखविहीनस्य । भूयान्समयो व्यतीयाय । आयुषः समतीते भूयसि भागे निरपत्यतादुःखविदूयमानमना नीरजस्कया पतिव्रतया समं प्रणतजनताशङ्करेण साक्षाच्छङ्करेण समधिष्ठितां गङ्गातरङ्गपवित्रितान्तां सुलभचतुर्थपुरुषार्थां वाराणसीं प्राप्य मणिकर्णिकासन्निधौ कृतवसतिः पुत्रप्रदं शिवमवधार्याशुतोषं प्रत्यहं पार्थिवलिङ्गसमर्चनेन समाराधयन् वर्षत्रयेण कोटिलिङ्गार्चनं सम्पादितवान् । कदाचन अवसन्नप्रायायां रजन्यां निद्रामुद्रितलोचनः स्वप्ने वृषारूढेन त्रिशूलवराभयकरेण । प्रसन्नवदनाम्बुजेन गिरिजाजानिना श्रीविश्वनाथेन सन्निधाप्य 'वत्स' पुत्रस्ते भविता इति दत्तवरो विबुध्य प्रातरेव लतामिव पुष्पितां गृहिणीं विज्ञाय परमांमुदमुदवहत् । जज्ञे च सप्तममास्येव शुभमुहूर्तेऽस्य पुत्ररत्नम् । विश्वेश्वरावतार एवेति मत्वा विश्वेश्वर इति नाम व्यधात् । पञ्चम एव वर्षे समुपनीतोऽयं विधिवदधीयानो नातिचिरात्सर्वासु विद्यासु विलक्षणं वैचक्षण्यं समवाप । अनन्तरं सर्वतन्त्रेषु स्वतन्त्रप्रज्ञोऽयं यथाक्रमं व्याकरणन्याय-

साहित्यादिषु सिद्धान्तसुधानिधि-तर्ककौतूहल-अलङ्कारकौस्तुभ-अलङ्कारकुलप्रदीप-अलङ्कारमुक्तावली-नैषधस्य भावप्रदीपाख्यटीका-रसचन्द्रिका-रसमञ्जरीटीका-मन्दारमञ्जरी-(गद्यकाव्य)रुक्मिणीपरिणय-आर्यासप्तशतीप्रभृतीन् बहून् विलक्षणान्निबन्धान् निबबन्ध । सोऽयं विद्वच्छिरोमणिः १६६६ खिष्टाब्दे वर्तमानात् रसगङ्गाधरादिकर्तुः पण्डितराजजगन्नाथादर्वाचीन इति अलङ्कारकौस्तुभे कतिपयस्थलेषु पण्डितराजस्य नामोल्लेखादध्यवसीयते ।

ग्रन्थकृन्निर्मितसङ्क्षिप्तव्याख्यासनाथां तामेतामार्यासप्तशतीं मुद्रयित्वा प्रचिकाशयिषुणा श्रीजयकृष्णदासगुप्तेनास्याः शोधनकृते सम्प्रार्थितोऽहं वरेलीनिकटस्थसम्भलग्रामनिवासिनः श्रीपण्डितश्रीधरशास्त्रिपन्तएम् ए ( प्रोफेसर वरेलीकालेज ) महाशयसकाशात् अशुद्धप्रायं सटीकमेकं तथा अपरमतिप्राचीनं शुद्धप्रायं मूलमात्रं काशिकराजकीयपुस्तकालयस्थं सुहृद्वरास्मिस्तेइत्युपाह्व पं०नारायणशास्त्रिप्रयत्नतो लब्ध्वा पुस्तकद्वयाधारेण प्रावर्तिषि शोधनकर्मणि । बहुषु सन्दिग्धस्थलेषु पूज्यपादश्रीमहामहोपाध्याय-पर्वतीयपण्डित-नित्यानन्दशास्त्रिदृष्टिपातने विशदीकृत्य सर्वथाऽपरिस्फुटस्थलेषु यथालिपिपाठस्थापनेन पाठभेदानामधः स्थापनेन च समशोधयम् ।

तदेवं सप्रयासं संशोधितेऽप्यत्र मानुष्यकनान्तरीयकदोषनिबन्धनानि स्खलितानि मर्षयिष्यन्ते । ग्रन्थतत्त्वमात्रग्राहिलैर्धीमद्भिः आशासे च केषांचिन्निकटे शुद्धं पुस्तकं भवेच्चेदनुग्रहीष्यते संसूचनेनायं जन इति ।

विनीतो—

विदुषां विधेयः

नेपालाभिजनो भाण्डार्युपाह्वो

विष्णुप्रसादशर्मा ।

